| शीर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रामाश्वमेध | – | पुराण | अपूर्ण | – | 7/12 | ४२ | संस्कृत | कागद | | | | |

M-2907

श्रीगणेशायनमः ॥ ॥श्रीगुरुचरणाभ्यांनमः श्रीजानकीवल्लभायनमः नारायणंनमस्कृत्यनरंचैवनरोत्तमम् दे
वींसरस्वतींचैवततोजयमुदीरयेत् १ व्यासउवाच ततःपरंधराधारंपृष्टवान्भुजगेश्वरम् वात्स्यायनोमुनिवरःकथामेतां
सुनिर्मलाम् २ वात्स्यायनउवाच शेषाशेषकथास्त्वत्तोजगत्सर्वलयादिकाः भूगोलश्चखगोलश्चज्योतिश्चक्रविनिर्णयः ३
महत्तत्त्वादिसृष्टीनांपृथक्तत्त्वविनिर्णयैः नानाराजचरित्राणिकथितानित्वयानघ ४ सूर्यवंशभवानांचराज्ञांचारित्रमद्भुतम्
तत्रानेकमहापापहरारामकथाकृता ५ तस्यवीरस्यरामस्यहयमेधकथाश्रुता संक्षेपतोमयात्वत्तस्तामिच्छामिसविस्तराम्
६ याश्रुतासंस्मृताचोक्तामहापातकहारिणी चिंतितार्थप्रदात्रीचभक्तचित्तप्रदोषदा ७ शेषउवाच धन्योसितोजवर्य
त्वंयस्यतेमतिरीदृशी रघुवीरपदद्वंद्वमकरंदस्पृहावती ८ वदंतिमुनयःसर्वेसाधूनांसंगमंवरम् यस्मात्पापक्षयकराररघुना
थकथाभवेत् ९ त्वयामेनुग्रहःसृष्टोयोरामःस्मारितःपुनः सुरासुरकिरीटोच्चैर्मणिनीराजितांघ्रिकः १० रावणारिकथावार्धौ
मशकोमादृशःकियान् यत्रब्रह्मादयोदेवामोहितानविदंत्यपि ११ तथापिभोमयातुभ्यंवक्तव्यंस्वीयशक्तितः पक्षिणःस्वग-
तिंश्चित्वाखेगच्छंतिसुविस्तरे १२ चरितंरघुनाथस्यशतकोटिप्रविस्तरम् येषांवैयादृशीबुद्धिस्तेवदंत्येवतादृशम् १३ रघुना
थसतीकीर्तिर्मद्बुद्धिंनिर्मलीकृतां करिष्यतिस्वसंपर्कात्कनकंत्वनलोयथा १४ व्यासउवाच इत्युक्त्वातंमुनिवरंध्यानास्ति-
मितलोचनः ध्यानेनालोकयांचक्रेकथांलोकोत्तरांशुभाम् १५ गद्गदस्वरसंयुक्तोरोमहर्षांकितांगकः कथयामासविशदांक-
थांदाशरथेःपुनः १६ शेषउवाच लंकेश्वरेविनिहतेदेवदानवदुःखदे अप्सरोगणवक्त्राब्जचंद्रमाःकांतिवर्धनः १७ सु
राःसर्वेसुखंप्रापुरिंद्रप्रभृतयस्तदा सुखंप्रापुःस्तुतिंचक्रुर्दासवत्प्रणतिंगताः १८ लंकायांचप्रतिष्ठाप्यधर्मयुक्तंबिभीषणम्
सीतयासहितोरामःपुष्पकंसमुपाश्रितः १९ सुग्रीवहनुमान्सीतालक्ष्मणैःसंयुतस्तदा बिभीषणोपिसचिवैरन्वगाद्विरहो
त्सुकः २० लंकामपश्यद्बहुधाभग्नप्राकारतोरणाम् दृष्ट्वाशोकवनंतत्रसीतास्थानंसुमूर्छह २१ शिंशपांतत्रद्दृ

क्षांश्च पुष्पितान् कोरकैर्युतान् राक्षसीभिःसमाकीर्णान्मृताभिर्हनुमद्भयात् २२ इत्थंसर्वंविलोक्याशुरामःप्राया
त्पुरींप्रति ब्रह्मादिदेवैःसहितोस्त्वीयस्त्वीयविमानकैः २३ देवदुंदुभिनिर्घोषान्शृण्वन्श्रोत्रसुखावहान् तथैवाप्सरसांनृ-
त्यैःपूज्यमानोरघूत्तमः २४ सीतायैदर्शयन्मार्गेतीर्थान्याश्रमवंतिच मुनींश्चमुनिपुत्रांश्चमुनिपत्नीःपतिव्रताः २५ यत्रयत्र-
कृतोवासःपूर्वंरामेणधीमता तान्सर्वान्दर्शयामासलक्ष्मणेनसमन्वितः २६ इत्येवंदर्शयन्तस्यैरामोद्राक्षीत्स्वकापुरी-
म् तस्याःपुनःसमीपेतुनंदिग्रामंददर्शह २७ यत्रवैभरतोराजापालयन्धर्ममास्थितः भ्रातुर्वियोगजनितंदुःखंचिन्हं-
वहन्बहु २८ गर्तशायीब्रह्मचारीजटावल्कलसंयुतः कृशागयष्टिदुःखार्तःकुर्वन्रामकथांमुहुः २९ यवान्नमपिनोभुंक्तेज-
लंपिबतिनोमुहुः उद्यंतंसवितारंयोनमस्कृत्यब्रवीतिच ३० जगन्नेत्रसुखस्वामिन्हरसेदुष्कृतंमहत् मदर्थेरामचंद्रोपिजगत्पू-
ज्योवनंययौ ३१ सीतयासुकुमाराग्यासेव्यमानोटवींगतः यासीतापुष्पपर्यंकसुखंसुप्त्वापदुःखिता ३२ यासीतारवि
संतापंकदापिप्रापनोसती मदर्थेजानकीसाचप्राप्तारण्यभ्रमंत्वहो ३३ यासीताराजवृंदैश्चनदृष्टावाकदाचन सासीता-
दृश्यतेनूनंकिरातैःकालरूपिभिः ३४ यासीतामधुरंत्वन्नंभोजितानुबुभुत्सती सासीताद्यवनस्थानिफलानिप्राथयत्य-
हो ३५ इत्येवमन्वहंसूर्यमुपस्थायवदत्यदः प्रातःप्रातर्महाराजभरतोरामवल्लभः ३६ यश्चोच्यमानःसचिवैःस-
मदुःखसुखैर्बुधः नीतिज्ञैःशास्त्रनिपुणैरितिप्रोवाचतान्नृपः ३७ अमात्यदुर्भगंमांकिंप्रब्रूतपुरुषाधमम् मदर्थेमेग्रजोरा-
मोवनंप्राप्यावसीदति ३८ दुर्भगस्यममप्रस्त्वापापमार्जनमादरात् करोमिरामचंद्रंचस्मारंस्मारंसुमंत्रिणः ३९ धन्या-
सुमित्रासुतरांवीसूःस्वपतिप्रिया यस्यास्तनूजोरामस्यचरणौसेवतेन्वहम् ४० यत्रग्रामेस्थितोनूनंभरतोभ्रातृवत्स-
लः विलापंप्रकरोत्युच्चैस्तंग्रामंसंददर्शह ४१ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेप्रथमोऽध्या
यः १ शेषउवाच अथतद्दर्शनोत्कंठाविकलीकृतचेतसा पुनःपुनःस्मृतोभ्राताभरतोधार्मिकाग्रणीः १ उवाचचह

नूमंतंबलवंतंसमीरजम् प्रस्फुरद्दशनव्याजचंद्रकांतिहृतांधकम् २ शृणुवीरहनूमंस्त्वंमद्गिरंभ्रातृनोदिनाम् चिरंतन
वियोगेनराद्गदीकृतविह्वलाम् ३ गच्छतंभ्रातरंवीरंसमीरस्यतनूद्भव मद्वियोगकृशांयष्टिंवपुषाबिभ्रतंहठात् ४ यो-
वल्कलपरीधत्तेजटांधत्तेशिरोरुहैः फलानांभक्षणमपिनकुर्याद्विरहातुरः ५ परस्त्रीयस्यमातेवलोष्टवत्कांचनंपुनः प्रजाः
पुत्रानिवोद्रक्षेद्वांधवोममधर्मवित् ६ मद्वियोगजदुःखाग्निज्वालादग्धकलेवरम् मदागमनसंदेशपयोवृष्ट्याशुसिंचतम् ७
सीतयासहितंरामंलक्ष्मणेनसमन्वितम् सुग्रीवादिकपींदैश्चरक्षोभिःसबिभीषणैः ८ प्राप्तंनिवेदयसुखवात् पुष्पकासनसंस्थि
तम् येनमेअनुजःशीघ्रंसुखमेतिमदागमात् ९ इतिश्रुत्वाततोवाक्यंरघुवीरस्यधीमतः जगामभरतावासंनंदिग्रामंनिदेशकृ
त् १० गत्वासनंदिग्रामंतुमंत्रिवृद्धैःसुसंयुतम् भरतंभ्रातृविरहक्लिन्नंधीमानुददर्शह ११ कथयंतंमंत्रिवृद्धान् राम-
चंद्रकथानकम् तदीयपदपाथोद्भमकरंदसुनिर्भरः १२ नमश्चकारभरतंधर्ममूर्तियुतंकिल विधात्रासकलांशेनसत्वेनै-
वविनिर्मितम् १३ तद्दृष्ट्वाभरतःशीघ्रंप्रत्युत्थायकृतानतिम् स्वागतंचेतिहोवाचरामस्यकुशलंवद १४ इत्येवंवदतस्त
स्यभुजोदक्षिणतोस्फुरत् हृदयाच्चगतःशोकोहर्षास्त्रैःपूरिताननः १५ विलोक्यताहृशंभूपंप्रत्युवाचकपीश्वरः निकटे-
हिपुरःप्राप्तंविद्धिरामंसलक्ष्मणम् १६ रामागमनसंदेशाप्लुतसिक्तकलेवरः प्रापयहर्षपूरंहिसहस्त्रास्योनवेव्म्यहम् १७
जगादममतन्नास्तियत्तुभ्यंदीयतेमया दासोस्मिजन्मपर्यंतरामसंदेशहारकः १८ वसिष्ठोपिगृहीत्वार्घ्यंमंत्रिवृद्धाःसुह-
र्षिताः जग्मुस्तेरामचंद्रंचहनुमद्दर्शिताध्वना १९ दृष्ट्वादूरात्समायांतंरामचंद्रंमनोरमम् पुष्पकासनमध्यस्थंससीतंसह
लक्ष्मणम् २० रामोपिदृष्ट्वाभरतंपादचारणसंगतम् जटावल्कलकौपीनपरिधानसमन्वितम् २१ अमात्यान् भ्रातृ
वेषेणसमवेषान्जटाधरान् निस्यंतपःक्लिष्टतयाकृशरूपानुददर्शह २१ रामोपिचिंतयामासदृष्ट्वैतांदृशंनृपम् अ-
होदशरथस्यायंराजराजस्यधीमतः २३ पुत्रःपदातिरायातिजटावल्कलवेषभृत् नदुःखताहृशंमह्यंवनमध्यगतासती

२४ यादृशंमद्वियोगेनचैतस्यपरिवर्त्तते अहोपश्यतमेभ्राताप्राणाप्रियतमःसखा २५ श्रुत्वामांनिकटेप्राप्तंमंत्रिवृद्धैःसुहर्षितैः दृष्टुंमांभरतोभ्येतिवसिष्ठेनसमन्वितः २६ इतिब्रुवन्नरपतिःपुष्पकान्नभसोंगणात् विभीषणहनूमद्भ्यांलक्ष्मणेनधृतादरः २७ यानादवततारासुविरहाक्लिन्नमानसः भ्रातर्भ्रातःपुनर्भ्रातर्भ्रातर्भ्रातर्वदन्मुहुः २८ दृष्ट्वासमुत्तीर्णमिमंरामचंद्रंसुरैर्युतम् भरतोभ्रातृविरहक्लिन्नधीमान्ददर्शह हर्षाश्रूणिप्रमुंचंश्चदंडवत्प्रणनामह २९ रघुनाथोपितंदृष्ट्वादंडवत्पतितंभुवि उत्थाप्यजगृहेदोर्भ्यांहर्षलोकसमन्वितः ३० उत्थापितोपिहिभृशंनोदतिष्ठद्रुदन्मुहुः रामचंद्रपदांभोजग्रहणासक्तबाहुभृत् ३१ भरतउवाच दुराचारंचदुष्टंमांपातिनंत्वंकृपांकुरु रामचंद्रमहाबाहोकरुणांकरुणानिधे ३२ यस्तेविदेहजापाणिस्पर्शक्रूरममन्यत सएवचरणोरामवनेबभ्रामममत्कृते ३३ इत्युक्त्वाश्रुमुखोदीनःपरिरभ्यपुनःपुनः प्रांजलिःपुरतस्तस्थौहर्षविह्वलिताननः ३४ रघुनाथस्तमनुजंपरिष्वज्यकृपानिधिः प्रणम्यचमहामंत्रीमुख्यानापृच्छसादरम् ३५ भरतेनसमंभ्रात्रापुष्पकासनमास्थितः सीतांददर्शभरतोभ्रातृपत्नीमनिंदिताम् ३६ अनसूयामिवात्रेःकिंलोपामुद्रांघटोद्भवः पतिव्रतांजनकजांममन्यततनामच ३७ मातःक्षमस्वमदघंमायादुर्वृत्तकारकम् त्वत्सदृश्यःपतिपराःसर्वेषांसाधकारकाः ३८ जानक्यपिमहाभागादेवरंवीक्ष्यसादरम् आशीर्भिरभियुंज्याथसमपृच्छदनामयम् ३९ विमानवरमारूढास्तेसर्वेनभसोगणे क्षणादालोकयांचक्रेनिकटेस्वपितुःपुरीम् ४० इतिश्रीपद्मपुराणेपातालखंडेरामाऽश्वमेधीयेशेषवात्स्यायनसंवादेद्वितीयोऽध्यायः २ शेषउवाच दृष्ट्वारामोराजधानींनिजलोकनिवासिनीम् जहर्षमतिमान्वीरश्चिरदर्शनलालसः १ भरतोपिस्वकंमित्रंसुमुखंनगरंप्रति प्रेषयामाससचिवंनगरोत्सवसिद्धये २ भरतउवाच कुर्वंतुलोकास्त्वरितंरघुनाथागमोत्सवम् मंदिरेमंदिरेरथ्याकृतकौतुकचित्रकाः ३ विपांसुकाराजमार्गाश्चंदनद्रवसेचिताः प्रसूनभरसंकुला हृष्टपुष्टजनावृताः ४ विचित्रवर्णध्वजभाचित्रितारविलखांगणम् मेधागमेधनुरिवपश्यंत्वे

तेवलीसुमुखः ५ प्रतिगेहंतुलोकानांकारयंत्वगरूक्षणम् यद्धूमंवीक्ष्यविशिखोनृत्यंकुर्वंतुलीलया ६ हस्तिनामम
शैलाभानाधोरणसूर्यंत्रितान् विचित्रयंतुबहुशोगैरिकाद्युपधातुभिः ७ वाजिनश्चित्रिताभूयःसुशोभंतुमनोजवाः
यद्वेगवीक्षणादेवगर्वंत्यजतिस्वर्हयः ८ कन्याःसहस्रशोरम्याःसर्वाभरणभूषिताः गजोपरिसमारूढामुक्ताभिर्विकिरंतु
च ९ ब्राह्मण्यःपात्रहस्ताश्चदूर्वाहारिद्रसंयुताः सुवासिन्योमहाराजंरामंनीराजयंतुताः १० कौसल्यापुत्रसंयोगसं
देशविधुरासती हर्षप्राप्नोतुसुषितातवीक्ष्यसुखलालसा ११ इत्येवमादिरचनाःपुरशोभाविधायकाः करोतुजनताहृष्टारा
मस्यागमनप्रति १२ शेषउवाच इतिश्रुत्वाततोवाक्यंसुमुखोमंत्रवित्तमः प्रययौनगरींकर्तुंकृतकौतुकतोरणां
१३ गत्वाथनगरींतांवैमंत्रीतुसुमुखाभिधः ख्यापयामासलोकानांरामागममहोत्सवम् १४ लोकाःश्रुत्वापुरीं-
प्राप्तंरघुनाथंसुहर्षिताः पूर्वंतदीयविरहत्यक्तभोगासुखादराः १५ ब्राह्मणादेवसंपन्नाःपवित्रादर्भपाणयः धौतोत्त
रीयरचिताजग्मुःश्रीरघुनायकम् १६ क्षत्रियायेशूरतमाधनुर्बाणधरावराः संग्रामेबहुशोवीराजेतारोययुरप्यमुम्
१७ वैश्याधनसमृद्धाश्चमुद्राशोभितपाणयः शुभ्रवस्त्रपरीधानाअभिजग्मुःपुरंप्रति १८ शूद्राद्विजेषुयेभक्ताःस्वी
याचारसुनिष्ठिताः वेदाचाररतायेवाअभिजग्मुःपुरंप्रति १९ येयेवृत्तिकरालोकाःस्वेस्वेकर्मण्यनुष्ठिताः स्वकंवस्तुस
मादाययगुःश्रीरामभूषितम् २० इत्थंभूपतिसंदेशात्प्रमोदप्लवसंयुताः नानाकौतुकसंयुक्ताआजग्मुर्मनुजेश्वरम्
२१ शेषउवाच रघुनाथोपिसकलैर्दैवतैःस्वस्वयानगैः परीतःप्रविवेशोच्चैःपुरींरचितमोहनाम् २२ प्लवंगाःप्लु
नैर्युत आकाशपथचारिणः स्वस्वशोभापरीतांगाश्चानुजग्मुःपुरोत्तमम् २३ पुष्पकादवरुह्याशुनरयानमथारुहत् सी
तयासहितोरामःपरिवारपरीवृतः २४ अयोध्यांप्रविवेशाथकृतकौतुकतोरणाम् हृष्टपुष्टजनाकीर्णामुत्सवैःपरिभूषिताम्
२५ वीणापणवभेर्यादिवादित्रैराहतैर्भृशम् शोभमानःस्तूयमानःसूतमागधबंदिभिः २६ जयराघवरामेतिजयसूर्य

रा०मे०
३

कुलांगद जयदाशरथेदेवजयताल्लोकनायक २७ इतिश्रृण्वन्शुभांवाचंपौराणांहर्षतांगताम् शुभदर्शनसंजातपुल
कोद्भेदशोभिनाम् २८ प्रविवेशवरंमार्गरथ्याचत्वरभूषितम् चंदनोदकसंसिक्तपुष्पपल्लवसंयुतम् २९ तदापौरांगनाः
काश्चिद्गवाक्षबिलमाश्रिताः रघुनाथस्वरूपेक्षाजातकामाअथाब्रुवन् ३० धन्याअभूवन्बतभिल्लकन्यावनेषुयारामसु
खारविंदम् स्वलोचनेंदीवरकैरथापिबन्स्वभाग्यसंजातमहोदयाइमाः ३१ धन्यंमुखंपश्यतवीरधाम्नःश्रीरामदेवस्यसरो
जनेत्रम् यद्दर्शनंधातृसुखाःसुराअपिप्रापुर्महद्भाग्ययुतावयंत्वहो ३२ एतन्मुखंस्फुरवंचारुहासंकिरीटसंशोभिनिजोत्तमां
गम् बंधूकधिक्कारलसच्छविप्रदंदंतच्छदंबिभ्रतमंधनाशम् ३३ इतिगदितवतीस्ताःस्नेहभारेणरामानलिनदलसदृशैर्नेत्र
पातैर्निरीक्ष्य निखिलगुरुरनूनप्रेमभारंनृलोकंजननिगृहमियेषप्रोषितांगेनहृष्टः ३४ इतिश्रीपद्मपुराणेपातालखंडेशेषवा
त्स्यायनसंवादेरामाश्वमेधीयेरघुनाथस्यपुरप्रवेशोनामतृतीयोऽध्यायः ३ वात्स्यायनउवाच भुजगाधीश्वरेशानधराधरधर
क्षम् शृण्वेकंसंशयंमह्यंकृपयाकथयस्वतम् १ रघुनाथस्यगमनंवनंप्रतियदाह्यभूत् तदाप्रभृतिदेहेनस्थिताशून्येनचेत
सा २ तद्विप्रयोगविधुराकृशदेहातिदुःखिता स्वसुखान्मंत्रिणःश्रुत्वारघुनाथंसमागतम् ३ कथंजहर्षकिमभूत्कीदृशं
तत्रचिन्हितम् रामचंद्रस्यसंदेशहर्त्तारंकिमुवाचसा ४ एतन्मेसंशयंछिंधिरघुनाथगुणोदयम् यथावच्छृण्वतेमह्यंकथयस्वप्र
सादतः ५ शेषउवाच साधुपृष्टंमहाभागद्विजवर्यपुरस्कृत तन्मेनिगदतःसाक्षाच्छृणुष्वैकमनाःकिल ६ यदातद्
नांभोजच्युतंरामागमावृतम् पीत्वापीत्वाबभूवाहोस्थगितांगेनविह्वला किंमेस्वप्नोविमूढायाःकिंवाभ्रमकरंवचः ७ ममन
वैमंदभाग्यायाःकथंरामेक्षणंपुनः बहुनातपसाकृत्वाप्राप्तोयंचसुतःशिशुः ८ केनचिन्ममपापेनविप्रयोगंगतःपुनः संमंत्रि
न्कुशलीरामोसीतालक्ष्मणसंयुतः ९ कथंमांस्मरतेवीरोवनचारीसुदुःखिताम् इतिसाविललापोच्चैरघुनाथस्मृतिंगता
१० नविवेदनिजंकिंचित्परकीयंविमोहिता स्नुमुखोपितथादृष्ट्वादुःखितांमातरंभृशम् ११ वीजयामासवासोग्रैःसंज्ञा

अ०
३

३

मापचसापुनः उवाचजननींसौम्यंवचोहर्षकरंमुहुः १२ रघुनाथंप्रसस्मारहृष्टांतांव्यदधात्पुनः मातर्विद्धिगृहंप्राप्तंरघुनाथं
सलक्ष्मणम् १३ सीतयासहितंपश्यचाशीभिरभियुंक्ष्वच इतितथ्यंवचःश्रुत्वासुमुखेनप्रभाषितम् १४ यादृशंहर्षमापेदे
तादृशंवर्ण्यहंनहि उत्थायचाजिरेप्राप्तारामांचिततनूरुहा १५ हर्षविह्वलतांगाश्रुमुंचंतीराममैक्षत तावत्सरामोराजेंद्रोनरया
नमधिश्रितः १६ प्राप्तःस्वमातुर्भवनंकैकेय्याःसुनयःपुरः कैकेय्यपित्रपाभारनम्रारामंपुरःस्थितम् १७ नोवाचकिंचिन्मह
तींचिंतांप्राप्तवतीमुहुः सूर्यवंशध्वजोरामोमातरंवीक्ष्यलज्जिताम् १८ उवाचसांत्वयन्तांचवाक्यैर्विनयमाश्रितैः श्रीराम
उवाच मातर्मयावनेगत्वासर्वमाचरितंतथा १९ अधुनाकरवैकिंवात्वदाज्ञातोजनन्यहो मयान्यूनंकृतंनास्तिकथंमांने-
क्ष्यसेपुनः २० आशीर्भिरभिनंद्यैनंभरतंमांचवीक्षय इतिश्रुत्वापितद्वाक्यंसानम्रवदनानघ २१ शनैःशनैःप्रत्युवाचरामगच्छस्व
मालयम् रामोपिश्रुत्वावचनंजनन्याःपुरुषोत्तमः २२ नमस्कृत्ययगौगेहंसुमित्रायाःकृपानिधिः सुमित्रापुत्रसहितंरामं
दृष्ट्वामहामनाः २३ चिरंजीवचिरंजीवेत्याशीर्भिरभिनंदितः मातुश्चरामभद्रोपिचरणौप्रणिपत्यच २४ परिष्वज्यमुदा
युक्तोजगादवचनंपुनः रत्नगर्भेममभ्रात्रालक्ष्मणेनकृतंयथा २५ यथायमकरोद्धिमान्ममदुःखापनोदनम् २६ रावणेन
हृतासीतामयायत्प्राप्यतेपुनः मातस्तत्सर्वमाविद्धिलक्ष्मणस्यविचेष्टितम् २७ दत्तामाशिषमागृह्यशिरसायंसुमित्रया निज
मातुश्चभवनंप्रययौविबुधैर्वृतः २८ मातरंवीक्ष्यतृषितांनिजदर्शनलालसाम् स्वयानादवरुह्याशुचरणावग्रहीद्धरिः २९
मातातद्दर्शनोत्कंठाविह्वलीकृतमानसा ३० शरीरेरोमहर्षोभूद्गद्गदावागभूत्तदा हर्षाश्रूणितुसोष्णानिप्रवाहंप्रापुरापदात्
३१ जननींवीक्ष्यविनयींतांदंकद्वयवर्जिताम् कराकम्बुपदाकम्बुरहितांबिभ्रतींतनुम् ३२ किंचित्त्वदर्शनाद्दृष्ट्वाकृशां
गींतांस्वशोकतः दुःखस्यसमयोनायंइतिमत्वाजगादताम् ३३ श्रीरामउवाच मातर्मयात्वच्चरणौचिरकालंनसेवितौ
ततःक्षमस्वापराधंभाग्यहीनस्यमामकम् ३४ येपुत्रामातृपित्रोर्नशुश्रूषायांसमुत्सुकाः तेमंतव्याःपरामातःकीटकारेतसोद्भवाः

३५ किंकुर्मोजनकाज्ञातागतावैदंडकंवनम् तत्रापित्वत्कृपापांगात्तीर्णोस्मिदुःखसागरम् ३६ रावणेनहृतासीतालंकायांगमितापुनः त्वत्कृपातोमयालब्धातंहत्वाराक्षसेश्वरम् ३७ सीतेयंत्वच्चरणयोःपतितावैपतिव्रता संभावयाशुचकितांत्वत्पादार्पितमानसाम् ३८ इतिश्रुत्वातुतद्वाक्यंपादयोःपतितांस्नुषाम् आशीर्भिरभियुज्यैनांबभाषेतांपतिव्रताम् ३९ सीतेत्वपतिनासार्द्धंचिरंविलसभामिनि पुत्रौप्रसूयचकुलेस्माकंपावयपावने ४० त्वत्सदृश्यःपतिपराःपतिदुःखसुखानुगाः भवंतिदुःखभागिन्योनहिसत्यंजगत्त्रये ४१ विदेहपुत्रिस्वकुलंत्वयापावितमात्मना रामपादाब्जयुगुलमनुयात्यामहावनम् ४२ किंचित्रंयत्पुमांसस्तुवैरिकोटिप्रभंजनः यस्यगेहेसतीभार्यास्वपतिप्रियवत्सला ४३ इत्युक्त्वारघुनाथस्यभार्यामंजितलोचनाम् तूष्णींबभूवहृषिताप्रहृष्टस्वतनूरुहा ४४ अथभ्रातास्यभरतःपित्रादत्तंनिजंमहत् राज्यंनिवेदयामासश्रीरामचंद्रायधीमते ४५ मंत्रिणस्तेप्रहृष्टांगादैवज्ञान्मंत्रकोविदान् आहूयसुमूहूर्तंतेपप्रच्छुःपरमादरात् ४६ शुभेमुहूर्तेसुदिनेशुभनक्षत्रसंयुते अभिषेकंमहाराज्येकारयामासुरुद्यताः ४७ ससद्वीपवतींपृथ्वींव्याघ्रचर्मणिसुंदरे लिखित्वोपरिराजेंद्रोमहाराजोधितास्थिवान् ४८ तद्दिनादेवसाधूनांमनांसिप्रमुदंययुः दुष्टानांचेतसोग्लानिरभवत्परपापिनाम् ४९ स्त्रियस्तुपतिभक्त्याचपतिव्रतपरायणाः मनसापिकदापापंनाचरंतिजनामुने ५० दैत्यादेवास्तथानागायक्षासुरमहोरगाः सर्वेन्यायपथेस्थितारामाज्ञांशिरसादधुः ५१ परोपकरणेयुक्ताःस्वधर्मसुखनिर्वृताः विद्याविनोदगमितादिनरात्रिक्षणाःशुभाः ५२ यातोपिमार्गसंस्थानांबलान्नाहरतेमहान् वासांस्यपितुसूक्ष्माणितत्रचौरकथानहि ५३ धनदोत्वर्थिनांरामोकरणश्चकृपानिधिः भ्रातृभिःसहितोनित्यंगुरुदेवस्तुतिंव्यधाम् ५४ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेरघुवरस्यराज्याभिषेकोनामचतुर्थोऽध्यायः ४ शेषउवाच अथाभिषिक्तरामंतुतुष्टुवुःप्रणताःसुराः रावणाभिधदैत्येंद्रवधहर्षितमानसाः १ देवाऊचुः जयदाशरथेसुरार्तिहन्जयदानववंशदाहक जयदेववरांगनागणग्रहणव्यग्रकरारिदारक २ तवयद्दनु

जेंद्रनायकं कवयो वर्णयितुं समुत्सुकाः प्रलये जगतां ततीः पुनर्ग्रससे त्वं भुवनेश लीलया ३ जयजन्मजरादिदुःखकैः परिमुक्त प्र
बलोद्धरोद्धर जयधर्मकरान्वयांबुधौ कृतजन्मन्नजरामराच्युत ४ तव देववरस्य नामभिर्बहुपापा अपि ते पवित्रिताः किमु सा
द्विजवर्यमहीलाश्मतनुर्मानुषतामुपागता ५ हरिविरंचिनुत तव पादयुगलमिप्सितकामसमृद्धिदम् पविपत्रितयवादिलक्षणैः
सुरचिंतं मनसा स्पृहयामहे ६ यदि भवान्विदधाति भरं भुवो मदनमूर्तितिरस्कर कांतिभृत् सुरगणा हि कथं सुखिनः पुनर्भव दभवं
तिघृणामयपावन ७ यदा यदास्मान्दनुजा हि दुःखदास्तदा तदा त्वं भुवि जन्मभाग्भवेः अजोव्ययोपीशवरोपि सन्विभोस्वभाव
मास्थाय निजं निजार्चितः ८ भृतसुधासदृशै रघुनाशनैः सुचरितैरवकीर्य महीतलम् अमनुजैर्गुणशंसिभिरीशिते प्रविशचाशु पु
नःस्वकं पदम् ९ अनादिराद्यो जररूपधारी हारी किरीटी मकरध्वजाभः जयं करोतु प्रसभं हतारिः स्मरारिसंसेवितपादपद्मः १०
इत्युक्त्वा ते सुराः सर्वे ब्रह्मेंद्रप्रमुखा मुहुः प्रणेमुररिनाशेन प्रीणिता रघुनाथकम् ११ इति स्तुत्यातिसंहृष्टो रघुनाथो महाय
शाः प्रोवाच तान् सुरान्वीक्ष्य प्रणतान्नतकंधरान् १२ रामउ० सुरा वृणुत मां यूयं वरं किंचित्सुदुर्लभम् यं कोपि दे-
वो दनुजो न यक्षः प्रापसादरम् १३ देवा ऊचुः स्वामिन् भगवतः सर्वं प्राप्तमस्माभिरुत्तमम् यदयं निहतः शत्रुरस्माकं तु द-
शाननः १४ यदा यदा सुरोस्माकं बाधां परिदधाति भो तदा तर्दतिकर्त्तव्यमेतावद्धि विनाशनम् १५ तथेत्युक्त्वा पुनर्वी-
रः प्रोवाच रघुनंदनः श्रीरामउवाच सुराः शृणुत मद्वाक्यं आदरेण समन्विताः १६ भवत्कृतं मदीयैर्वै गुणैर्ग्रथितमद्भुतम् स्तो
त्रं पठिष्यंति मुहुः प्रातर्निशि सकृन्नराः १७ तस्यैवैरिपराभूतिर्न भविष्यति दारुणा न च दारिद्र्यसंयोगो न च व्याधिपराभवः
१८ मदीयचरणद्वंद्वे भक्तिस्तेषां तु भूयसी भविष्यति मुदायुक्ते स्वांते पुंसां तु पाठतः १९ इत्युक्त्वासोभवत्तूष्णीं नरदे-
वशिरोमणिः सुराः सर्वे प्रहृष्टास्ते ययुर्नाकं स्वकं स्वकम् २० रघुनाथोपि पित्र्याद्तृस्तान्पालयंस्तातवद्बुधः प्रजाः पुत्रानि
वस्वीयांल्लालयन् लोकनायकः २१ यस्मिन् शासति लोकानां नाकालमरणं नृणाम् नरोगादिपराभूतिर्भूतिर्गेहे महीयसी

२२ नेतिःकदापिदृश्येतवैरिजंभयमेवच वृक्षाःसदैवफलिनोम भूयिष्ठधान्यका २३ पुत्रपौत्रपरीवारसार्थकीकृतजी
वनाः कांतासंयोगजस्फूर्तैर्निरस्तविरहक्लमाः २४ नित्यंश्रीरघुनाथस्यपादपद्मकथोत्सुकाः कदापिपरनिंदासुवाचस्तेषां
भवंतिन २५ कारवोपिकदापापंनाचरंतिमनस्यहो रघुनाथकराघातदुःखशंकाभिशंसिनः २६ सीतापतिमुखालो
कनिश्चलीभूतलोचनाः लोकाबभूवुःसततंकारुण्यपरिपूरिताः २७ राज्यंप्राप्यसुसंपन्नंसमृद्धबलवाहनम् ऋषिभि
र्दृष्टपुष्टंचरम्यंहाटकभूषणैः २८ संजुष्टमिष्टपूर्तानांधर्मिणांनित्यकर्तृभिः सदासंपन्नसस्यंचसुवसुक्षेत्रसंयुतम् २९
सुदेशंसुप्रजंस्वस्थंसुतृणंबहुगोधनम् देवतायतनानांचराजिभिःपरिराजितम् ३० सुपर्णायत्रवैग्रामाःसुवित्तर्धिवि
राजिताः सुपुष्पकृत्रिमोद्यानाःसुखदाःफलपादपाः ३१ सपद्मिनीककासारायत्रराजंतिभूमयः सद्भानिम्नगायत्रन
यत्रजनताक्वचित् ३२ कुलान्येवकुलान्यानिवर्णानांवर्धनानिच विभ्रमोयत्रनारीषुनविद्वत्सुचकर्हिचित् ३३ नद्यः-
कुटिलगामिन्योनयत्रविषयेप्रजाः तमोयुक्ताःक्षपायत्रबहुलेषुनमानवाः ३४ रजोयुजःस्त्रियोयत्रनधर्मबहुलानराः धनेर
नंधोयत्रास्तिजनोनैवचभोजनम् ३५ अनयःस्यंदनोयत्रनचवैराजपूरुषः दंडःपरशुकुद्दालवालव्यजननारिषु ३६ आत
पत्रेषुनान्यत्रक्वचित्क्रोधोपरोधजः अन्यत्राक्षिकवृंदेभ्यःक्वचिन्नपरिदेवनम् ३७ आक्षिकाएवदृश्यंतेयत्रपाशकपाणयः
जाड्यंवातजलेष्वेवस्त्रीमध्याएवदुर्बलाः ३८ कठोरहृदयायत्रसीमंतिन्योनमानवाः औषधेष्वेवयत्रास्तिकुष्टयोगोनमा
नवे ३९ वेधोप्यंतःसुरत्नेषुशूलंमूर्त्तिकरेषुवै कंपःसात्विकभावोत्थोनभयात्क्वापिकस्यचित् ४० सज्वरःकामतोयत्र
दारिद्र्यंकलुषस्यच दुर्लभत्वंसदेकस्यसुकृतेनचवस्तुतः ४१ दंताएवप्रमत्तावैसुवृद्धंवीच्योजलाशये दानहानिर्गजेष्वेवद्रु-
मेष्वेवहिकंटकाः ४२ बाणेषुगुणविश्लेषोबंधोक्तिःपुस्तकेदृढा स्नेहत्यागोखलेएवनचवैस्वजनेतथा ४३ तंदेशंपालया-
मासलालयन्लालिताःप्रजाः धर्मसंस्थापयन्देशेदुष्टदंडधरोपमः ४४ एवंपालयतोदेशंधर्मेणधरणीतलम् सहस्त्रेतीतव-

र्षाणामेकादशसमेतिनाम् ४५ तत्रनीचजनाच्छ्रुत्वासीतायाअपमानताम् स्वांचनिंदांरजकतस्तांतत्याजरघूद्वहः
४६ पृथ्वींपालयमानस्यधर्मेणनृपतेस्तदा सीताविरहितामेकांनिदेशेनस्मरक्षिताम् ४७ कदाचित्संस
दोमध्येत्वासीनस्यमहामतेः आजगाममुनिश्रेष्ठःकुंभोत्पत्तिर्मुनिर्महान् ४८ गृहीत्वार्घ्यंसमुत्तस्थौवसिष्ठेन
समन्वितः जनताभिर्महाराजोवार्धिशोषकमागतम् ४९ स्वागतेनसुसंभाव्यपप्रच्छतमनामयम् सुखो
पविष्टंविश्रांतंबभाषेरघुनंदनः ५० इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेअगस्तिसमा
गमोनामपंचमोऽध्यायः ५ शेषउवाच इत्थंस्वागतसंतुष्टंब्रह्मचर्यंतपोनिधिम् उवाचमतिमान्वीरःस-
र्वलोकगुरुंमुनिम् १ स्वागतंतेमहाभागकुंभयोनेतपोनिधे त्वद्दर्शनेनसर्वेवैपाविताःसकुटुंबकाः २
कच्चित्तेसुमतिर्वेदशास्त्रेषुपरिवर्त्तते त्वत्तपोविघ्नकर्त्तावानास्तिभूमंडलेक्वचित् ३ लोपामुद्रामहाभागा-
त्वास्तेतेधर्मचारिणी यस्याःपतिव्रताधर्मात्सर्वंभवतिशोभनम् ४ अयिशंसमहाभागधर्ममूर्त्तेकृपानिधे
अलोलुपस्यकिंकार्यंकरवाणिमुनीश्वर ५ त्वत्तपोभाग्यतःसर्वंभवतिस्वेच्छयाशुभम् तथापिमयिकृत्यंवदकृपां
शंसमुनीश्वर ६ शेषउवाच इत्युक्तोलोकगुरुणाराज्ञाराज्ञेनधीमता उवाचरामंलोकेशंविनीततरभा
षया ७ अगस्त्यउवाच स्वामिंस्तवस्मदुर्दर्शंदर्शनंदेवतैरपि मत्वासमागतंविद्धिराजराजकृपानि-
धे ८ हतस्त्वयारावणाख्यःसासुरोलोककंटकः दिष्ट्याद्यदेवाःस्मरिवनोदिष्ट्याराजाबिभीषणः
राम त्वद्दर्शनान्मेद्यगतंतद्दुष्कृतंकिल संपूर्णोमेमनःकोशआनंदेनस्मरोत्तम १० इत्युक्त्वासबभूवाशुतू-
ष्णींकुंभसमुद्भवः रामसंदर्शनाल्हादविह्वलीकृतमानसः ११ रामःपप्रच्छचमुनिंसर्वज्ञानविशारदम् लो
कातीतंभवन्दावीसर्वंजानासिसर्वतः १२ मुनेकथयमेसर्वंपृच्छतेहिस्मविस्तरम् को[illegible]याहतोयोहिरावणो

विबुधार्दनः १३ कुंभकर्णोपिकस्त्वेषःकाजातिर्वैदुरात्मनः देवोदैत्यःपिशाचोवाराक्षसोवाब्रह्ममुने १४ सर्व
मारव्याहिसर्वज्ञसर्वंजानासिविस्तरात् अतःकथयमेत्पृष्टं कृपांकृत्वाममोपरि १५ इतिश्रुत्वाततोवाक्यं कुं-
भजन्मातपोनिधिः यत्पृष्टंरघुराजेनप्रवक्तुंतत्प्रचक्रमे १६ राजन्सृष्टिकरोब्रह्मापुलस्त्यस्तत्सुतोभवत् तत
स्तुविश्रवाजज्ञेवेदविद्याविशारदः १७ तस्यपत्नीद्वयंजातंपातिव्रत्यचरित्रभृत् एकामंदाकिनीनाम्नीद्वितीी
याकेकसीस्मृता १८ पूर्वस्यांधनदोजज्ञेलोकपालविलासभृत् योसौशिवप्रसादेनलंकावासमचीकरत् १९
विद्युन्मालीसुतायांतुपुत्रत्रयमभून्महत् रावणःकुंभकर्णश्चतथापुण्योबिभीषणः २० राक्षस्युदरजन्मत्वात्सं
ध्यासमयसंभवात् द्वयोरधर्मेनिपुणामतिरासीन्महामते २१ एकदातुविमानेनपुष्पकेनसुशोभिना कांच
नीयोपकल्पेनकिंकिणीजालमालिना २२ आरुह्यपितरंद्रष्टुंप्रायाच्छोभासमन्वितः स्वगणैःसंस्तुतोभूमन्नाना
रत्नविभूषणैः २३ आगत्यपित्रोश्चरणौप्रणिपत्याचिरमात्मजः हर्षविह्वलितात्माचरोमांचिततनूरुहः २४
उवाचमेद्यसुदिनंमहदद्यफलोदयः तन्मेयुष्मत्पदंदृष्टंमहापुण्यंददर्शनम् २५ इत्यादिभिस्तुतिपदैस्तुत्वागात्स्व
कमंदिरम् पितरावपिसंहृष्टौपुत्रस्नेहाद्बभूवतुः २६ तद्दृष्ट्वारावणोधीमान्जगादनिजमातरम् कोयंपुमा
न्सुरोवाथयक्षोवाथनरोत्तमः २७ कोसौममपितुःपादौसन्निषेव्यगतःपुनः महाभाग्यनिधिस्त्वीयैर्गणैःसुपरिवा
रितः २८ केनेदंतपसालब्धंविमानंवायुवेगधृक् उद्यानारामलीलादिविलासस्थानमुत्तमम् २९ शेषउवा
च इतिवाक्यंसमाकर्ण्यजननीरोषविक्लवा उवाचपुत्रविमनाकिंचिन्नेत्रविकारिणी ३० रेपुत्रशृणुमद्वा-
क्यंबहुशिक्षासमन्वितम् एतस्यजन्मकर्मादिविचारचतुराधिकम् ३१ सपत्न्याममकुक्षिस्थंनिधानसमुपस्थि
तम् येनस्वमातुर्विमलंकुलमुज्ज्वलितमहत् ३२ त्वंतुमत्कुक्षिजःकीटःपापःस्वोदरपूरकः यथाखरःस्वकं

भारंजानातिनूनंतद्गुणम् ३३ तथात्वंभक्षितज्ञानीशयनासनभोगवान् सुप्तोगतःक्वचित्भ्रष्टइत्येवंतवसंभवः

३४ अनेनतपसालब्धेशिवसंतोषकारिणा लंकावासोमनोवेगंविमानराज्यमुत्तमम् ३५ सुधन्याजननी

त्वस्यसुभाग्यासुमहोदया यस्याःपुत्रोनिजगुणैर्लब्धवान्महत्तांपदम् ३६ इतिक्रुद्धोभाषितमार्तयातयामा

त्रास्वयाकण्यदुरात्मसत्तमः रोषंविधायात्मगतंपुनर्वचोजगादतांनिश्चयभृत्तमःप्रति ३७ रावणउवाच जनन्याकर्णयवचोममगर्वसमन्वितम् रत्नगर्भात्वमेवासियस्याःपुत्रत्रयंतव ३८ कोसौकीटःसधनदःकृतपः

स्वल्पकंपुनः कालंकांक्षितुतद्राज्यंस्वल्पसेवकसंयुतम् ३९ मातःशृणुममोत्साहात्प्रतिज्ञांकारणान्विताम्

नकेनापिकृतंकर्त्तामिहाभाग्येहिकैकसि ४० यद्यहंभुवनंसर्वंवशेनस्थापयाम्यहम् तपोभिर्दुष्करैःक्लाब्रह्मसं

तोषकारकैः ४१ अन्नोदकेभयात्यक्तेनिद्राक्रीडेरविलपुनः चेत्कुर्यांपितृलोकस्यघातात्पापंभवेन्मम ४२

कुंभकर्णोपिकृतवान्बिभीषणसमन्वितः रावणेनसहस्वभ्रात्रेत्युक्त्वागाद्गिरिकाननम् ४३ इतिश्रीपद्मपुराणेपा

तालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेषष्ठोऽध्यायः ६ अगस्त्यउवाच अथचोग्रतपादैत्योदशवर्षसहस्रकम् चकारभानुमक्ष्णाचपश्यन्नूर्ध्वपदेस्थितः १ कुंभकर्णोपिकृतवान्तपःपरमदुश्चरम् बिभीषणस्तुध

र्मात्माचचारपरमंतपः २ तदाप्रसन्नोभगवान्देवदेवःप्रजापतिः देवदानवयक्षादिमुकुटैःपरिसेवितः ३ द

दौराज्यंचस्फमहद्भुवनत्रयभास्वरम् वपुश्चकृतवान्तस्यदेवदानवसेवितम् ४ तदासंतापितोभ्रातधनदोधर्म

बुद्धिमान् विमानंतुततोनीतंलंकाचनगरीहठात् ५ भुवनंतापितंसर्वंदेवाश्चैवद्विवागताः हतवान्ब्राह्मणकु

लमुनीनांमूलकृंतनः ६ तदातिदुःखितादेवाःसेंद्राब्रह्माणमाययुः स्तुतिंचक्रुर्महात्मानोदंडवत्प्रणतिंगताः ७

तेतुष्टुवुःस्फराःसर्वंवाग्भिस्तथ्याभिराहताः ततःप्रसन्नोभगवान्किंकरोमीतिचाब्रवीत् ८ ततोनिवेदयांचक्रुर्वि

बुधाग्रब्रह्मणःपुरः दशग्रीवाच्चसकलंतथानिजपराभवम् ९ क्षणंध्यात्वाययौब्रह्माकैलासंत्रिदशैःसह तस्यशैल-
स्यपार्श्वेतुर्वैचित्र्येणसमाकुलाः १० स्थितास्संतुष्टुवुर्देवाःशंभुंशक्रपुरोगमाः ११ नमोभवायशर्वायनील-
ग्रीवायतेनमः नमःस्थूलायसूक्ष्मायबहुरूपायतेनमः १२ इतिसर्वसुरवेनोक्तांवाणीमाकर्ण्यशंकरः प्रोवाचनं-
दिनंदेवानानयेतिममांतिकम् १३ एतस्मिन्नंतरेदेवाआहूतानंदिनाचते प्रविश्यांतःपुरेदेवाददृशुर्विस्मितेक्ष-
णाः १४ तत्रागत्यददृशुर्यशंकरंलोकशंकरम् गणकोटिसहस्त्रैस्तुसेवितंमोदशालिभिः १५ नग्नैर्विरूपैःकुटि-
लैर्धूसरैर्विकटैस्तथा प्रणिपत्याग्रतःस्थित्वासहदेवैःपितामहः १६ उवाचदेवदेवेशंपश्यावस्थांदिवौकसाम् कृपां
कुरुमहादेवशरणागतवत्सल १७ दुष्टदैत्यवधार्थंत्वसमुद्योगंविधेहिभो सोपितद्वचनंश्रुत्वादैत्यशोकसमन्वि-
तम् १८ त्रिदशैःसहितःसर्वैराजगाममहरेःपदम् तुष्टुवुर्मुनयःसर्वेससुरोरगकिन्नराः १९ जयमाधवदेवेशज-
यभक्तजनार्तिहन् कृपांकुरुमहादेवविलोकयस्वसेवकान् २० इत्युच्चैर्जगदुःसर्वेदेवाःसर्वपुरोगमाः इत्यु-
क्तमाकर्ण्यसुराधिनाथोहृस्वासुरार्त्तिपरचिंत्यमानः जगाददेवान्जलदोच्चयागिरा दुःखंतुतेषांप्रशमंनयनिव २१ भो
ब्रह्मशर्वेंद्रपुरोगमामराःशृण्वंतुवाचंभवतांहितेरताम् जानेदशग्रीवकृतंभयंवोतन्नाशयाम्यद्यकृतावतारः २२
पुरीत्वयोध्यारविवंशजातैर्नृपैर्महादानमखादिसत्क्रियैः प्रपालिताभूतलमंडनीयाविराजितेराजितभूमिभागैः २३
तस्यांदशरथोराजानिरपत्यःश्रियान्वितः पालयत्यधुनाराजादिक्चक्रजयवान्विभुः २४ सतुवंद्यादृश्यशृंगात्प्रा-
र्थितात्पुत्रकाम्यया पुत्रेष्टिविधिनायक्ष्यामहाबलसमन्वितः २५ ततोहंप्रार्थितःपूर्वंतपसानेनभोसुराः पत्नी-
षुतिसृषुप्रीत्याचतुर्धास्यांभवत्कृते २६ रामलक्ष्मणशत्रुघ्नभरताख्यासमन्वितः कर्त्तास्मिरावणोद्धारंसमूलब-
लबवानहम् २७ भवंतोपिस्वकैरंशैरवतीर्यचरंत्विह ऋक्षवानररूपेणसर्वत्रपृथिवीतले २८ इत्युक्त्वाविर

रामाशुनभसीरितवाङ्मुने देवाःश्रुत्वामहद्वाक्यंसर्वेसंहृष्टमानसाः २९ तेचक्रुर्गदितंयाहृग्देवदेवनधीमता स्वैस्वै
रंशैर्महीपूर्णाऋक्षवानररूपिभिः ३० योसौविष्णुर्महादेवोदेवानादुःखनाशकः समत्वेनमहाराजभगवान्कृतविग्र
हः ३१ भरतोयंलक्ष्मणश्चशत्रुघ्नश्चमहामते तावकांशादृशग्रीवोजनितश्चसुरार्दनः ३२ पूर्ववैरानुबंधनजान
कीहृतवान्पुनः सत्वयानिहतोदैत्योब्रह्मराक्षसजातिमान् ३३ पुलस्त्यपुत्रोदैत्येंद्रःसर्वलोकैककंटकः पातितः
पृथिवीसर्वासुखमायमहेश्वर ३४ ब्राह्मणानांसुखंलब्धंमुनीनांतापसंबलम् शिवानिसर्वतीर्थानिसर्वेयज्ञाःसुसं
हिताः ३५ त्वयिराज्ञिजगत्सर्वंसदेवासुरमानुषं सुखंप्रपेदेविश्वात्मन्जगद्योनेनरोत्तम ३६ एतत्तेसर्वमाख्या
तंयत्पृष्टोऽहंत्वयानघ उत्पत्तिश्चविपत्तिश्चमयामत्यनुसारतः ३७ इत्थंनिशम्यदितिजेंद्रकुलांतकारीवार्तांमहापु
रुषईश्वरईशितात्च संरुद्धबाष्पगलदश्रुमुखारविंदोभूमौपपातसदसिप्रथितप्रभावः ३८ इतिश्रीपद्मपुराणेपा
तालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेरावणोत्पत्तिकथनेनामसप्तमोऽध्यायः ७ शेषउवाच वात्स्यायनमुनिश्रेष्ठक
थापापप्रणाशिनी ब्रह्मण्यदेवदेवस्यसर्वधर्मैकरक्षितुः १ राजानंमूर्च्छितंदृष्ट्वाकुंभजन्मतपोनिधिः शनैःशनैःकरे-
णाशुस्पृशन्साश्रुजगादतम् २ भोरामाश्वसिहिक्षिप्रंकिमर्थमवसीदसि भवान्दैत्यकुलच्छेत्तामहाविष्णुःसनात
नः ३ भूतभव्यंभवच्चैवजगत्स्थास्नुचरिष्णुच त्वदृतेनास्तिसंचारिकिमर्थमिहमूर्च्छितः ४ श्रुत्वावाक्यंमहा
राजःकुंभजन्मसमीरितम् उत्तस्थौविगलन्नेत्राबाष्पपूरितसन्मुखः ५ उवाचदीनदीनात्वविस्पष्टाक्षरोविस्तराम् त्र
पाभरनमन्मूर्त्तिर्ब्रह्मद्रोहपराङ्मुखः ६ श्रीरामउवाच अहोमेपश्यताज्ञानंविमूढस्यदुरात्मनः यद्ब्राह्मणकु
लेरूढंहतवान्काममलोलुपः ७ महिलार्थेमयाविप्रोवेदशास्त्रविवेकवान् हतवान्वाडवकुलंबुद्धिहीनोतिदुर्मतिः ८
इक्ष्वाकूणांकुलेजातुब्राह्मणेनदुरुक्तिभाक् ईदृशंकुर्वताकर्ममयेतत्सुकलंकितम् ९ येब्राह्मणास्तुपूजार्हादानसं-

रा०मे०
८

न्मानभोजनैः नेमयानिहताविप्राःशरसंघातसंहितैः १० कान्लोकाननुगमिष्यामिकुंभीपाकोपिदुःसहः नतादृशं
तीर्थमस्तियन्मांपावयितुंक्षमम् ११ नयज्ञोनतपोदानंनवादेवव्रतादिकम् यत्तुमेब्रह्मसद्द्रोग्धुर्ममपावनतारकम् १२
यैःकोपितंब्रह्मकुलंनरैर्निरयगामिभिः तेनराबहुशोदुःखंभोक्ष्यंतिनिरयंगताः १३ वेदामूलंतुधर्माणांवर्णाश्रमविवे
किनाम् तन्मूलंब्राह्मणकुलंसर्ववेदैकशाखिनम् १४ मूलछेत्तुर्ममोद्धत्यात्कोलोकाननुगमिष्यति किमद्यकरणीयंवै
येनमेहिशिवंभवेत् १५ शेषउवाच विलपंतंभृशरामंराजेंद्ररघुपुंगवम् मायामानुष्यवपुषंकुंभजन्माब्रवीद्वचः १६
अगस्त्यउवाच माविषादंमहावीरकुरुराजन्महामते नतेब्राह्मणहत्यास्याद्दुष्टानांनाशमिच्छतः १७ सुरापोब्रह्महत्याकृ
त्स्वर्णस्तेयीमहाघकृत् सर्वेत्वन्नामवादेनपूताःशीघ्रंभवंतिहि १८ त्वंपुराणःपुमान्साक्षादीश्वरःप्रकृतेःपरः कर्ताह
र्त्ताविताःसाक्षीनिर्गुणःस्वेच्छयागुणी १९ इयंदेवीजनकजामहाविद्यामहामते यस्याःश्रवणमात्रेणमुक्तायास्यंतिसद्ग
तिम् २० रावणोपिनवैदैत्योवैकुंठेतवसेवकः ऋषीणांशापतोवासौदैत्यत्वंदनुजातक २१ तस्यानुग्रहकर्तात्वंनतु
हंताद्विजन्मनः एवंसंचिंत्यमाभूयोनिजंशोचितुमर्हसि २२ इतिश्रुत्वाततोवाक्यंरामःपरपुरंजयः उवाचमधुरंवाक्यंगद्ग-
दस्वरभाषितम् २३ श्रीरामउवाच पातकंद्विविधंप्रोक्तंज्ञाताज्ञातविभेदतः ज्ञातंयद्बुद्धिपूर्वंहि अज्ञातंतद्विवर्जितम्
२४ बुद्धिपूर्वंकृतंकर्मभोगेनैवविनश्यति पश्चात्तापेनयच्चान्यदिदंशास्त्रविनिश्चितम् २५ कुर्वतोबुद्धिपूर्वंमे
ब्रह्महत्यांसुनिंदिताम् नमेदुःखापनोदायसाधुवादःस्मृसंमतः २६ प्रब्रूततादृशंमह्यंयादृशंपापदाहकम् व्रतंदानंम
खंकिंचित्तीर्थमाराधनंमहत् २७ येनमेविमलाकीर्तिर्लोकान्वैपावयिष्यति यस्याचरणमात्रेणब्रह्महत्याहतप्रभा
२८ शेषउवाच इत्युक्तवंतंतंरामंजगादसतपोनिधिः सुरासुरनमन्मूर्धमौलिनीराजितांघ्रिकम् २९ शृणुराममहा
वीरलोकानुग्रहकारक विप्रहत्यापनोदायतवयद्वचनंब्रुवे ३० सर्वंसपापंतरतियोश्वमेधंयजेतवे तस्मात्त्वंयजवि-

अ०
८

८

श्वात्मन्वाजिमेधेनशोभिना ३१ सतुयज्ञश्चमहतात्वयासाध्योमनीषिणा महासमृद्धियुक्तेनमहाबलसुशालिना
३२ सवाजिमेधोविप्राणांहत्यातापापनोदनः कृतवान्यंमहाराजोदिलीपस्तवपूर्वजः ३३ शतक्रतुःशतंकृत्वा
क्रतूनांपुरुषर्षभ पदमापामरावत्यांदेवदैत्यसुसेवितम् ३४ मनुश्चसगरोराजामरुत्तोनहुषात्मजः एतेतेपूर्वजाः
सर्वेयज्ञान्कृत्वापदंगताः ३५ तस्मात्त्वंकुरुराजेंद्रसमर्थोसिसमंततः भ्रातरोलोकपालाभावत्तेतेतवभावुका ३६
इत्युक्तमाकर्ण्यमुनेःसभाग्यवान्रघूत्तमोब्राह्मणघातभीतः पप्रच्छयागेसुमतिंचिकीर्षन्विधिंपुराविद्परिगीयमानम्
३७ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेअगस्त्योपदेशानाम अष्टमोऽध्यायः ८ श्रीरा
मउवाच कीदृशोश्वस्तत्रभाव्योकोविधिस्तत्रपूजने कथंवाशक्यतेकर्तुंकेजेयास्तत्रवैरिणः १ अगस्त्यउवाच
गंगाजलसमानेनवर्णेनवपुषाशुभः कर्णेश्यामोमुखेरक्तःपीतःपुच्छेसुलक्षितः २ मनोवेगःसर्वगतिरुच्चैश्रवःसमप्र
भः वाजिमेधेहयःप्रोक्तोशुभलक्षणलक्षितः ३ वैशाखपौर्णिमास्यांतुपूजयित्वायथाविधि पत्रंलिखित्वाभालेतुस्व
नामबलचिन्हितम् ४ मोचनीयःप्रयत्नेनरक्षकैःपरिरक्षितः यत्रगच्छतियज्ञाश्वस्तत्रगच्छेत्सुरक्षकः ५ यस्तंब-
लान्निबध्नातिस्ववीर्यबलदर्पितः तस्मात्प्रसभमानेयःपरिरक्षाकरैर्हयः ६ कर्त्रातावत्सुविधिनास्थातव्यंनियमादिह
मृगशृंगधरोभूत्वाब्रह्मचर्यसमन्वितः ७ व्रतंपालयमानस्ययावद्वर्षमतिक्रमेत् तावद्दीनांधकृपणाःपरितोष्याधं
नादिभिः ८ अन्नंतुबहुशोदेयंधनंवाभूरिमारिष यद्यत्प्रार्थयतेधीमान्तत्तद्देवद्दातिहि ९ एवंप्रकुर्वतःकर्म-
यज्ञःसंपूर्णतांगतः करोतिसर्वपापानांनाशनंरिपुनाशन १० तस्माद्भवान्समर्थोसिकरणेपालनेर्चने कृत्वाकी
र्तिंसुविपुलांपावयान्यान्जनान्नृप ११ श्रीरामउवाच विलोकयद्विजश्रेष्ठवाजिशालांममाधुना तादृशाःसंति
नोवाश्वाःशुभलक्षणलक्षिताः १२ इतिश्रुत्वातुतद्वाक्यमगस्त्यःकरुणाकरः उत्तस्थौवीक्षमाणोयंयागार्हान्वा

रा॰मे॰ ९

जिनःसुभान् १४ गत्वाथतत्रशालायांरामचंद्रसमन्वितः ददर्शाश्वान्विचित्रांगान्मनोवेगान्महाबलान् १५ अव
नितलगताःकिंवाजिराजस्यवंश्याःकिमथरघुपतीनामेकतःकीर्तिपिंडाः किमिदममृतराशिर्वाहरूपेणसिंधोर्मुनिरितिम
नसांतर्विस्मयंप्रापपश्यन् १६ एकतःशोणदेहानांवाजिनांपंक्तिरुत्तमाः एकतःश्यामकर्णाश्चकस्तूरीकांतिसप्रभाः १७
एकतःकनकाभाश्चत्वन्यतोनीलवर्णिनः एकतःशबलैर्वर्णैर्विशिष्टैर्वाजिभिर्वृताः १८ एवंपश्यन्मुनिःसर्वान्कौतुका
विष्टमानसः ययावन्यत्रतान्द्रष्टुंयागयोग्यान्हयान्मुनिः १९ ददर्शतत्रशतशोबद्धान्तादृशवर्णकान् दृष्ट्वाविस्मयमा
पेदेसमुनिर्हर्षितांगकः २० एकतःश्यामकर्णाश्चसर्वांगैःक्षीरसन्निभान् पीतपुच्छान्मुखेरक्तांश्चशुभलक्षणलक्षितान् २१
निरीक्ष्यपरितोनघान्विमलनीरधारानिभान्मनोजवनशोभितान्विमलकीर्तिपुंजप्रभान् पयोनिधिविशोषकान्मुनिरुवाचसी
तापतिविचित्रहयदर्शनाद्विकसितनेत्रवक्त्रप्रभः २२ अगस्त्यउवाच हयमेधक्रतोर्योग्यान्वाहांस्तेबहुशःसुभान् पश्यतो
नेत्रयोर्मेघतृप्तिर्नास्तिरघूत्तम २३ रामचंद्रमहाभागसुरासुरनमस्कृत यज्ञंकुरुमहाराजहयमेधंसुविस्तरम् २४
सुरपतिरिवसर्वान्यज्ञसंधान्करिष्यंस्तपनइवशताराततितोयंविशोष्यन् हृतरिपुगणमुख्यःसांपरायंविजित्यक्षितितलसुख
भोगंकुर्विदंभूरिभोगः २५ इत्येवंवाक्यवादेनपरितुष्टाखिलेंद्रियः सर्वान्वैयज्ञसंभारानाजहारमनोहरान् २६ मुन्यन्वि
तोमहाराजःसरयूतीरमागतः सुवर्णलांगलैर्भूमिंविचकर्षमहीयसीम् २७ विलिख्यभूमिंबहुशोचतुर्योजनसंमिताम्
मंडपान्रचयामासयज्ञार्थंसनरोत्तमः २८ कुंडंतुविधिवत्कल्प्यंयोनिमेखलयान्वितम् अनेकरत्नसंयुक्तंसर्वशोभासम
न्वितम् २९ मुनीश्वरोमहाभागोवसिष्ठःसुमहातपाः सर्वंतत्कारयामासवेदशास्त्रविधिश्रितम् ३० प्रेषितास्तेनमु-
निनाशिष्यामुनिवराश्रमान् कथयामासुरुद्युक्तंहयमेधेरघूत्तमम् ३१ आकारितास्तदातत्रऋषयस्तपसांवराः आ
जग्मुःपरमेशस्यदर्शनेत्वतिलालसाः ३२ नारदोसितनामाचपर्वतःकपिलोमुनिः जातूकर्ण्योगिरावासोआर्ष्टिषेणो

त्रिराङ्गिराः ३३ हारीतोयाज्ञवल्क्यश्चसंवर्तःशङ्खसंज्ञितः इत्येवमाद्योरामह्यमेधवरंययुः ३४ तान्सर्वान्पूजयामास
रघुराजोमहामनाः प्रत्युत्थानाभिवादाभ्यामर्घ्यविष्टरकादिभिः ३५ गांहिरण्यंददौतेभ्यःप्रायशोदृष्टविक्रमः महाभाग्यं
त्वद्यमेस्तियद्भवदर्शनंगताः ३६ शेषउवाच एवंसमाकुलेब्रह्मन्नृषिवर्यसमागमे धर्मवार्ताबभूवाहोवर्णाश्रमसंम
ता ३७ वात्स्यायनउवाच काधर्मवार्तातत्रासीत्किंवाकथितमद्भुतम् साधवःसर्वलोकानांकारुण्यात्किमुताब्रुवन् ३८
शेषउवाच तान्समेतान्मुनीन्दृष्ट्वारामोदाशरथिर्महान् पप्रच्छसर्वधर्मांश्चसर्ववर्णाश्रमोचितान् ३९ तेतुपृष्टाहिरामेणध-
र्मान्प्रोचुर्महागुणान् तान्प्रवक्ष्यामितेसर्वान्यथाविधितदन्वितान् ४० ऋषयऊचुः ब्राह्मणेनसदाकार्यंयाजनाध्ययनादि-
कम् वेदान्पठित्वाविरजोनैवगार्हस्थ्यमाविशेत् ४१ ब्राह्मणेनसदात्याज्यंनीचसेवानुजीवनम् आपद्गतोपिजीवेन्न
नश्ववृत्त्याकदाचन ४२ ऋतुकालाभिगमनेधर्मोयंगृहिणःपरः स्त्रीणांवरमनुस्मृत्ययथाकाम्यथवाभवेत् ४३ दिवा-
भिगमनंपुंसामनायुष्यकरंमतम् श्राद्धाहःसर्वपर्वाणियतस्त्याज्यानिधीमता ४४ तत्रगच्छेत्स्त्रियंमोहाद्धर्मात्प्र-
च्यवतेपरात् ऋतुकालाभिगामीयःस्वदारनिरतश्चयः ४५ सर्वदाब्रह्मचारीहविज्ञेयःसगृहाश्रमी ऋतुःषोडशया
मिन्यश्चतस्रस्तासुगर्हिताः ४६ पुत्रास्तास्वपियुग्मासुआयुग्मासुचकन्यकाः त्यक्त्वाचंद्रमसंदुष्टंमघांमूलंविहायच
४७ शुचिःसन्निविशेपत्नींपुंस्क्षेचविशेषतः शुचिंपुत्रंप्रसूयेतपुरुषार्थप्रसाधनम् ४८ आर्षेविवाहेगोद्वंद्वंयदुक्तंतत्प्र
शस्यते शुल्कमण्वपिकन्यायाःकन्याविक्रयिताभवेत् ४९ वाणिज्यंनृपतेःसेवावेदानध्ययनंतथा कुविवाहःक्रिया
लोपःकुलेपतनहेतवः ५० अन्नोदकपयोमूलफलैर्वापिगृहाश्रमी गोदानेनतुयत्पुण्यंपात्रायविधिपूर्वकम् ५१ अनर्चितो
तिथिर्गेहाद्भग्नाशोयस्यगच्छति आजन्मसंचितात्पुण्यात्क्षणात्सहिवहिर्भवेत् ५२ पितृदेवमनुष्येभ्योदत्त्वाश्नात्यमृतंगृ
ही स्वार्थंपचत्यघंभुंक्तेकेवलंस्वोदरंभरः ५३ पृष्ठ्यष्टम्योर्विशेत्पापंतैलेमांसेसदैवहि पंचदश्यांचतुर्दश्यांतथैवचभगे

धुरे ५४ रजस्वलां न सेवेत नाश्नीयात्सह भार्यया एकवासा न भुंजीत न भुंजीतोत्कटासने ५५ नाश्नंतीं स्त्रियमीक्षेत तेजःकामो नरोत्तमः मुखेनोपधमेन्नाग्निं नग्नां नेक्षेत योषितम् ५६ नांघ्रिं प्रतापयेदग्नौ न वस्त्वशुचि निःक्षिपेत् प्राणिहिंसां न कुर्वीत नाश्नीयात्संध्ययोर्द्वयोः ५७ नाचक्षीत धयंतीं गां नैंद्रं चापं प्रदर्शयेत् न दिवोद्धृतसारं च भक्षयेत्सधनो निशि ५८ स्त्रीधर्मिण्यो नाभिवादेन्नाद्याद्दाशित्रिरात्रिषु तौर्यत्रिकप्रियो न स्यात्कांस्ये पादौ न क्षालयेत् ५९ न धारयेदन्यभुक्तं वासश्चोपानहावपि न भिन्नभाजने श्नीयान्नाश्नीतादग्न्यादिदूषितम् ६० संविशेन्नार्द्रचरणो नोच्छिष्टः क्वचिदाव्रजेत् शयानो वा न चाश्नीयान्नोच्छिष्टः संस्पृशेच्छिरः ६१ न मनुष्यस्तुतिं कुर्यात् नात्मानमवमानयेत् अभ्युद्यतं न प्रणमेत् परमर्म च नो वदेत् ६२ एवं गार्हस्थ्यमाश्रित्य वानप्रस्थाश्रमं व्रजेत् सस्त्रीको वागतस्त्रीको विरजेत्क्रुष्टमानसः ६३ इत्येवमाद्या धर्मा गदिता ऋषिभिस्तथा श्रुता रामेण महता सर्वलोकहितैषिणा ६४ इति श्रीपद्मपुराणे पातालखंडे शेषवात्स्यायनसंवादे रामाश्वमेधे धर्मोपदेशो नाम नवमोऽध्यायः ९ शेष उवाच इत्थं संशृण्वतो धर्मान्वसंतः समुपस्थितः यत्र यः ज्ञक्रीयादीनां प्रारंभः स महात्मनाम् १ दृष्ट्वा तं समयं धीमान्वसिष्ठः कलशोद्भवः राम चंद्रं महाराजं प्रत्युवाच यथोचितम् २ वसिष्ठ उवाच रामचंद्र महाबाहो समयः पर्युपस्थितः तव हयो यत्र प्रमुच्येत यज्ञार्थं परिपूजितः ३ सामग्री क्रीयतां तत्र आहूयंतां द्विजोत्तमाः करोतु पूजां भगवान्ब्राह्मणानां यथोचितम् ४ दीनांधकृपणानां च दानं स्वांते समुत्थितम् ददातु विधिवत्तेषां प्रतिपूज्याधिमान्य च ५ भवान्कनकसत्पत्न्या दीक्षितो व्रतं चर भूमिशायी ब्रह्मचारी वसुभोगविवर्जितः ६ मृगशृंगधरः कट्यां मेखलाजिनदंडधृक् करोतु यज्ञसंभारं सर्वद्रव्यसमन्वितम् ७ इति श्रुत्वा महद्वाक्यं वसिष्ठस्य यथार्थकम् उवाच लक्ष्मणं धीमान्नानार्थपरिबृंहितम् ८ श्रीराम उवाच शृणु लक्ष्मण मद्वाक्यं श्रुत्वा तत्कुरु सत्वरम् हयमानय यत्नेन वाजिमेधक्रियोचितम् ९ शेष उवाच श्रुत्वा वाक्यं रघुपतेः शत्रुजिल्लक्ष्मणस्तदा सेनापतिमुवाचेदं वचो वि-

विधवर्णनम् १० लक्ष्मणउवाच् वीराकर्णयमेवचःस्रुमधुरंश्रुत्वात्वरातः पुनः कार्यंतत्क्षितिपालमौलिमुकुटैर्घृष्टांघ्रिरामाज्ञया
सेनांकालबलप्रभंजनबलप्रोद्यत्समर्थांगकांसज्जांसद्रथहस्तिपत्तिसहयारामाद्विधेह्यन्वितः ११ सज्जीयंतांवायुजवास्तुरंगास्तुरंगमाला
ललितांघ्रिपाताः सदश्वचारबहुशास्त्रधारिभिःसरोहितावैरिबलप्रहारिभिः १२ संलक्ष्यतांहस्तिनःपर्वताभाआधोरणैःप्रा
सकुंताग्रहस्तैः शूरैःसास्त्रैर्भूरिदानापहाराःक्षीवाणास्तेसवशस्त्रास्त्रपूर्णाः १३ विततबहुसमृद्धिभ्राजमानारथामेपवन-
जवनवेगैर्वाजिभिर्युज्यमानाः विविधरिपुविनाशस्मारकैरायुधास्त्रैभृतबलिभिर्विभागानीयंतासूतवृंदैः १४ पत्तयःशत
शोमह्यमायांत्वस्त्राग्र्यपाणयः हयमेधाहवाहस्यरक्षणेविततोद्यमाः १५ इत्याकर्ण्यवचस्तस्यलक्ष्मणस्यमहात्मनः
सेनानीःकालजिन्नामाकारयामाससज्जिताम् १६ दशध्रुवकमंडितोलघुतनूरुशोभान्वितोविविक्तगलशुक्तिभृद्धिततकं
टकोशेमणिः मुखेविशदकांतिधृत्त्वसितकांतिभृत्कर्णयोरराजततदाहयोधृतकराग्ररश्मिच्छटः १७ कलासंशोभितमुखः
स्फुरद्रत्नविशोभितः मुक्ताफलानांमालाभिःशोभितोनिर्ययौहयः १८ श्वेतातपत्ररचितःसितचामरशोभितः बहुशोभापरी
तांगोनिर्ययौहरिभिर्वृतः १९ अग्रतोमध्यतश्चैकेपृष्ठतःसैनिकास्तथा देवाहरियथापूर्वंसेवंतेसेवनोचितम् २० अथसै
न्यंसमाहूयसर्वमाज्ञापयत्तदा हस्त्यश्वरथपादातवृंदैःस्रुबहुसंकुलम् २१ ततस्ततःसमेतानांसैन्यानांश्रूयतेध्वनिः त
तोदुंदुभिनादोभूत्तस्मिन्सुरवरेतदा २२ तन्निनादेनशूराणांप्रियेणमहतातदा कंपंतिगिरिशृंगाणिप्रासादाविचलंतिच २३
हेषारवोमहानासीद्वाजिनांसुत्थतांनृप रथांगव्रातसंघुष्टाधरासंचलतीवसा २४ जलितैर्गजयूथैश्चपृथ्वीरुद्धासमंततः र
जस्तुप्रचलत्तत्रजनांतर्धानमादधत् २५ निजगाममहासैन्यंछत्रैःसच्छाद्यभास्करम् सेनान्याकालजिन्नाम्नाप्रेषितंज-
नसंकुलम् २६ गर्जतस्तत्रवीराश्चाःकुर्वंतोरणसंभ्रमम् रघुनाथस्ययागायसंग्रामेप्रययुर्मुदा २७ मृगमदमयमंगेष्वं
गरागंदधानाः कुसुमविमलमालाशोभितस्वोत्तमांगाः मुकुटकटकभूषाभूषितांगाःसमस्ताः प्रययुरवनिपतेस्त्वाज्ञ

यातेपिसर्वे २८ इत्येवंतेमहाराजंययुःसेनाचरावराः धनुर्धराःपाशधराःखड्गधाराःस्फुटक्रमाः २९ एवंशनैःशनैः
प्रासोमंडपंयागचिन्हितम् हयःखुरक्षततलांभूमिंकुर्वन्विवस्वयम् ३० रामोहस्ताहरिप्रासंबहुशास्तुष्टमानसः वसिष्ठं-
प्रेरयामासस्क्रियाकर्त्तव्यतांप्रति ३१ वसिष्ठोराममाहूयस्वर्णपत्नीसमन्वितम् प्रयोगंकारयामासब्रह्महत्यापनोदनम् ३२
ब्रह्मचर्यव्रतधरोमृगशृंगपरिग्रहः तत्कर्मकारयामासरामःपरपुरंजयः ३३ प्रारंभेयागकर्मार्थंकुंडमंडपसंज्ञितम् तत्रा
चार्योभवद्धीमान्वेदशास्त्रविचारवित् ३४ वसिष्ठोरघुनाथस्यकुलपूर्वगुरुर्मुनिः बहुतत्राचरन्ब्रह्मकर्मागस्त्यस्तपोनि
धिः ३५ वाल्मीकिमुनिरध्वर्युर्मुनिःकण्वस्तुद्वारपः अष्टौद्वाराणितत्रासन्सतोरणशुभानिवै ३६ द्वारिद्वारिद्वयंविप्र
ब्राह्मणस्याधिमंत्रवित् पूर्वद्वारिमुनिश्रेष्ठौदेवलासितसंज्ञितौ ३७ दक्षिणद्वारिभूमानोकश्यपोत्रिस्तपोनिधी पश्चिम
द्वारिहृषितोजातूकर्ण्योथजाबालिः ३८ उत्तरद्वारिशुनयौद्धितचैकततापसौ एवंद्वारविधिंकृत्वावसिष्ठःकुलशोद्भवः
३९ हयंवर्यस्यसत्पूजांकर्तुमारभतद्विजः सुवासिन्यस्त्रियस्तत्रवासोलंकारभूषिताः ४० हरिद्राक्षतगंधाद्यैःपूजया
मासुरर्चितम् नीराजनंततःकृत्वाधूपयित्वागरूक्षूर्णैः ४१ वर्धापनंततोवेश्याश्चक्रुस्तावाडवाज्ञया एवंसंपूज्यविमले
भालेचंद्रनचर्चिते ४२ कुंकुमादिकगंधाद्यैःसर्वशोभासमन्विते बबंधभास्वरंपत्रंतप्तहाटकनिर्मितम् ४३ तत्रालि
खद्दशरथेःप्रतापबलमूर्जितम् सूर्यवंशध्वजोधन्वीधनुर्दीक्षागुरुर्गुरुः ४४ यंदेवाःसासुराःसर्वेनमंतिमणिमौलिभिः
तस्यात्मजोवीरबलदर्पहारिरघुध्वजः ४५ रामचंद्रोमहाभागःसर्वशूरशिरोमणिः तन्माताकौसलनृपपुत्रीरत्नंसमु
द्भवा ४६ तस्याःकुक्षिभवंरत्नंरामःशत्रुक्षयंकरः करोतिहयमेधंवैब्राह्मणैनसुशिक्षितः ४७ रावणाभिधविप्रेंद्रव
धपापापनुत्तये मोचितस्तेनवाहानांमुख्योसौवाजिनांवरः ४८ हस्त्यश्वरथपादातसेनासंघसमन्वितः यस्यराज्ञइति
श्रेष्ठोमानःस्यात्स्वबलोन्मदात् ४९ वयंधनुर्धराःशूराःश्रेष्ठावयमिहोत्कटाः तेगृण्हंतुबलाद्वाहंरत्नमालविभूषितम्

५० मनोवेगंकामजवंसर्वगत्यभिभास्वरम् ततोमोचयिताभ्राताशत्रुघ्नोलीलयाहयम् ५१ शरासनविनिर्मुक्तवत्सदंतैःशि
लाशितैः इत्येवमादिविलिलेखमहामुनींद्रःश्रीरामचंद्रबहुवीर्यलसत्प्रतापम् शोभानिधानमतिचंचलवायुवेगंपातालभूतल-
विशेषगतिंमुमोच ५२ शत्रुघ्नमादिदेशाथरामःशस्त्रभृतांवरः याहिवाहस्यरक्षार्थंपृष्ठतःस्वैरगामिनः ५३ शत्रुघ्नमादिदे-
शाथमार्गेभद्रंभवेत्तव भवताच्छत्रुविजयोरिपुकर्षणताभुजे ५४ येयोद्धारःप्रतिरणगतास्तेत्वयावारणीयावाहंरक्षस्वकग-
णगणैःसंयुतःसन्महोर्व्याम् स्रस्तान्भ्रष्टान्विगतवसनान्भीतभीतप्रनम्रान्तान्माहन्याःस्रकृतकृतिनोनैवशंसंतिकर्म ५५
विरथाभयसंत्रस्तायेवदंतिवयंतव तेत्वयानहिहंतव्याःशत्रुघ्नस्रकृतेषिणा ५६ योहन्याद्विमदंसत्तंस्रप्तंनग्नंभयातुरम् ता
वकोहंब्रुवाणंचसव्रजत्यधरांगतिम् ५७ परस्वेचित्तवृत्तिंत्वंमाकृथाःपारदारिके नीचेरतिंनकुर्वीथाःसर्वसद्गुणपूरितः ५८
वृद्धानांपरंपूर्वमाकुर्वीथारणंजय पूज्यपूजातिक्रमंत्वंमाविधेहिदयान्वितः ५९ गांविप्रंचनमस्कुर्याद्वैष्णवंधर्मसंयुतं अ
भिवाद्यततोगच्छेत्तत्रसिद्धिमवाप्नुयात् ६० विष्णुःसर्वेश्वरःसाक्षीसर्वव्यापकदेहभृत् येतदीयामहाबाहोतद्रूपाविचरंति-
हि ६१ येस्मरंतिमहाविष्णुंसर्वभूतहृदिस्थितं तेमंतव्यामहाविष्णुसमरूपारघूद्वह ६२ यस्यस्वीयोनपारक्योय
स्यमित्रसमोरिपुः तेवैष्णवाःक्षणादेवपापिनंपावयंतिहि ६३ येषांप्रियंभागवतंयेषांवेब्राह्मणाःप्रियाः वैकुंठात्प्रसृता
स्त्वत्रलोकपावनहेतवे ६४ येषांवक्त्रेहरेर्नामहृदिविष्णुःसनातनः उदरेविष्णुनैवेद्यःसश्वपाकोपिवैष्णवः ६५ येषां
वेदाःप्रियतमानचसंसारजंस्रखं स्वधर्मनिरतायेचतान्नमस्कुर्विहान्वितान् ६६ शिवेविष्णौनवाभेदोनचब्रह्ममहेशयोः
तेषांपादरजःपूतंवहाम्यघविनाशनं ६७ गौरीगंगामहालक्ष्मीर्यस्यनास्तिपृथक्तया तेमंतव्यानराःसर्वेस्वर्गलोकादिहा
गताः ६८ शरणागतरक्षीचमानदानपरायणः यथाशक्तिहरेःप्रीत्यैसज्ञेयोवैष्णवोत्तमः ६९ यस्यनाममहापापरा-
शिंदहतिसत्वरम् तदीयचरणद्वंद्वेभक्तिर्यस्यसवैष्णवः ७० इंद्रियाणिवशेयस्यमनोपिहरिचिंतकम् तन्नमस्कृत्यप्र

यात्सत्याजन्ममरणांतिकात् ७१ परस्त्रियंकामकुलापतत्वंत्यजेर्यशोभूषणभूतभूमिः एवंममादेशमथाचरस्वलभेःपरंधामस-
कृद्यागमीड्यम् ७२ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेशत्रुघ्नशिक्षानामदशमोऽध्यायः १० शेषउ
वाच एवमाज्ञाप्यभगवान्रामश्चामित्रकर्षणः वीरानालोकयन्भूयोजगादश्लक्ष्णयागिरा १ शत्रुघ्नस्यममभ्रातुर्वाजिरक्षाकर-
स्यवै कोगंताप्रष्ठतोरक्षंतन्निदेशप्रपालकः २ यःसर्ववीरान्प्रतिमुख्यमागतान्विनिर्जयेन्मर्मभिदस्त्रसंघैः गृण्हात्वसौमेकरवी
टकंतन्द्भूमौयशःस्वंप्रथयंत्सुविस्तरम् ३ इत्युक्तवतिरामेतुपुष्कलोभरतात्मजः जग्राहवीटकंतस्माद्रघुराजकरांबुजात् ४
स्वामिनोच्छामिशत्रुघ्नंपृष्ठरक्षाकरोन्वहम् सन्नद्धःसर्वशस्त्रास्त्रचापबाणधरःप्रभो सर्वमद्यक्षितितलंत्वत्प्रतापोविजेष्यसि
एतेनिमित्तभूतावैरामचंद्रमहामते ६ भवत्कृपातःसकलंसस्सुरासुरमानुषं उपस्थितंप्रयुद्धायतन्निषेधेक्षमोह्यहं ७ स-
र्वस्वामीज्ञास्यतियन्ममविक्रमदर्शनात् एषगंतास्मिशत्रुघ्नपृष्ठरक्षाप्रकारकः ८ एवंब्रुवंतंभरतात्मजंसःप्रस्तूयसाध्वित्यनुमो
दमानः शूरांश्चसर्वान्कपिवीरमुख्यान्प्रभंजनोद्भूतमुवाचहरिःप्रभुः ९ भोहनूमन्महावीरशृणुमद्वाक्यमादृतः त्वत्प्रसादान्मया
प्राप्तमिदंराज्यमकंटकं १० सीतयाममसंयोगोयोभवाज्जलधितर चरितंतन्द्धृरेविद्धिसर्वंतवकपीश्वर ११ त्वंगच्छममसैन्य
स्यपालकःसन्ममाज्ञया शत्रुघ्नःसोदरोमह्यंपालनीयस्त्वयाहयः १२ यत्रयत्रमतिभ्रंशःशत्रुघ्नस्यप्रजायते तत्रतत्रप्रबोद्धु
व्योभ्रातामममहामते १३ इतिश्रुत्वामहावाक्यंरामचंद्रस्यधीमतः शिरस्याज्ञांसमाधायप्रणाममकरोत्तदा १४ अथादिश
न्महाराजोजांबवंतंकपीश्वरं रघुनाथस्यसेवायैकपिपूत्तमतेजसम् १५ अंगदोगवयोमैंदस्तथादधिमुखःकपिः सुग्रीवःप्लु
वगाधीशःशतवल्याक्षिकाकपो १६ नीलोनलोमनोवेगोधिगंतावानरांगजः इत्येवमादयोयूयंसज्जीभूताभवंतुमे १७ स
र्वैर्गजैःसदश्वैश्चनसहाटकभूषणैः कवचैःसशिरस्त्राणैर्भूषितायांतुसत्वराः १८ सुमंत्रमाहूयसुमंत्रिणंतदाजगादरामोबल
वीर्यशोभनः अमात्यमौलेवदकेत्रयोग्यानराहयंपालयितुंसमर्थाः १९ तदुक्तमेवमाकर्ण्यजगादपरवीरहा हयस्यरक्षणे

योग्यान्बलिनोत्रनराधिपान् २० रघुनाथश्शृणुष्वैतान्नववीरान्सुसंहितान् धनुर्धरान्महाविद्यान्सर्वशस्त्रास्त्रकोविदान् २१ प्रतापाग्र्यं-
नीलरत्नंतथालक्ष्मीनिधिन्नृपम् रिपुतापंचोग्रयंतथाशूरस्त्रविदंन्नृपं २२ राजन्योसौनीलरत्नोमहावीरोरथाग्रणीः सएवलक्षंरक्षेत
लक्षंयुद्धेतुनिर्भयः २३ अक्षौहिणीभिर्दशभिर्यातुधानस्यरक्षणे दंशितैस्तुशिरस्त्राणैर्महाबाहुभिरुद्धतैः २४ प्रतापाग्र्योयोत्र
यंत्वरिपुगर्वमशातयत् सव्यापसव्यबाणानांमोक्तासर्वास्त्रवित्तमः २५ एषक्षोणीभिर्विंशत्यायातुयज्ञहयावने सन्नद्धोरिपुनाशायधु
वाकोदंडदंडभृत् २६ तथालक्ष्मीनिधिस्त्वेषयातुराजन्यसत्तमः यस्तपोभिःशतधृतिंप्रसाद्यास्त्राणिचाभ्यसन् २७ ब्रह्मास्त्रपाशुप
त्यास्त्रंगारुडंनागसंज्ञितम् मायूरंनाकुलंरौद्रंवैष्णवंमेघसंज्ञितं २८ वज्रंपार्वतसंज्ञंचतथावायव्यसंज्ञितम् इत्यादीनांतुशस्त्राणांसंप्र-
योगविसर्गवित् २९ सएषनिजसैन्यानांअक्षौहिण्यैकयायुतः प्रयातुशूरमुकुटःसर्ववैरिप्रभंजनः ३० रिपुतापोयगताद्यगच्छ
त्वग्र्योधनुर्भृताम् सर्वशस्त्रास्त्रकुशलोरिपुदंशदवानलः ३१ गच्छतात्सेनयाबत्स्याचतुरंगसमेतया शत्रुघ्नाज्ञाशिरस्थे
नेदधत्वृघबलोत्कटाः ३२ उग्राश्वोपिमहाराजातथाशस्त्रविदीपितः सर्वेयांतुरूसनद्धातववाहस्यपालकाः ३३ इतिभाषित
माकर्ण्यमंत्रिणःप्रजहर्षच आज्ञापयामाससतान्रूमंत्रकथितान्भटान् ३४ तेऽनुज्ञांरघुनाथस्यप्राप्यमोदंप्रपेदिरे चिरका
लंसापरायंवांच्छंतोयुद्धदुर्मदाः ३५ सन्नद्धाःकवचाद्यैश्चतथाशस्त्रास्त्रवर्तिनः ययुःशत्रुघ्नसंवासंसीतापतिप्रणोदिताः ३७
शेषउवाच अथोक्तोकृषिणारामोविधिवत्पूजयन्क्रमात् आचार्यादीन्नृषीन्सर्वान्यथोक्तवरदक्षिणैः ३८ आचार्यायददौरा
मोहस्तिनंषष्टिहायनम् हयमेकंमनोवेगंरत्नमालाविभूषितं ३९ पौरंदरंरथमेकंचमणिरत्नविभूषितम् चतुर्भिर्वाजिभिर्युक्तंसर्वो
पस्करसंयुतं ४० मणिलक्षंतुप्रत्यक्षंमुक्ताफलतुलाशतं विद्रुमस्यतुलानांतुसहस्रंस्फुटतेजसं ४१ ग्राममेकंरूसंपन्नंना
नाजनसमाकुलं विचित्रसस्यनिष्पन्नंविविधैर्मंदिरैर्वृतं ४२ ब्रह्मणेपितथैवादात्तथैवाध्वर्यवेददौ ऋत्विग्भ्योभूरिशोदत्वा
प्रणनामरघूत्तमः ४३ सर्वेतेविविधावाग्भिराशीर्भिरभियुंजत चिरंजीवमहाराजरामचंद्ररघूद्वह ४४ कन्यादानंभूमिदानं-

गजदानंतथैवच अश्वदानंस्वर्णदानंतिलदानंसमौक्तिकं ४५ अन्नदानंपयोदानमभयंदानमुत्तमं रत्नदानानिसर्वाणिविप्रेभ्य
श्चादिशन्महान् ४६ देहिदेहिधनंदेहिमानेतिब्रूहिकस्यचित् ददात्वन्नंददात्वन्नंसर्वभोगसमन्वितं ४७ इत्थंप्रावर्तनमखो
रघुनाथस्यधीमतः सदक्षिणाद्विजवरैःपूर्णःसर्वशुभक्रियः ४८ अथरामानुजोगत्वामातरंप्रणनामह आज्ञापयाश्वरक्षार्थंमे
षगच्छामिशोभने ४९ त्वत्कृपातोरिपुकुलंजित्वाशोभासमन्वितः ५० मातोवाच पुत्रगच्छमहावीरशिवामार्गाभवंतुते
सर्वानरिपुगणान्जित्वापुनरागच्छसन्मते ५१ पुष्कलंपालयनिजभ्रातृजंधर्मवित्तमम् महाबलिनमद्यापिबालकंलीलयायुतम्
५२ पुत्रगच्छसिचेद्युक्तःपुष्कलेनशुभान्वितः तदाममप्रमोदःस्यान्नान्यथाशोकभागहम् ५३ इतिसंभाष्यमाणास्वामातरंप्रत्यु
वाचसः त्वदीयचरणद्वंद्वंस्मरन्प्राप्स्यामिशोभनम् ५४ पुष्कलंपालयित्वाहंनिजंस्वमिवशोभने स्वनामसदृशंकृत्वापुनरायामि
मोदवान् ५५ इत्युक्त्वाप्रययौवीरोरामंशरयुमंडपे आसीनंमुनिवर्याग्र्यैर्यज्ञवेषधरंवरम् ५६ उवाचमतिवान्वीरःसर्वशोभा
समन्वितः रामाज्ञापयरक्षार्थंहयस्यानुज्ञयातव ५७ रघुनाथोपितच्छ्रुत्वाभद्रमस्त्वितिचाब्रवीत् बालंस्त्रियंप्रमत्तंत्वंमाहं
न्याःशस्त्रविवर्जितम् ५८ तदालक्ष्मीनिधिर्भ्राताजानक्याजनकात्मजः प्रहस्यकिंचिन्नयनंनर्तयन्राममब्रवीत् ५९ लक्ष्मीनि
धिरुवाच रामचंद्रमहाबाहोसर्वधर्मपरायण शत्रुघ्नंशिक्षयतथातथालोकोत्तरोभवेत् ६० कुलोचितंकर्मकुर्वन्नासदाचरितंतथा
गच्छेत्सपरमंधामतेजोबलसमन्वितः ६१ त्वयाप्रोक्तंमहाराजब्राह्मणंनावमानयेत् पित्रातवहतोविप्रःपितृभक्तिपरायणः ६२
त्वयापिसुमहत्कर्मकृतंलोकविगर्हितम् अवध्यांमहिलांयस्त्वंहतवान्मुनिसत्तमः ६३ अग्रजोस्यमहाराजकृतवान्यपराक्रम
म् लक्ष्मणेनकृतंपूर्वंराक्षस्याःकर्णकर्तनम् ६४ एवंकरिष्यतिनृपःशत्रुघ्नःशिक्षयातव यदिनायंतथाकुर्यात्कुलस्यासदृशं
भवेत् ६५ इत्युक्तवंतंतंरामःप्रत्युवाचहसन्निव मेघगंभीरयावाचासर्ववाक्यविशारदः ६६ श्रूयंतुयोगिनःशांतासमदुःख
सुखाःपुनः जानंत्यपारसंसारविस्तारतरणादिकम् ६७ येशूराःसमहेष्वासाःसर्वशस्त्रास्त्रकोविदाः तेचजानंतियुद्धस्यवा-

तेनतुप्रभादृशाः ६८ परोपतापिनोयेवैयेचोत्पथविचारकः तेहंतव्यान्नृपैःसर्वैःसर्वलोकहितैषिभिः ६९ इत्युक्तमाकर्ण्यस
भासदस्तेसर्वेस्मितंचक्रुरिदमस्य कुंभोद्भवःपूजितमेनमश्वंविमोचयामाससुशोभितंतदा ७० इमंमंत्रंसमुच्चार्यवसिष्ठःक
लशोद्भवः कराग्रेणस्पृशन्नश्वंमुमोचजयकांक्षया ७१ वाजिन्गच्छयथालीलंसर्वत्रधरणीतले यागार्थंमोचितोयेनपुनरागच्छ
सत्वरः ७२ अश्वस्तुमोचितःसर्वैर्भटैःशस्त्रास्त्रकोविदैः परीतःप्रययौप्राचींदिशंवायुजवान्वितः ७३ प्रचचारबलंसर्वंकंपय-
न्धरणीतलम् शेषोपिकिंचिन्नतयाफणयाधृतवान्भुवम् ७४ दिशःप्रसेदुःपरितःक्ष्मातलंशोभयान्वितम् वायवस्तुशत्रु
घ्नपृष्ठतोमंदगामिनः ७५ शत्रुघ्नस्यप्रयाणायाभ्युदितस्यभुजोस्फुरत् दक्षिणःशुभमाशंसीजयायचबभूवह ७६ पुष्कलःस्व-
गृहंरम्यंप्रविवेशसमृद्धिमत् वितर्दिभिर्वलक्ष्याभिःशोभितंरत्नवेदिकम् ७७ तत्रापश्यन्निजांभार्यांपतिव्रतपरायणाम्
किंचित्स्वात्दर्शनात्हृष्टांभर्तृदर्शनलालसाम् ७८ मुखारविंदेनचनागवल्लीदलंसुकर्पूरयुतंचचर्वती नानाफलेतोयभवंमहाध
नंबाहूमृणालीसदृशौसुकंकणे ७९ कुचौतुमातुलफलोपमौवरौनितंबबिंबंरसनाविशोभितम् पादौतुलाकोटिधरौसुकोम
लौदधत्यहोऐक्षतसत्पतिंस्वकम् ८० परिरेभेप्रियांधीरोगद्गदस्वरभाषिताम् तदुरोजपरीरंभनिर्भरीकृतदेहकाम् ८१ उवा
चभद्रेगच्छामिशत्रुघ्नपृष्ठरक्षकः रामाज्ञयावाजिमखंपालयन्रक्षसंयुतः ८२ त्वयामेमातरःपूज्याःपादसंवाहनादिभिः तदुच्छि
ष्टंविभुंजानात्तत्कर्मकरणादरा ८३ सर्वाःपतिव्रतानार्योलोपामुद्रादिकाःशुभाः नावमान्यास्त्वयाभीरुस्वतपोबलशोभिताः
८४ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेहयमोचनपुष्कलभार्यासमागमोनामएकादशोऽध्यायः
११ शेषउवाच इत्युक्तवंतंस्वपतिंवीक्ष्यप्रेम्णासुनिर्भरम् प्रत्युवाचहसंतीवाकिंचिद्गद्गदभाषिणी १ नाथतेविजयोभूया
त्सर्वत्ररणमंडले शत्रुघ्नाज्ञाप्रकर्तव्याहयरक्षायथाभवेत् २ स्मरणीयाहिसर्वत्रसेवकीत्वत्पदानुगा कदापिमानसंनाथत्वत्तो
नान्यत्रगच्छति ३ परमायोधनेकांतस्मर्तव्याहंनजातुचित् सत्यांमयितवस्वांतेयुद्धेविजयसंशयः ४ पद्मनेत्रतथाकार्य

मूर्त्तिःश्लाघ्यायथामम हास्यंनैवप्रकुर्वंतिमामीक्ष्यकरताडनैः ५ इयंपत्नीमहाभीतोःकुःसंग्रामेप्रपलायितुः कातरायाहियुध्यं
तिशूराणांसमयःकृतः ६ इत्येवंनहसंत्युच्चैर्यथामेदेवरांगनाः तथाकार्यंमहाबाहोरामस्यहयरक्षणे ७ योद्धात्वमादौसर्व
त्रपरेयेतवपृष्ठतः धनुष्टंकारबधिराःक्रीयंतांबलिनःपरे ८ तवप्रोद्यत्करांभोजकरवालभियाबलम् परेषांभवताक्षिप्रमन्यो-
न्यभयव्याकुलम् ९ कुलमहद्दलंकार्यंपुरान्विजयतात्वया गच्छस्वामिन्महाबाहोतवश्रेयोभवत्विह १० इदंधनुर्गृहाणाशु
महद्गुणविभूषितम् यस्यगर्जितमाकर्ण्यवैरिवृंदंभयातुरम् ११ इमेतेत्विषुधीवीरमध्येतासुद्ययाभवेत् वैरिकोटिविनिष्पेषबा
णकोटिस्फुरिते १२ कवचंत्विदमाधेहिशरीरेकामसुंदरे वज्रप्रभामहादीप्तिर्ईतसंमतसद्दृढम् १३ शिरस्त्राणंनिजोत्तंसे
कुरुकांतमनोरमम् इमेवतंसेविशदेमणिरत्नविभूषिते १४ इतिस्फुविमलवाचंवीरपुत्रीप्रपश्यन्नयनकमलदृष्ट्यावीक्ष्यमाण-
स्तदगम् अधिगतपरिमोदोभारतिःशत्रुजातेरणकरणसमर्थस्तांजगादातिधीरः १५ पुष्कलउवाच कांतेयत्त्वंवदसिमां
तथासर्वंचराम्यहम् वीरपत्नीभवेत्कीर्तिस्तवक्वापिनदुष्यति १६ इतिकांतिमतीदत्तंकवचंमुकुटंवरम् धनुर्महेषुधीखड्गंस
र्वंजग्राहवीर्यवान् १७ परिधायचतत्सर्वंबहुशोभासमन्वितः शुशुभेतीवसुभटःसर्वशस्त्रास्त्रकोविदः १८ तमरुत्रश
स्त्रशोभाढ्यंवीरमालाविभूषितम् कुंकुमागरुकस्तूरीचंदनादिकचर्चितम् १९ नानाकुसुममालाभीराजानुपरिशोभितम्
नीराजयामासमुहुस्तत्रकांतिमतीसती २० नीराजयित्वाबहुशोकिरंतीमौक्तिकैर्मुहुः गलदश्रुचलन्नेत्रापरिरेभेपतिंनिजम् २१
दृढंचपरिरभ्यैतांचिरमाश्वासयत्तदा वीरपत्नीकांतिमतिविरहंमाकृथामम २२ एषगच्छामिसविधेस्तवभामेपतिव्रते इत्यु
क्त्वातांनिजांपत्नींरथमारुरुहेवरम् २३ तंप्रयांतंपतिंप्रेक्ष्यनयनैर्निमिषोज्झितैः विलोकयामाससमहापातिव्रतपरायणा २४
सयौयोजनकंद्रष्टुंजननींप्रेमविह्वलाम् गत्वाथपितरंतांचववंदेशिरसामहान् २५ मातापुत्रंपरिष्वज्यस्वांकमारोपयत्तदा
मुंचंतीबाष्पनिचयंस्वस्त्यास्त्वितिजगादसा २६ पितरंप्राहभरतंरामोयज्ञकरःपरः पालनीयोलक्ष्मणेनभवद्भिश्चमहात्म

भिः २७ आज्ञप्तोसौजनन्याचपित्राहृषितयागिरा ययौशत्रुघ्नकटकंमहावीरविभूषितम् २८ रथिभिःपत्तिभिर्वीरैःसदश्वैः
सादिभिर्वृतः ययौमहाराजरघुराजयोग्यहयाग्रणीः २९ गच्छन्पांचालदेशांश्चकुरूंश्चैवोत्तरान्कुरून् दशार्णान्श्रीविशा-
लांश्चसर्वशोभासमन्वितः ३० तत्रतत्रोपशृण्वानोरघुवीरयशोखिलम् रावणाक्रूरघातेनभक्तरक्षाविधायकम् ३१ पुनश्चह
यमेधादिकार्यमारभ्यपावनम् यशोवितन्वन्भवनेलोकान्रामोवितामयात् ३२ तेभ्यस्तुष्टोददौराजारत्नानिविविधानिच
महाधनानिवासांसिशत्रुघ्नःप्रददौमहान् ३३ सुमतिर्नामतेजस्वीसर्वविद्याविशारदा रघुनाथस्यसचिवःशत्रुघ्नानुचरोवरः ३४ य-
यौतेनमहावीरोग्रामान्जनपदान्बहून् रघुनाथप्रतापेननकोपिह्रतवान्हयम् ३५ देशाधिपायेबहवोमहाबलपराक्रमाः ह-
स्त्यश्वरथपादातूनचतुरंगसमन्विताः ३६ संपादोबहुशोनीत्वामुक्तामाणिक्यसंयुताः शत्रुघ्नहयरक्षार्थमागत्यप्रणतामुहुः ३७
इदंराज्यंधनंसर्वंसपुत्रपशुबांधवम् रामचंद्रस्यसर्वंहिनमदीयंरघूद्वह ३८ एवंतदुक्तमाकर्ण्यशत्रुघ्नःपरवीरहा आज्ञां
स्वांतत्रसंज्ञाप्ययौतैःसहितःपथि ३९ एवंक्रमेणसंप्राप्तःशत्रुघ्नोहयसंयुतः अहिच्छत्रापुरींब्रह्मन्नानाजनसमाकुलाम्
४० ब्रह्मद्विजसमाकीर्णांनानारत्नविभूषिताम् सौवर्णैःस्फटिकैर्हर्म्यैर्गोपुरैःसमलंकृताम् ४१ यत्ररंभातिरस्कारकारिण्यः
कमलाननाः दृश्यंतेसर्वहर्म्येषुललनालीलयान्विताः ४२ यत्रस्वाचारललिताःसर्वभोगैकभोगिनः धनदानुचराएवतु-
थालीलासमन्विताः ४३ यत्रवीराधनुर्हस्ताःशरसंधानकोविदाः कुर्वंतितत्रराजानंसुहृष्टंसुमुदाभिधम् ४४ एवंविधंददर्शाथ
नगरंदूरतःप्रभुः पार्श्वेतस्यपुरस्त्येष्टमुद्यानंशोभयान्वितम् ४५ पुन्नागैर्नागपत्रैश्चतिलकैर्देवदारुभिः अशोकैःपाटलैश्चचू-
तैर्मंदारैःकोविदारकैः ४६ आम्रजंबूकदंबैश्चप्रियालपनसैस्तथा शालैस्तालैस्तमालैश्चमल्लिकाजातियूथकैः ४७ नीपैः-
कदंबैर्बकुलैश्चंपकैर्मदनादिभिः शोभितंसददर्शाथशत्रुघ्नःपरवीरहा ४८ हयोगतस्तद्वनमध्यदेशेतमालतालादिसुशोभितेवै-
ययौततस्त्वनुगतएववीरोधनुर्धरैःसेवितपादपद्मः ४९ ददर्शतत्ररचितंदेवायतनमद्भुतम् इंद्रनीलैश्चवैडूर्यैस्तथामारकतैरपि ५०

शोभितंसुरसेवार्हंकैलासप्रस्थमेवकिम् जातुरूपमयैःस्तंभैःशोभितंमोहनंमहत् ५१ हस्वात्तद्रघुनाथस्यभ्राताटेवालयंवरम्
पप्रच्छसुमतिंस्वीयंमंत्रिणंवदतांवरम् ५२ शत्रुघ्नउवाच वदामात्यवरेदंकिंकस्यदेवस्यकेतनम् कादेवीपूज्यतेचात्र कं
स्यहेतोःस्थितानघ ५३ एवमाकर्ण्यसर्वज्ञोमंत्रीविन्निजगादह शृणुष्वैकमनावीरयथावदिहसर्वशः ५४ कामाख्यायाःपरं
स्थानंविद्धिविश्वैकमातरम् यस्यादर्शनमात्रेणसर्वसिद्धिःप्रजायते ५५ देवासुरास्तुयांस्तुत्वानत्वाप्राप्ताखिलांश्रियम् धर्म
कामार्थमोक्षाणांदात्रीभक्तानुकंपिनी ५६ याचितासुमदेनात्राहिछत्रापतिनापुरास्थिताकरोतिसकलभक्तानांदुःखहारिणी
५७ तांनमस्कुरुशत्रुघ्नसर्ववीरशिरोमणे नत्वाशुसिद्धिंप्राप्नोतिसुरासुरदुर्लभम् ५८ इतिश्रुत्वाथतद्वाक्यंशत्रुघ्नःशत्रु
तापनः पप्रच्छसकलांवार्तांभवान्याःपुरुषर्षभः ५९ शत्रुघ्नउवाच कोहिछत्रापतीसुजासुमदःकिंतपःकृतम् केनचे-
यंतुलोकानांमातातुष्टात्रसुस्थिता ६० वदसर्वंमहामात्यनानार्थपरिबृंहितम् यथावत्त्वंहिजानासितस्माद्वदमहामते ६१
सुमतिरुवाच हेमकूटेगिरिःपूर्वंसुवृंदेवोपशोभितः तत्रास्तितीर्थंविमलंऋषिवृंदसुसेवितम् ६२ सुमदोहितपस्तेपेह
तमातृपितृप्रजः अरिभिःसर्वसामंतैर्जगामतपसेहितम् ६३ वर्षाणित्रीणिसयदात्वेकेनमनसास्मरन् जगतांमातरंदध्यौना
साग्रस्तिमितेक्षणः ६४ वर्षाणित्रीणिशुष्काणांपर्णानांभक्षणंचरन् चकारपरमुग्रंसतपःपरमदुश्चरम् ६५ अब्दानित्री
णिसलिलेसीतकालेममज्जसः ग्रीष्मेचकारपंचाग्नीन्प्रावृट्सुजलदोन्मुखः ६६ त्रीणिवर्षाणिपवनंसंरुध्यस्वांतगोचरम्
भवानींसंस्मरन्धीरोनचकिंचनपश्यति ६७ वर्षेतुद्वादशेतीतेहस्वेंद्रःपरमंतपः बिभीयमनसातीवशक्रःस्वल्पसमृद्धिमान्
६८ आदिदेशसकामंतुपरिवारपरीवृतम् अप्सरोभिःसुसंयुक्तंब्रह्मेंद्रादिजयोद्यतम् ६९ गच्छकामसखेमद्धिप्रियमा
चरमोहन सुमदस्यतपोविघ्नंसमाचरयथाभवेत् ७० इतिश्रुत्वामहद्वाक्यंतुराषाहस्वयंप्रभुः उवाचविश्वविजयेप्रौढग-
र्वैरघूद्वह ७१ कामउवाच स्वामिन्कोसौहिसुमदःकिंतपःस्वल्पकंपुनः ब्रह्मादीनांतपोभंगंकरोम्यस्यतुकाकथा

७२ मद्बाणबलनिर्भिन्नश्चंद्रस्तारांगतःपुरा त्वमप्यहल्यांभगवन्विश्वामित्रस्तथोर्वशीम् ७३ चिंतांमाकुरुदेवेंद्र सेव
के मयिसुस्थिते गच्छगच्छामिसुमदं देवान्पालयमारिष ७४ इत्थमुक्त्वाकामदेवो हेमकूटंगिरिंययौ वसंतेनयुतःसख्या
तथैवाप्सरसांगणैः ७५ वसतस्तत्रसकलान्वृक्षान्पुष्पफलैर्युतान् कोकिलाषट्पदश्रेण्याघुष्टानाशुचकारह ७६ वायुः
सुशीतलोवातिदक्षिणांदिशमाश्रितः कृतमालासरित्तीरलवंगकुसुमान्वितः ७७ एवंविधेवनेवृत्तेरंभानामाप्सरोवरा सु-
रवीभिःसंवृतातत्रजगामसुमदांतिकम् ७८ तत्रारभतगानंसाकिंनरस्वरशोभनम् मृदंगपणवानकवाद्यभेदविशारदा
७९ तद्गानमाकर्ण्यनराधिपोसौवसंतमालोक्यमनोहरंच तथान्यपुष्टार्वदितंमनोगंचकारचक्षुःपरिवर्तनंबुधः ८० तंप्रबुद्धं
नृपंवीक्ष्यकामःपुष्पायुधस्त्वरन् चकारसत्वरंसज्यंधनुस्तत्पृष्ठतोनघ ८१ एकाप्सरास्तस्यनृपस्यपादयोःसंवाहनंनर्तित-
नेत्रपल्लवा चकारचान्यत्रकटाक्षवीक्षणंचकारकाचित्भृशमंगचेष्टितम् ८२ अप्सरोभिस्तथाचीर्णंकामविह्वलमानसः
चिंतयामासमतिमान्जितेंद्रियशिरोमणिः ८३ एतामेतपसोविघ्नकारिण्योप्सरसांवराः शक्रेणप्रेषिताःसर्वाःपरिष्यंतियथा
तथम् ८४ इतिसंचिंत्यसुतपास्ताउवाचवरांगनाः कायूयंकुत्रसंस्थाःकिंभवतीनांचिकीर्षितम् ८५ अत्यद्भुतंजातमहोय
द्भवत्योक्षिगोचराः यास्तपोभिःसुदुःप्रापास्ताश्चमेतपसागताः ८६ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामा
श्वमेधेकामाख्यानंनामद्वादशोऽध्यायः १२ शेषउवाच इतिवाक्यंसमाकर्ण्यसुमदस्यतपोनिधेः जगदुःकामसेनास्ता
रंभाद्याप्सरसोमुदा १ त्वत्तपोभिर्वयंकांतप्राप्ताःसर्ववरांगनाः तासांयौवनसर्वस्वंभुंक्ष्वत्यजतपःफलम् २ इयंघृताची
सुभगाचंपकाभशरीरभृत् कर्पूरगंधललितंभुनक्तुत्वन्सुखामृतम् ३ एतांमहाभागसुशोभविभ्रमांमनोहरांगींघनपीनस-
त्कुचाम् कांतोपभुंक्ष्वाशुनिजोग्रपुण्यतःप्राप्तांपुनस्त्वंत्यजदुःखजातम् ४ ममाप्यनर्घ्याभरणोपशोभितामंदारमालांपरि
शोभिवक्षसम् नानारताख्यानविचारचंचुरांदृढयथास्यात्परिरंभणंकुरु ५ पिबामृतंममृतवक्त्रनिर्गतंविमानमारुह्यव

रंभयासह स्वमेरुशृंगंबहुपुण्यसेवितंसंप्राप्यभोगंकुरुसत्तपःफलम् ६ तिलोत्तमाद्यानवरूपशोभितागृण्हंतुतेमूर्धनितापवारणम्
स्वचामरौसंततधारयांचितौगंगाप्रवाहविवसंदरोत्तम ७ शृणुष्वभोःकामकथामनोहरापिबामृतंदेवगणादिवांछितम् उद्यानमासाद्य
चनंदनाभिधंवरांगनाभिर्विरहंकुरुप्रभो ८ इत्युक्तमाकर्ण्यमहामतिर्नृपोविचारयामासकुतोह्युपस्थिताः मयास्वसृष्टस्तपसासु
रांगनाःप्रत्यूहएषोत्रविधेयमेवकिम् ९ इतिचिंतातुरोराजास्वांतेचिंतयन्सुधीः जगादमतिमान्वीरःस्वमदोदेवतागणान् १० यू॰
यंतुममचित्तस्थजगन्मातृस्वरूपकाः मयासंचिंत्यतेयाहिसापितद्भूयसांगणैः ११ इदंतुच्छंस्वर्गसुखंप्राप्तव्यंतुन्नस्वल्पकम्
मत्स्वामिनीमयाभक्त्यासेवितादास्यतेवरम् १२ यत्कृपातोविधिःसत्यंलोकंप्राप्तोमहानभूत् सामेदास्यतिसर्वंहिभक्तदुःखघात
कारिणी १३ किंनंदनंकिंतुगिरिःकनकेनस्वमंडितः किंस्वधास्वल्पपुण्येनप्राप्यादानवदुःखदा १४ इतिवाक्यंसमाकर्ण्यका
मस्तुविविधैःशरैः प्राहरन्नरदेवस्यकर्तुंकिंचिन्नवैप्रभुः १५ कटाक्षैर्नूपुरारावैःपरिरंभैर्विलोकनैः नतस्यचित्तंविभ्रांतंकर्तुं
शक्तावरांगनाः १६ गत्वायथागतंशक्रंजगदुर्धीरधीर्नृपम् तच्छ्रुत्वामघवावीरसेवामारभतात्मनः १७ अथनिश्चितमालोक्यया
दपद्मेस्वकेंबिका जितेंद्रियंमहाराजंप्रत्यक्षाभूत्कृतोचिता १८ पंचास्यापृष्ठललितापाशांकुशधरावरा धनुर्बाणधरामाता
जगत्पावनपावनी १९ तांवीक्ष्यमातरंधीमान्सूर्यकोटिसमप्रभाम् धनुर्बाणसृणीपाशंदधानांहर्षमाप्तवान् २० शिरसाबहु
शोनत्वामातरंभक्तभाविताम् हसंतींनिजदेहेषुस्पृशंतींपाणिनामुहुः तुष्टावभक्त्याकलितचित्तवृत्तिर्महामतिः गद्गदस्वरसंयु
क्तःकंटकांगोपमीयत २२ जयदेविमहादेविभक्तवृंदैकसेविते ब्रह्मरुद्रादिदेवेंद्रसेविताङ्घ्रियुगेनघे २३ मातस्त्वकलाधि
ष्ठमेतद्भातिचराचरम् त्वदृतेनास्तिसर्वत्रमातर्भद्रेनमोस्तुते २४ महीत्वयाधारशक्त्यास्थापिताचलतीनहि सपर्वतवनोद्या
नदिग्गजैरुपशोभिता २५ सूर्यस्तपतितीक्ष्णैःस्वैःकिरणैःप्रतपन्महीम् त्वच्छक्त्यावसुधासंस्थंरसंगृण्हन्विमुंचति २६
अंतर्बहिःस्थितोवन्हिर्लोकानांप्रकरोतिशम् त्वत्प्रसादान्महादेविसुरासुरनमस्कृते २७ त्वंविद्यात्वंमहामायाविष्णोर्लोके॰

कपालिनी स्वशक्त्यासृजसिविश्वंत्वंपालयसिमोहिनि २८ त्वत्तःसर्वेसुराःप्राप्यसिद्धिंसुखमयंतिवै मांपालयकृपानाथेविदि
तेभक्तवल्लभे २९ रक्षमांसेवकंमातस्त्वदीयचरणारणम् कुरुमेवांछितांसिद्धिंमहापुरुषपूर्वजे ३० सुमतिरुवाच एवंतु
ष्टाजगन्मातावृणीष्ववरमुत्तमम् उवाचभक्तःसुमदंतपसाकृशदेहिनम् ३१ इत्येतद्वाक्यमाकर्ण्यप्रहृष्टःसुमदोनृपः वव्रेनि
जंहृतंराज्यंहतदुर्जनकंटकम् ३२ महेशीचरणद्वंद्वेभक्तिमव्यभिचारिणीम् प्रांतेमुक्तिंतुसंसारवार्धिनिस्तारिणींपुनः ३३
कामाक्ष्युवाच राज्यंप्राप्नुहिसुमदसर्वत्रहतकंटकम् महिलारत्नसंजुष्टःसदपत्यद्वयोभव ३४ तववैरिपराभूतिमाभूयात्सुम-
दाभिध यदातुरावणंहत्वारघुनाथोमहायशाः ३५ करिष्यत्यश्वमेधंहिसर्वसंभारशोभितम् तस्यभ्रातामहावीरःशत्रुघ्नःपर
वीरहा ३६ पालयन्हयमायास्यत्यत्रवीरादिभिर्वृतः तस्मैसर्वंसमर्प्यैवंराज्यमृद्धधनादिकम् ३७ पालयिष्यसियोधैस्त्वं-
धनुर्धारिभिरुद्भटैः ततस्तुपृथिवींसर्वांभ्रमिष्यसिमहामते ३८ ततोरामंनमस्कृत्यब्रह्मेंद्रेशादिसेवितम् मुक्तिंप्राप्स्यसि
दुःप्रापांयोगिभिर्यमसाधनैः ३९ तावत्कालमिहस्थास्येयावद्राज्यहयागमः पश्चात्तुसर्वमुद्धृत्यगतासिपरमंपदम् ४० इ-
त्युक्त्वांतर्दधेदेवीसुरासुरनमस्कृता सुमदोप्यहिछत्रायांशत्रून्हत्वानृपोभवत् ४१ एषराजासमर्थोपिबलवाहनसंयुतः नगृ
हीष्यतितेवाहंमहामायासुरक्षितः ४२ श्रुत्वाप्राप्तंपुरीपार्श्वेहयमेधंतथोत्तमम् त्वांचसर्वैर्महाराजैःसेविताङ्घ्रिंमहामतिम् ४३
सर्वदास्यतिसर्वज्ञराजासुमदनामधृक् अधुनातन्महाराज रामचंद्रप्रतापतः ४४ शेषउवाच इतिवृत्तंसमाकर्ण्यसुमदस्य
महायशाः साधुसाध्वितिचोवाचजहर्षमतिमान्बली ४५ अहिछत्रापतिःसर्वैःसुभटैःपरिवारितः सभायांसुखमास्तेस्मबहुरा
जन्ययेवितः ४६ ब्राह्मणावेदविदुषोवैश्याधनसमुद्वहाः राजानंपर्युपासंतेसुमदंशोभयान्वितम् ४७ वेदविद्याविनोदेनन्यायि
नांब्राह्मणावराः आशीर्वदंतितंभूपंसर्वलोकैकरक्षकम् ४८ एतस्मिन्समयेकश्चिदागत्यनृपतिंजगौ स्वामिन्नजानेकस्यास्ति
हयःपत्रधरोंतिके ४९ तच्छ्रुत्वासेवकंश्रेष्ठंप्रेषयामाससत्वरः जानीहिकस्यराज्ञोयमश्वोममपुरांतिके ५० गत्वाथसेवकस्त-

रा०मे० १७

अ० १३

तज्ज्ञात्वावृत्तांतमादितः निवेदयामासनृपंमहाराजन्वसेवितम् ५१ सश्रुत्वारघुनाथस्यहृदयंनित्यमनुस्मरन् आज्ञापयामासज
नंसर्वंराजाविशारदः ५२ लोकामदीयान्सर्वेयेधनधान्यसमाकुलाः तोरणादीनिगेहेषुमंगलानिसृजंत्विह ५३ कन्याःसहस्र
शोरम्याःसर्वाभरणभूषिताः गजोपरिसमारूढायांतुशत्रुघ्नसंमुखम् ५४ इत्यादिसर्वमाज्ञाप्ययधौराजास्वयंततः पुत्रपौत्रमहे
ल्यादिपरिवारपरीवृतः ५५ शत्रुघ्नःसुमहामात्यैःसुभटैःपुष्कलादिभिः संयुतोभूपतिवीरंददर्शसुमदाभिधम् ५६ हस्तिभिःसा
दिभिर्युक्तैःपत्तिभिःपरमायनैः वाजिभिर्भूषितैर्वीरैःसंयुतंवीरशोभितम् ५७ अथागत्यमहाराजंशत्रुघ्नंनतवान्मुदा धन्यो
स्मिकृतकृत्योस्मिकृतकृत्यंकृतंवपुः ५८ इदंराज्यंगृहाणाशुमहाराजोपशोभितम् महामाणिक्यमुक्तादिमुद्राधनसुपूरित-
म् ५९ स्वामिन्चिरंप्रतीक्ष्यामिहयस्यागमनंपुरा कामाक्ष्याकथितंपूर्वंजातंसप्रीतितत्तथा ६० विलोकयपुरंमह्यंकृतार्थान्कुरुमा
नवान् पावयास्मत्कुलंसर्वंरामानुजमहीपते ६१ इत्युक्त्वारोहयामासकुंजरेंद्रंद्रुसंनिभम् पुष्कलंचमहावीरंतयाप्ययमथारुहत्
६२ भेरीपणवतूर्याणांवीणादीनांस्वनस्तथा व्याप्नोतिस्ममहाराजसुमदेनप्रणादितः ६३ कन्याःसमागत्यमहानरेंद्रंशत्रुघ्न
मिंद्रादिकसेवितांघ्रिम् करिस्थितामौक्तिकवृंदसंघैर्वर्धापयामासुरितःप्रयुक्ताः ६४ शनैःशनैःसमागत्यपुरीमध्येजनैर्मुदा व-
र्धापितोगृहंप्रापतोरणादिकभूषितम् ६५ हयरत्नेनसंयुक्तस्तथावीरैःसुशोभितः राज्ञापरिवृतोराजाशत्रुघ्नःप्रापमंदिरम्
६६ अर्घादिभिःपूजयित्वारघुनाथाग्रजंमुदा सर्वंसमर्पयामासरामचंद्रायधीमते ६७ इतिश्रीपद्मपुराणेपातालखंडेशेष-
वात्स्यायनसंवादेरामाश्वमेधेत्रयोदशोऽध्यायः १३ शेषउवाच अथसमागतसंतुष्टंशत्रुघ्नंप्राहभूमिपः रघुनाथकथांश्रोतुं
सुश्रूषुर्भरतर्षभः १ सुमदउवाच कच्चिद्दास्तेसुखंरामःसर्वलोकशिरोमणिः भक्तरक्षावतारोयंममानुग्रहकारकः २
धन्यालोकाइमेपूर्वेरघुनाथमुखांबुजम् येपिबंत्यनिशंचाक्ष्णांपुटकैःपरिमोदिताः ३ अर्थजातंमदीयंचनितरांपुरुषर्षभ कृ
तार्थंकुलभूम्यादिवस्तुजातंमहामते ४ कामाक्ष्याश्चप्रसादोमेकृतःपूर्वंदयार्दया रघुनाथमुखांभोजंद्रक्ष्येयंसकुटुंबकः ५

इत्युक्तवतिवीरेतुस्रुमदेपार्थिवोत्तमे सर्वंतत्कथयामासरघुनाथगुणोदयं ६ त्रिरात्रंतत्रस्थित्वातुरघुनाथानुजःपुरे गंतुंचकार
धिषणांराज्ञासहमहामतिः ७ तज्ज्ञात्वासुमदःशीघ्रंपुत्रराज्येभ्यषेचयत् शत्रुघ्नेनमहाराजापुष्कलेनानुमोदितः ८ वासां
सिबहुरत्नानिधनानिविविधानिच शत्रुघ्नसेवकेभ्योसोप्रादात्तत्रमहामतिः ९ ततोगमनमारेभेमंत्रिभिर्बहुवित्तमैः पत्तिभि
र्वाजिभिर्नागैःसदश्वैरथकोटिभिः १० शत्रुघ्नःसहितस्तेनसुमदेनधनुर्भृता जगाममार्गेविहसन्रघुनाथप्रतापभृत् ११ पयो
ष्णीतीरमासाद्यजगामसहयोत्तमः पृष्ठतोनुययुःसर्वेयोधावीरप्रहारिणः १२ आश्रमान्विविधान्पश्यन्ऋषीणांसुतपोभृताम्
तत्रतत्रविचक्षणोरघुनाथगुणोदयम् १३ एषधीमान्हरिर्यातिहरिणापरिरक्षितः हरिभिर्हरिभक्तैश्चहरिचर्यारुहेमुहुः १४ इ
तिशृण्वन्शुभावाचोमुनिभिःपरितःप्रभुः तुतोषभक्त्युत्कलितचित्तवृत्तिभृतांमहान् १५ ददर्शाश्रमसुश्रेष्ठंजनजंतुसमाकुलं वे
दध्वनिहताशेषमंगलंशृण्वतांनृणाम् १६ अग्निहोत्रहविर्धूमपवित्रितनभोखिलम् मुनिवर्यकृतानेकयागयूपसुशोभितम् १७
यत्रगावस्तुहरिणायात्वंतेपालनोचिताः मूषकानांशतंतस्मिन्बिडालास्येस्वकंवपुः १८ मयूरैर्नकुलैःसार्द्धं क्रीडंतिफणिनोनिश
म् गजैःसिंहैर्नित्यमत्रस्थियतेमित्रतांगतैः १९ एणास्त्यन्नत्सनीवारभक्षणेपुष्कृतादरात् नभयंकुर्वतेकालाद्रक्षितामुनिवृंदकैः
२० गावःकुंभसमोधस्कानंदिनीसमविग्रहाः कुर्वंतिचरणोत्थेनरजसातंपवित्रितम् २१ मुनिवर्यैःसमित्पाणिपद्मैर्धर्मक्रियां
चितं दृष्ट्वापप्रच्छसुमतिंसर्वज्ञंराममंत्रिणं २२ शत्रुघ्नउवाच सुमतेकस्यसंस्थानंमुनेर्भातिपुरोगतम् निर्वैरजंतुसंसेव्यं
मुनिवृंदसमाकुलम् २३ श्रोष्यामिमुनिवार्ताचविदधामिपवित्रितम् निजवपुस्तदीयाभिर्वार्ताभिर्माननादिभिः २४ इति
श्रुत्वामहद्वाक्यंशत्रुघ्नस्यमहात्मनः कथयामाससचिवोरघुनाथस्यधीमतः २५ सुमतिरुवाच च्यवनस्याश्रमंविद्धिमहातापस
शोभितं निर्वैरिजंतुसंकीर्णंमुनिपत्नीभिरावृतम् २६ योसौमहामुनिःस्वर्गवैद्ययोर्भागमादधात् स्वायंभुवमहायज्ञेशक्र
मानविभेदनः २७ महामुनेःप्रभावोयंनकेनापिसमाप्यते तपोबलसमृद्धस्यवेदमूर्तिधरस्यह श्रुत्वारामानुजोवार्तांच्य

वनस्थमहामुनेः सर्वंपप्रच्छसुमतिंशक्रमानादिभंजनम् २९ शत्रुघ्नउवाच कदासीदस्ययोर्भागंचकारसुरपंक्तिषु किंकृतंदे
वराजेनस्वायंभुवमहामरवे ३० सुमतिरुवाच ब्रह्मवंशेतिविख्यातोमुनिर्भृगुरितिश्रुतः कदाचिद्गतवान्सायंसमिदाहरणंप्रति
३१ तदामरवविनाशायदुर्मनाराक्षसोबली आगत्योच्चैर्जगादेदंमहाभयकरंवचः ३२ कुत्रास्तिमुनिबंधुःसकुत्रचिन्महिलान
घा पुनःपुनरुवाचेदंवचोरोषसमाकुलं ३३ तदाहुतवहोज्ञात्वाराक्षसान्द्वयमागतम् दर्शयामासतज्जायामंतर्वत्नीमनिंदिता
म् ३४ जहारराक्षसस्तांतुरुदंतींकुररीमिव भृगोरक्षःपतेरक्षरक्षनाथतपोनिधे ३५ एवंवदंतीमार्तातांगृहीत्वानिरगाद्बहिः
दुष्टोवाक्यप्रहारेणबोधयंस्तपसःस्वर्तीं ३६ ततोमहाभयत्रस्तोगर्भश्चोदरमध्यतः पपातप्रज्वलन्नेत्रोवैश्वानरइवांगजः ३७
तेनाक्तंमावज्ञाशुत्वंभस्मीभवसुदुर्मते नहिसाध्विपरामृश्यकृत्वाश्रेयोधिगच्छसि ३८ इत्युक्तःसपपाताशुभस्मीभूतकलेवरः मा
तानदार्भकंनीताजगामाश्रममुन्मनाः ३९ भृगुर्वह्निकृतंसर्वंज्ञात्वाकोपसमाकुलः सशापसर्वभक्षस्त्वंभवदुष्टारिसूचक ४० तदाशसो
निदुःखार्तोजग्राहांघ्र्याशुशुक्षणिः कुरुमेनुग्रहंस्वामिन्दययाचमहामते ४१ मयानृतंवचोभीत्याकथितंचगुरूद्वहा तस्मान्ममो
परिकृपांकुरुधर्मशिरोमणे ४२ तदानुग्रहमाधाच्चसर्वभक्षोभवान्शुचिः इत्युक्तवान्हुतभुजंदयार्द्रोमुनितापसः ४३ गर्भाच्च्यु
तस्यपुत्रस्यजातकर्मादिकंशुचिः चकारविधिवद्विप्रोदर्भपाणिःसुमंगलः ४४ च्यवनाच्च्यवनंप्राहुःपुत्रंसर्वेतपस्विनः शनैःशनैः
सववृधेशुक्लप्रतिपदिंदुवत् ४५ सजगामतपःकर्तुंरेवांलोकैकपावनीम् शिष्यैःपरिवृतःसर्वैस्तपोबलसमन्वितैः ४६ गत्वा
तत्रतपस्तेपेवर्षाणामयुतंमहान् अंसयोःकिंशुकौजातौवल्मीकोपरिशोभितौ ४७ मृगाआगत्यतस्यांगेकंडूंविदधुरुत्सुकाः
नकिंचित्सहिजानातिदुर्वारस्तपसावृतः ४८ कदाचिन्मनुरुद्युक्तस्तीर्थयात्रांप्रतिप्रभुः सकुटुंबोययौरेवांमहाबलपरीवृतः ४९
तत्रस्नात्वामहानद्यांसंतर्प्यपितृदेवताः दानानिब्राह्मणेभ्यश्चप्रादाद्विष्णुप्रतुष्टये ५० तत्कन्याविचरंतीसावनमध्येइ
तस्ततः सखीभिःसहितारम्यातप्तहाटकभूषणा ५१ तत्रदृष्ट्वाथवल्मीकंमहांतंतरुशोभितम् उन्मेषोन्मेषरहितंतंतेजःकिं

न्विद्ददर्शसा ५२ गत्वातत्रशलाकाभिःसातुदद्रुधिरंस्रवत् दृष्ट्वाराजांगनाखेदंप्रापवत्यतिदुःखिता ५३ नजनन्यैतथापित्रेशशं
साधेनविप्लुता स्वयमेवात्मनात्मानंसाशुशोचभयातुरा ५४ तदाभूश्चलितापाराजन्दिवश्चोल्कापपातह धूम्रादिशोभवन्सर्वाःसू
र्यश्चपरिवेषितः ५५ तदाराज्ञोहयानष्टाहस्तिनोबहवोमृताः धनंनष्टंरत्नयुतंकलहोभून्मिथस्तदा ५६ तदालोक्यनृपोभीतः
किंचिदुद्विग्नमानसः जनानपृच्छत्केनापिमुनयेत्पराधितम् ५७ पारंपर्येणतज्ज्ञात्वास्वपुत्र्याःपरिचेष्टितम् ययौसुदुःखि
तस्तत्रससृष्टबलवाहनः ५८ तंवैतपोनिधिंवीक्ष्यमहतातपसायुतम् स्तुत्वाप्रसादयामाससमुनिवर्यदयांकुरु ५९ तस्मैतुष्टो-
जगादार्थमुनिवर्योमहातपाः तवात्मजाकृतंसर्वमुत्पाताद्यघमेवहितत् ६० तवपुत्र्यामहाराजचक्षुर्विस्फोटनंकृतं बहुसुस्रावरु
धिरंजानतीत्वामुवाचन ६१ तस्मादियंमहाभूपमह्यंदेयायथाविधि ततश्चोत्पातशमनंभविष्यतिनसंशयः ६२ तच्छ्रुत्वादुः
खितोराजाप्रज्ञाचक्षुषआत्मजाम् ददौकुलवयोरूपांस्वलक्षणसुशोभिताम् ६३ दत्वायदानृपेणैयंकन्याकमललोचना तदोत्पाताः
शमंयाताःसर्वेमुनिवरोत्तम ६४ राजादत्वात्मजांतस्मैमुनयेतपसांनिधे प्रापस्वानगरींभूपोदुःखितोयंदयायुतः ६५ इतिश्रीप
द्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेचतुर्दशोऽध्यायः १४ शेषउवाच अथर्षिःस्वाश्रमंगत्वामानव्यासहभार्यया मु
दंप्रापहताशेषपातकोयुक्तयातया १ सामानवीतंनरमात्मनःपतिंनेत्रेणहीनंजरसागतौजसम् सिषेवएनंहरिमेधितोजसंनिजंपतिं
मंगलदेवतायथा २ शुश्रूषतीस्वंपतिमिंगितज्ञामहानुभावंतपसांनिधिंप्रियम् परांमुदंप्रापसतीमनोहराशचीयथाशक्रसुसेवनोद्यता
३ चरणौसेवतेतन्वीसर्वलक्षणलक्षिता राजपुत्रीसुंदरांगीफलमूलोदकाशना ४ नित्यंतद्वाक्यकरणेतत्परापूजनेरता का
लक्षेपंप्रकुरुतेसर्वभूतहितेरता ५ विसृज्यकामंदंभंचद्वेषंलोभमथोमदम् अप्रमत्तोद्यतानित्यंच्यवनंसमतोषयत् ६ एवंत
स्यप्रकुर्वाणासेवांवाक्कायकर्मभिः सहस्राब्दंमहाराजन्साचकामंमनस्यधात् ७ कदाचिद्देवभिषजावागतावाश्रमेमुनेः स्वा
गतेनसुसंभाव्यतयोःपूजांचकारसा ८ शर्यातिकन्याकृतपूजनौतौपाद्यादिनातोषितचित्तवृत्ती तामूचतुःस्नेहवशेनसुंदरंवर

रा०भे०
१९

वृणीष्वेतिमनोहरांगीम् ९ तुष्टौतौवीक्ष्यभिषजौदेवानांवरयाचने मतिंचकारनृपतेःपुत्रीमतिमतांवरा १० इत्यभिप्रायमाल-
क्ष्यवाचमूचेनृपात्मजा दत्तांमेचक्षुषीपत्युर्यदितुष्टौयुवांसुरौ ११ इत्येतद्वचनंश्रुत्वासुकन्यायामनोहरम् सतीत्वंचविलोक्यै
दमूचतुर्भिषजौवरौ १२ त्वत्पतिर्यदिदेवानांभागंयज्ञेदधात्यसौ आवयोरधुनाकुर्वःचक्षुषोःस्फुटदर्शनम् १३ च्यवनो-
ऽप्योमितिप्राहभागदानेवरौजसौः तदातिहृष्टौदस्रौतमूचतुस्तंपतांवरम् १४ निमज्जतांभवानस्मिन्ह्रदेसिद्धविनिर्मिते
इत्युक्तोजरयाग्रस्तदेहोधमनिसंसतः १५ ह्रदंप्रवेशिताश्विभ्यांस्वयंचामज्जतांह्रदे पुरुषास्त्रयउत्तस्थुरपीच्यावनिताप्रियाः
१६ रुक्मस्रजःकुंडलिनस्तुल्यरूपाःसुवाससः तान्निरीक्ष्यवरारोहासुरूपान्सूर्यवर्चसः १७ अजानतीपतिंसाध्वीत्वश्विनौ
शरणंययौ दर्शयित्वापतिंतस्यैपातिव्रत्येनतोषितौ १८ ऋषिमामंत्र्यययतुर्विमानेनत्रिविष्टपम् यक्ष्यमाणेक्रतौस्वीयभागका
र्याशयायुतौ १९ कालेनभूयसाक्षामांकर्शितामंघ्रिचर्यया प्रेमगद्गदयावाचापीडितःकृपयाब्रवीत् २० तुष्टोहमद्यतवभा
मिनिमानदायाःशुश्रूषयापरमयापरयाचभक्त्या योदेहिनामयमतीवसुहृत्स्वदेहोनावेक्षितःसमुचितःक्षपितुंमदर्थे २१ ये
मेस्वधर्मनिरतस्यतपःसमाधिविद्यात्मयोगविजिताभगवत्प्रसादाः तानेवतेमदनुसेवनयावरुद्धान्दृष्टिंप्रपश्यवितराम्यभ
यानशोकान् २२ अन्येपुनर्भगवतोभ्रुवउद्विजृंभविस्रंसितार्थरचनाःकिमुरुक्रमस्य सिद्धासिभुंक्ष्वविभवान्निजधर्मदोहान्दि
व्यान्नरैर्दुरधिगान्नृपविक्रियाभिः २३ एवंब्रुवाणमबलाखिलयोगमायाविद्याविचक्षणमवेक्ष्यगताधिरासीत् संप्रश्रयप्रण-
यविह्वलयागिरेषद्व्रीडावलोकविलसद्धसितानानाह २४ सुकन्योवाच राद्धंबतद्विजवृषैतदमोघयोगमायाधिपेत्वयि
विभोतदवैमिभर्तः यस्तेभ्यधायिसमयःसकृदंगसंगोभूयाद्गरीयसिगुणःप्रसवःसतीनाम् २५ तत्रेतिकृत्यमुपशिक्षययथोप
देशंयेनैषमेकर्शितोतिरिरंसयात्मा सिध्येततेकृतमनोभवधर्षितायादीनस्तदीशभवनंसदृशंविचक्ष्व २६ सुमतिरुवाच प्रि
यायाःप्रियमन्विच्छन्च्यवनोयोगमास्थितः विमानंकामगंराजंस्तर्ह्येवाविरचीकरत् २७ सर्वकामदुघंरम्यंसर्वरत्नसमन्वितम्

अ०
१५

१३

सर्वर्थोपचयोदर्कंमणिस्तंभैरुपस्कृतं २८ दिव्योपस्तरणोपेतंसर्वकालसुखावहम् पट्टिकाभिःपताकाभिर्विचित्राभिरलंकृत-
म् २९ स्रग्भिर्विचित्रमालाभिर्मंजुसिंजत्षडंघ्रिभिः दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ३० उपर्युपरिविन्यस्तनिलये-
षु पृथक् पृथक् क्लृप्तैःकशिपुभिःकांतंपर्यंकव्यजनादिभिः ३१ तत्रतत्रविनिक्षिप्तनानाशिल्पोपशोभितम् महामरकतस्थ-
ल्याजुष्टंविद्रुमवेदिभिः ३२ द्वाःसुविद्रुमदेहल्याभातंवज्रकपाटकम् शिखरेष्विंद्रनीलेषुहेमकुंभैरधिश्रितम् ३३ चक्षुष्मत्पद्मरा-
गाग्र्यैर्वज्रभित्तिषुनिर्मितैः जुष्टंविचित्रवैतानैःसाट्टालैर्हर्म्यतोरणैः हंसपारावतव्रातैस्तत्रतत्रनिकूजितम् ३४ कृत्रिमान्मन्यमानैः
स्वानधिरुह्याधिरुह्यच विहारस्थानविश्रामसंवेशप्रांगणाजिरैः ३५ यथोपजोषंरचितैर्विस्मापनमिवात्मनः एवंगृहंप्रविश्यंतींना-
तिप्रीतेनचेतसा ३६ सर्वभूताशयाभिज्ञःस्वयंप्रोवाचतांप्रति निमज्ज्यास्मिन्ह्रदेभीरुविमानमिदमारुह ३७ सतद्भर्तुःसमादा-
यवचःकुवलयेक्षणा सरजंबिभ्रतीवासोवेणीभूतांश्चमूर्द्धजान् अंगंचमलपंकेनसंछन्नंशबलस्तनम् ३८ आविवेशसरस्तत्रमुदा
शिवजलाशयम् सांतःसरसिवेश्मस्थाःशतानिदशकन्यकाः ३९ सर्वाःकैशोरवयसोददर्शोत्पलगंधयः तांदृष्ट्वाशीघ्रमुत्थायप्रो-
चुःप्रांजलयःस्त्रियः ४० वयंकर्मकरीस्तुभ्यंशाधिनःकरवामकिम् स्नानेनतांमहार्हेणस्नापयित्वामनस्विनीम् ४१ दुकूले
निर्मलेनूत्नेददुरस्यैचमानदाः भूषणानिपरार्ध्यानिवरीयांसिद्युमंतिच ४२ अन्नंसर्वगुणोपेतंपानंचैवामृतासवम् अथादर्शेस्व-
मात्मानंस्रग्विणंविरजोंबरम् ४३ विरजंकृतस्वस्त्ययनंकन्याभिर्बहुमानितम् हारेणचमहार्हेणरुचकेनचभूषितम् ४४ नि-
ष्कग्रीवंवलयिनंक्वणत्कांचननूपुरम् श्रोण्योरध्यस्तयाकांच्याकांचन्याबहुरत्नया ४५ सुभ्रुवासुदताश्लक्ष्णस्निग्धापांगेनचक्षुषा
पद्मकोशस्पृधानीलैरलकैश्चलसन्मुखम् ४६ यदाससारदयितंऋषीणांवल्लभंपतिम् तत्रचास्तेसहस्त्रीभिर्यत्रास्तेसमुनी-
श्वरः ४७ भर्तुःपुरस्तादात्मानंस्त्रीसहस्रवृतंतदा निशाम्यतद्योगगतिंसंशयंप्रत्यपद्यत ४८ सतांकृतमलस्नानांविभ्राजंतीम्
पूर्ववत् आत्मनोबिभ्रतींरूपंसंवीतरुचिरस्तनीम् ४९ विद्याधरीसहस्रेणसेव्यमानांसुवाससम् ज्ञातभावोविमानंतदारोप-

यदमित्रहन् ५० तस्मिन्नलुसमहिमाप्रियया नुशक्तो विद्याधरीभिरुरुचार्वोर्वपुर्विमाने बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभस्थः ५१ तेनाष्टलोकपविहारकुलाचलेंद्रद्रोणिष्वनंगसरवमारुतसौभगास्तु सिद्धनुताद्युधुनिपातशिवस्वनासु रेमेचिरंधनदवल्ललनावरूथी ५२ वैश्रंभके सुरसनंदनपुष्पभद्रके मानसे चैत्ररथ्ये च सरेमे रामया रतः ५३ इति श्रीपद्मपुराणे पातालखंडे शेषवात्स्यायनसंवादे रामाश्वमेधे पंचदशोऽध्यायः १५ शेष उवाच एवं तयाक्रीडमानः सर्वत्र धरणीतले नाबुद्ध्यत गतानाब्दान् शतसंख्यापरीमितान् १ ततो ज्ञात्वाथ तद्विप्रः स्वकालपरिवर्तनम् मनोरथैश्च संपूर्णां स्वस्य प्रियतमां वराम् २ च्यवनस्ताश्रमं श्रेष्ठं पयोष्णीतीरसंस्थितम् निर्वैरजंतुजनतासंकुलं मृगसेवितम् ३ तत्रावसत्तु सस्कृतपाः शिष्यैर्वेदसमन्वितैः सेवितोग्निषु गो नित्यं तततापपरंतपः ४ कदाचिदथ शर्यातिर्यष्टुमैच्छत देवताः तदा च्यवनमानेतुं प्रेषयामास सेवकान् ५ तैराहूतो द्विजवरस्तत्रागच्छन्महातपाः सकन्यया धर्मपत्न्या स्वाचारपरिनिष्ठया ६ आगतं तं मुनिवरं पत्न्या पुत्र्या महायशाः ददर्श दुहितुः पार्श्वपुरुषं सूर्यवर्चसम् ७ राजा दुहितरं प्राह कृतपादाभिवंदनात् आशिषो न प्रयुंजानो नातिप्रीतमना इव ८ चिकीर्षितं ते किमिदं पतिस्त्वया प्रलंभितो लोकनमस्कृतो मुनिः यस्त्वं जराग्रस्तसमभ्यसंमतं विहाय जारं भजसे मुसध्वगम् ९ केयं मतिस्ते विगतान्यथा सतां कुलप्रसूते कुलदूषणोत्थिदम् बिभर्षि जारं यदपत्रपा कुलं पितुश्च भर्तुश्च नयस्यधस्तमः १० एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता उवाच तात जामाता तवैष भृगुनंदनः ११ शशंस पितरं सर्वं वयो रूपाभिपालनम् विस्मितः परमप्रीतस्तनयां परिषस्वजे १२ सोमेनायाजयद्वीरं ग्रहं सोमस्य चाग्रहीत् असोमपोरप्यश्विनोश्च्यवनः स्वेन तेजसा १३ ग्रहं तु ग्राहयामास तपोबलसमन्वितः वज्रं गृहीत्वा शक्रस्तु हंतुं ब्राह्मणसत्तमम् १४ अपंक्तिपावनौ देवौ कुर्वाणं पंक्तिपावनौ शक्रं वज्रधरं दृष्ट्वा मुनिः स्वहननोद्यतम् १५ हुंकारमकरोद्धीमान् स्तंभयामास तद्भुजम् इंद्रस्तब्धभुजस्तत्र दृष्टः सर्वैश्च मानवैः १६ कोपेन श्वसमानो हि र्यथा मंत्रनियंत्रितः तुष्टाव स मुनिं शक्रस्तब्धबाहुस्तपोनिधिम् १७ अश्विभ्यां भागदानं च कुर्वंतं निर्भयं वरम् कथयामास भीतस्त्वा

मिन्दीयतामश्विनोर्ग्रहः १८ मयानवार्यतेतातक्षमस्वाघंमयाकृतम् इत्युक्तःसमुनिःकोपंजहौतूर्णंकृपानिधिः १९ इंद्रोमुक्तभुजोप्या
सीत्तदानींपुरुषर्षभ तद्विलक्ष्यजनाःसर्वेकौतुकाविष्टमानसाः २० शशंसुर्ब्राह्मणबलंतेतुदेवादिदुर्लभम् ततोराजाबहुधनंब्राह्मणे-
भ्योददौमहान् २१ चक्रेचावभृथस्नानंयागांतेशत्रुतापनः त्वयापृष्टंयदाचक्ष्वच्यवनस्यमहोदयम् २२ समयाकथितःसर्वस्त-
पोयोगसमन्वितः नमस्कृत्वातपोमूर्तिमेवंप्राप्यजयाशिषः २३ प्रेषयंतंसपत्नीकंसमयज्ञमनोरमे एवंतुकुर्वतोवार्तांहयःप्रापा
श्रमंप्रति २४ विदधन्वायुवेगेनपृथ्वींखुरविलक्षिताम् दुर्वांकुरान्मुखाग्रेणचरंस्तत्रमहाश्रमे २५ मुनिभिःसुसमित्पाणिदर्भै
स्नातुंगतैर्नदीम् शत्रुघ्नःशत्रुसेनायास्तापनःशूरवैरिणाम् २६ तावत्प्रापमुनेर्वासंच्यवनस्यातिशोभितं गत्वातदाश्रमेवीरोददर्शच्य
वनंमुनिम् २७ सुकन्ययासमीपस्थंतपोमूर्तिमिवस्थितम् ववंदेचरणौतस्यस्वाभिधांसुमनुस्मरन् २८ शत्रुघ्नोहंरघुपतेर्भ्रा
तावाहस्यपालकः २९ नमस्करोमियुष्मभ्यंमहापापोपशांतये इतिवाक्यंसमाकर्ण्यजगादसमुनिसत्तमः ३० शत्रुघ्नतवकल्याणं
भूयान्नरवरर्षभ यज्ञंपालयमानस्यकीर्तिस्तेविपुलाभवेत् ३१ चित्रंपश्यतभोविप्रारामोपिमखकारकः यन्नामस्मरणादीनि
कुर्वतःपापनाशनम् ३२ महापातकसंयुक्ताःपरदाररतानराः यन्नामस्मरणोद्युक्तास्तदायांतिपरांगतिम् ३३ पादपद्मसमुत्थेनरे
णुनाग्रावमूर्तिभृत् तत्क्षणाद्गौतमार्धांगिंजातंमोहनरूपधृक् ३४ मामकीयस्यरूपस्यध्यानेनप्रेमनिर्भरा सर्वपातकराशिंसा
दग्ध्वायातास्वरूपताम् ३५ दैत्यायस्यमनोहारिरूपंप्रधनमंडले पश्यंतःप्रापुरेतस्यरूपंविकृतिवर्जितम् ३६ योगिनोध्या
ननिष्ठास्तुयंध्यात्वायोगमास्थिताः संसारभयनिर्मुक्ताःप्रयाताःपरमंपदम् ३७ धन्योहमद्यरामस्यमुखंद्रक्ष्यामिशोभनम् प
यादजलनेत्रांतस्नातसंस्कृतसन्नतम् ३८ याजिह्वारघुनाथस्यनामकीर्तनमादरात् करोतिविपरीतायाफणिनोरसनासमा ३९
अद्यप्राप्तंतपःपुण्यमद्यपूर्णामनोरथाः यद्द्रक्ष्येरामचंद्रस्यमुखंब्रह्मादिदुर्लभम् ४० तत्पादरेणुनास्वांगंपवित्रंविदधाम्यहम् वि
चित्रतरवार्ताभिःपावयेरसनांस्वकाम् ४१ इत्यादिरामचरणद्वयसंप्रवृद्धप्रेमप्रतप्तप्रसृतगद्गदवाग्रुदश्रुः श्रीरामचंद्ररघुपुंगव

रा॰मे॰
२१

धर्ममूर्तेर्भक्तानुकंपक समुद्धर संसृतेर्माम् ४२ जल्पन्नश्रुकलापूर्णो मुनीनांपुरतस्तदा नाज्ञासीत्तत्रपारक्यंनिजंध्यानेनसंस्थितः
४३ शत्रुघ्नस्तंमुनिंप्राहस्वामिन्मेमखउत्तमः क्रियतांभवतापादरजसासुपवित्रितः ४४ महद्भाग्यंरघुपतेर्युष्मन्मनसिसर्वतः
तिष्ठत्यसौमहाबाहुःसर्वलोकसुपूजितः ४५ इत्युक्तःसपरीवारःसर्वाग्निपरिसंवृतः जगामच्यवनस्तत्रप्रमोदन्हृदसंप्लुतः ४६
हनुमांस्तंपदायातरामभक्तमवेक्ष्यह शत्रुघ्नंनिजगादासौवचोविनयसंयुतम् ४७ स्वामिन्कथयसित्वंचेन्महापुरुषसुंदर रामभ-
क्तंमुनिवरंनयामिस्वपुरीमहम् ४८ इतिश्रुत्वामहद्वाक्यंकपिवीरस्यशत्रुहा आदिदेशहनूमंतंगच्छप्रापयतंमुनिम् ४९ हनूमां-
स्तंमुनिंस्वीयेपृष्ठआरोप्यवेगवान् सकुटुंबंनिनायाशुवायुःखेइवसर्वगः ५० आगतंतंमुनिंदृष्ट्वारामोमतिमतांवरः अर्घ्यपा-
द्यादिकंचक्रेप्रीतःप्रणयविह्वलः ५१ धन्योऽस्मिमुनिवर्यस्यदर्शनेनतवाधुना पवित्रितोमखोमह्यंसर्वसंसारसंभृतः ५२ इतिवाक्यं
समाकर्ण्यच्यवनोमुनिसत्तमः उवाचप्रेमनिर्भिन्नपुलकांगोतिसंयतः ५३ स्वामिन्ब्रह्मण्यदेवस्यतववाडवपूजनम् युक्तमेवंम-
हाराजधर्ममार्गप्ररक्षितुः ५४ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेच्यवनस्याश्रमहयगमनोनामषो-
डशोऽध्यायः १६ शेषउवाच शत्रुघ्नश्च्यवनस्यायदृष्ट्वाचिंत्यंतपोबलम् प्रशशंसतपोब्राह्म्यंसर्वलोकेशवंदितम् १ अपश्यन्न-
स्ययोगस्यसिद्धिंब्राह्मणसत्तमः यःक्षणादेवदुःप्रापंतद्विमानमचीकरत् २ क्वभोगसिद्धिर्महतीमुनीनाममलात्मनाम् क्वतपोबल-
हीनानांभोगेच्छामनुजात्मनाम् ३ इतिस्वगतमाशंसन्शत्रुघ्नश्च्यवनाश्रमे क्षणंस्थित्वाजलंपीत्वासुखसंभोगमासवान् ४ हयस्त-
स्याःपयोष्ण्याख्यानद्याःपुण्यजलात्मनः पयःपीत्वाययौमार्गेवायुवेगपदंदधत् ५ योधास्तेनिर्गमंदृष्ट्वापृष्ठतोनुययुस्तदा हस्ति-
भिःपत्तिभिःकेचित्रथैःकांचनवाजिभिः ६ शत्रुघ्नोमात्यवर्येणसुमत्याख्येनसंयुतः पृष्ठतोनुजगामाशुरथेनहयशोभिना ७
गच्छन्वाजीपुरंप्राप्तोविमलाख्यस्यभूपतेः रत्नातटाख्यंचजनैर्हृष्टपुष्टैःसमाकुलम् ८ ससेवकादुपश्रुत्यरघुनाथहयोत्तमम् पु-
रांतिकेहिसंप्राप्तंसर्वयोधसमन्वितम् ९ तदागजानांपंक्त्याचचंद्रवर्णसमानया अश्वानामयुतैःसार्द्धंरथानांस्वर्णशोभिनाम् १०

अ॰
१६

२१

सहस्रेणचसंयुक्तःशत्रुघ्नंप्रतिजग्मिवान् शत्रुघ्नंसनमस्कृत्यसर्वान्प्राप्तान्महारथान् ११ वसुकोशंधनंसर्वंराज्यंतस्मैनिवेद्यच किं
करोमीतिराजानंजगादपुरतःस्थितः राजापितंस्वीयपदेप्रनम्रंदोर्भ्यामिदंसंपरिषस्वजेमहान् जगामसाकंतनयेस्वराज्यंनिक्षिप्यसर्वं
बहुधन्विभिर्वृतः १३ रामचंद्राभिधांश्रुत्वासर्वश्रुतिमनोहराम् सर्वेप्रनम्यास्तंवाहंददुर्वसुमहाधनम् १४ एवंसगच्छन्तन्मार्गेपर्व-
ताग्र्यंददर्शह स्फाटिकैःकानकैरौप्यैराजितंप्रस्थराजिभिः १५ कुर्वन्निर्झरसंह्रादंनादितानेकभूतलम् गैरिकादिकसद्धातुराशिरं
गविराजितम् १६ यत्रदेवगणैःसिद्धैःसंक्रीडत्यकुतोभयैः गंधर्वाप्सरसोनागायत्रक्रीडंतिलीलया १७ गंगातरंगसंस्पर्शशीतवायुनि
षेवितम् वीणारणितहंसाख्यसुंदरक्काणशोभितम् १८ पर्वतंवीक्ष्यशत्रुघ्नउवाचसुमतिंत्विदम् तद्दर्शनसमुद्भूतविस्मयाविष्टमान
सः १९ कोयंमहागिरिवरोविस्मापयतिमेमनः महाराजतसत्प्रस्थोरामाराजितसद्गुहः २० अत्रकिंदेवतावासोदेवानांक्रीडनस्थ
लम् यदेतन्मनसःक्षोभंकरोतिश्रीसमुच्चयैः २१ इतिवाक्यंसमाकर्ण्यजगादसुमतिस्तदा वक्ष्यमाणगुणागाररामचंद्रपदाब्जधीः
२२ नीलोयंपर्वतोराजन्पुरतोभातिभूमिप मनोहरैर्महाशृंगैःस्फाटिकाद्यैःसमंततः २३ एवंपश्यंतिनोपापाःपरदाररतानराः परैःकृ
तान्गुणान्येवैमन्यंतेननराधमाः २४ श्रुतिस्मृतिसमुत्थंयेधर्मंसद्भिःसुसाधितम् नमन्यंतेस्वबुद्धिस्थहेतुवादविचारणाः २५
नीलीविक्रयकर्त्तारोलाक्षाविक्रयकारकाः योब्राह्मणोघृतादीनिविक्रीणातिसुरापकः २६ कन्यांरूपेणसंपन्नांनदद्यात्कुलशीलि
ने विक्रीणातिद्रव्यलोभात्पितापापेनमोहितः २७ सतींदूषयतेयस्तुस्त्रियंकुलवतींनरः स्वयमेवात्तिमधुरंबंधुभ्योनददातियः
२८ अमायांब्राह्मणार्थेचपाकभेदंकरोतियः शर्करापायसंवापिनिजार्थेपाचयेत्कुधीः २९ अतिथींनवमन्यंतेसूर्योदानुसुक्षुधा
र्दितान् अंतरिक्षभुजोयेचयेचविश्वासघातकाः ३० नपश्यंतिमहाराजरघुनाथपराङ्मुखाः असौपुण्योगिरिवरःपुरुषोत्तमशो
भितः ३१ पवित्रयतिसर्वान्वैदर्शनेनमनोहरः अत्रतिष्ठतिदेवानांमुकुटांघ्रिविराजितः ३२ पुण्यवद्भिःसुदर्शार्हःपुण्यदःपुरु-
षोत्तमः श्रुतयोनेतिनेतीतिब्रुवाणानविदंतियम् ३३ यत्पादरजइंद्रादिदेवैर्मृग्यंसुदुर्लभम् वेदांतादिभिरन्यूनैर्वाक्यैर्विदितमद्धु-

तम् ३४ सोत्रश्रीमान्महाराजोवसत्पुरुषोत्तमः आरुह्यतंनमस्कृत्यसंपूज्यस्रक्चंदनादिना ३५ नैवेद्यंभक्षयित्वातुभवत्येवचतुर्भुजः
अत्राप्युदाहरंतीममितिहासंपुरातनम् ३६ तंशृणुष्वमहाराजसर्वैश्वर्यसमन्वितम् रत्नग्रीवस्यनृपतेरद्भुतंसकुटुंबिनः ३७ च
तुर्भुजादिकंप्राप्तंजीवितादेवदुर्लभम् आसीत्कांचीमहाराजपुरीलोकेषुविश्रुता ३८ महाराजपरीवारसमृद्धबलवाहना यस्यांव
संतिविप्राग्र्याःषट्कर्मनिरताभृशम् ३९ सर्वभूतहितेयुक्तारामभक्तिषुलालसाः क्षत्रियारणकर्तारःसंग्रामेष्वपलायिनः ४० परदार
परद्रव्यपरद्रोहेपराङ्मुखाः वैश्याःकुसीदकृष्यादिवाणिज्यशुभवृत्तयः ४१ कुर्वंतिरघुनाथस्यपदांभोजेरतिंसदा शूद्राब्राह्मणसेवा
भिर्गतरात्रिंदिनांतराः ४२ कुर्वंतिकथनंरामरामेतिरसनाग्रतः प्राकृताःकेपिनोपापंकुर्वंतिमनसाप्यवै ४३ दानंदयादमःसत्यं
तत्रनिष्ठंतिनित्यशः वदंतेनपराबाधंवाक्यंकोपिनरोनधः ४४ नपारक्येधनेलोभंकुर्वंतिनहिपातकम् एताःप्रजामहाराजरत्नग्री
वेनपाल्यते ४५ षष्ठांशंतत्रगृण्हातिनान्यल्लोभविवर्जितः एवंपालयमानस्यप्रजाधर्मेणभूपतेः ४६ गतानिबहुवर्षाणिसर्वभो
गविलासिनः विशालाक्षींमहाराजएकदात्युवाचवानिदम् ४७ पतिव्रतांधर्मपत्नींपतिव्रतपरायणाम् पुत्राजातांविशालाक्षिप्रजार
क्षाधुरंधराः ४८ परीवारोमहान्मह्यंवर्ततेविगतज्वरः हस्तिनोममशैलाभावाजिनःपर्वतोपमाः ४९ रथाश्वस्रुहयैर्युक्तावर्ततेममम
नित्यशः महाविष्णुप्रसादेनकिंचिन्न्यूनंममास्तिन ५० परंमनोरथस्त्वेकस्तिष्ठतेमानसेमम परंतीर्थंमयानाद्यकृतंपरमशोभने
५१ गर्भवासनिरासायक्षमंगोविंदशोभितम् वृद्धोजातोस्म्यहंतावद्वलीपलितदेहवान् ५२ करिष्यामिमनोहारितीर्थसेवनमा
हृनः योनरोजन्मपर्यंतंस्वोदरस्यप्रपूरकः ५३ नकरोतिहरेःपूजांसनरोगोवृषःस्मृतः तस्माद्गच्छामिभोभद्रेतीर्थयात्रांप्रतिप्रि
ये ५४ सकुटुंबःस्रुतेन्यस्यधुरंराज्यस्यनिर्भृताम् इतिव्यवस्यसंध्यायांहरिंध्यायन्निशांनरे ५५ अद्राक्षीत्स्वप्नमध्येकंब्राह्म
णंतापसंवरम् प्रातरुत्थायराजासौकृत्वासंध्यादिकाःक्रियाः ५६ सभामंत्रिजनैःसार्द्धंस्रुखमासेदिवान्महान् तावद्विप्रंददर्शा
थतापसंकृशदेहिनम् ५७ जटावल्कलकौपीनधारिणंदंडपाणिनम् अनेकतीर्थसेवाभिःकृतपुण्यकलेवरम् ५८ राजातं

र्वास्यशिरसाप्रणनाममहाभुजः अर्घ्यपाद्यादिकंचक्रेप्रहृष्टात्मामहीपतिः ५९ सुखोपविष्टंविश्रांतंपप्रच्छविदितंद्विजम् स्वामिंस्त्वद्दर्शने
नाद्यकृतंदेहस्यपावनम् ६० महांतःकृपणान्यांतुयांतितद्गेहमादरात् यूयंसर्वगताःश्रेष्ठाःसमाधिध्यानतत्पराः ६१ सर्वतीर्थावगाहे-
नकृतपुण्यात्मकामलाः तस्मात्कथयभोविप्रवृत्तंस्यममसंप्रति ६२ कोदेवोगर्भनाशायकिंतीर्थंचक्षमंभवेत् यथावच्छृण्वतोमह्यंश्रद्द
धानायविस्तरात् ६३ कथयस्वप्रसादेनसर्वतीर्थविचक्षण ब्राह्मणउवाच शृणुराजेंद्रवक्ष्यामियत्पृष्टंतीर्थसेवनम् ६४ कस्यदेव-
स्यकृपयागर्भनिर्वारणंभवेत् सेव्यःश्रीरामचंद्रोसौसंसारज्वरनाशकः ६५ पूज्यःसएवभगवान्पुरुषोत्तमसंज्ञकः मयानानापुरोदृष्टाः
सर्वपापक्षयंकराः ६६ अयोध्यासरयूस्तापीतथाद्वारंहरेःपदम् अवंतीविमलाकांतीरेवासागरगामिनी ६७ गोकर्णंहाटकाख्यं
चहत्याकोटिविनाशनम् मल्लिकाख्योमहाशैलोमोक्षदःपश्यतांनृणाम् ६८ यत्रांगेषुनृणांतोयंश्यामवानिर्मलंभवेत् पातकस्याप-
हारीदंमयादृष्टंतुतीर्थकम् ६९ मयाद्वारवतीदृष्टासुरासुरनिषेविता गोमतीयत्रवहतीसाक्षाद्ब्रह्मजलास्मृता ७० यत्रस्थापोलयःप्रोक्तोमु
क्तिमोक्षइतिश्रुतिः यस्यांसंवसतांनृणांनकलिःप्रभवेत्क्वचित् ७१ चक्रांकायत्रपाषाणामानवाअपिचक्रिणः पशवःकीटपतंगाद्याःसर्वेचक्र
शरीरिणः ७२ त्रिविक्रमोवसेद्यस्मिन्सर्वलोकैकपालकः सापुरीतुमयापुण्यैर्महद्भिर्गोचरीकृता ७३ कुरुक्षेत्रंमयादृष्टंसर्वहत्यापनोदनम् स्यं
मंतपंचकंयत्रमहापातकनाशनम् ७४ वाराणसीमयादृष्टाविश्वनाथकृतालया यत्रोपदिशतेमंत्रंतारकंब्रह्मसंज्ञितम् ७५ यस्यां
मृताःकीटपतंगभृंगाःपश्वादयोवासुरयोनयोवा स्वकर्मसंभोगसुखंविहायगच्छंतिमुक्तिंसमतीतदुःखाः ७६ मणिकर्णीयत्र
तीर्थंयस्यामुत्तरवाहिनी करोतिसंस्मृतंबंधच्छेदंपापकृतामपि ७७ कपर्दिनःकुंडलिनःसर्पभूषाधरावराः गजचर्मपरीधाना
वसंतिगतदुःखकाः ७८ कालभैरवनामात्रकरोतियमशासनम् नकरोतिनृणांवार्तांयमोदंडधरःप्रभुः ७९ एतादृशीमयादृ
ष्टाकाशीविश्वेश्वरांतिका अनेकान्यपितीर्थानिमयादृष्टानिभूमिप ८० परमेकंमहच्चित्रंयदृष्टंनीलपर्वते पुरुषोत्तमसंसेव्येन
नकाप्यक्षिगोचरम् ८१ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेब्राह्मणसमागमोनामसप्तदशोऽध्यायः १७ ब्राह्मणउवाच

रा०मा०
२३

राजंस्त्वंशृणुयद्वृत्तंनीलपर्वतसत्तमे यच्छ्रद्दधानाःपुरुषायांतिब्रह्मसनातनम् १ मयापर्यटतातत्रगतंनीलाभिधेगिरौ गंगासा
गरतोयेनक्षालितःप्रांगणेमुहुः २ तत्रभिल्लामयादृष्टाःपर्वताग्र्येधनुर्भृतः चतुर्भुजामूलफलभक्षनिर्वाहितक्लमाः ३ तदामे
मनसिक्षिप्रंसंशयःसुमहानभूत् चतुर्भुजाःकिमेतेवैधनुर्बाणधरानराः ४ वैकुंठवासिनांरूपंदृश्यतेविजितात्मनाम् कथ
मेतैरुपालब्धंब्रह्माद्यैरपिदुर्लभम् ५ शंखचक्रगदाशार्ङ्गपद्मोल्लसितपाणयः वनमालापरीतांगाविष्णुभक्ताइवांतिके ६
संशयाविष्टचित्तेनमयापृष्टंतदानृप केचयूयंतुयुष्माभिर्लब्धंचातुर्भुजंकथम् ७ तदातैर्बहुहास्यंतुकृत्वामांप्रतिभाषितम्
ब्राह्मणोयंनजानातिपिंडमाहात्म्यमद्भुतम् ८ इतिश्रुतंमयावाक्यंकःपिंडःकस्यदीयते तंममब्रूतधर्मिष्ठाश्चतुर्भुजशरीरिणः
९ तदामद्वाक्यमाकर्ण्यकथितंतैर्महात्मभिः सर्वतत्रतुयद्वृत्तंचतुर्भुजभवादिकम् १० किराताऊचुः शृणुब्राह्मणनोवाक्य
मस्माकंपृथुकःशिशुः नित्यंजंबूफलादीनांभक्षणक्रीडयाचरत् ११ एकदारममाणस्तुगिरिशृंगंमनोरमम् तत्रारुरोहशिशु-
भिःसमतात्परिवारितः १२ तदातत्रददर्शाथदेवायतनमद्भुतम् गारुत्मतादिमणिभिःखचितंरत्नभित्तिकम् १३ स्वकांत्या
तिमिरश्रेणींदारयद्रविवद्भृशम् दृष्ट्वाविस्मयमापेदेकिमिदंकस्यवैगृहम् १४ तदाविलोकयामीतिकिमिदंमहसांपदम् इति
संचिंत्यगेहांतर्जगामबहुभाग्यतः १५ ददर्शतत्रदेवेशंसुरासुरनमस्कृतम् कीरीटहारकेयूरग्रैवेयाद्यैर्विराजितम् १६ मनोहरव
तंसंचधारयंतंसुनिर्मलम् पादपद्मंतुलसिकागंधमत्तषडंघ्रिकम् १७ शंखचक्रगदाशार्ङ्गपद्माद्यैर्मूर्तिसंयुतैः उपासितांघ्रिंश्री
मूर्तिर्नारदाद्यैःसुसेवितम् १८ केचिद्गायंतिनृत्यंतिहसंतिपरमाद्भुतम् प्रीणयंतिमहाराजसर्वलोकैकवंदितम् १९ हरिंवीक्ष्यम
दीयोर्भस्तत्रसंजग्मिवान्महान् देवास्तत्रविधायोच्चैःपूजांधूपादिसंयुताम् २० नैवेद्यंश्रीप्रियायाथकृत्वानीराजनंततः जग्मुः
स्वस्वंगृहंराजन्कृपांपश्यंतआदरात् २१ महाभाग्यवशात्तेनप्राप्तंनैवेद्यसाधुकम् पतितंब्रह्मदेवादिदुर्लभंनरमानुषैः २२ त
द्भक्षणंचकाराहोश्रीमूर्तिमवलोक्यच चतुर्भुजत्वमासंवैपृथुकेनसुशोभितम् २३ तदास्माभिर्गृहंप्राप्तोबालकोवीक्षितोमु-

अ०
१८

२३

हुः चतुर्भुजत्वंसंप्राप्तंशंखचक्रादिधारकम् २४ अस्माभिःपृष्टमेतस्यकिमेतज्ज्ञातमद्भुतम् तदाप्रोवाचनःसर्वान्बालकः
परमद्भुतम् २५ शिखराग्रेगतःपूर्वंतत्रदृष्टःसुरेश्वरः तत्रनैवेद्यसिक्थंतुमयाप्राप्तंमनोहरम् २६ तस्माद्ब्राह्मणवर्यैतत्कार
णंमुनिसंमतम् चतुर्भुजत्वंसंप्राप्तेर्विस्मयप्रापकस्यहि २७ अस्माभिरप्यसौदृष्टोदेवःपरमदुर्लभः अन्नादिकंतत्रभक्तंस
र्वस्वादसमन्वितम् २८ वयंचतुर्भुजाजातादेवस्यकृपयायतः गत्वात्वमपिदेवस्यदर्शनंकुरुसंमतम् २९ भुक्त्वातत्रान्न
सिक्थंतुभवविप्रचतुर्भुजः त्वयापृष्टंयदाश्चर्यंतदुक्तंवाडवर्षभ ३० इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादे
रामाश्वमेधेब्राह्मणोपदेशोनामाऽष्टादशोऽध्यायः १८ सुमतिरुवाच इतिश्रुत्वातुतद्वाक्यंभिल्लानामहमार्यक अत्या
श्चर्यमिदमत्वाप्रहृष्टोभवमित्युत १ गंगासागरसंयोगेस्नात्वापुण्यकलेवरः शृंगमारुरुहेतच्चमणिमाणिक्यचित्रकम् २ त
त्रादर्शमहाराजदेवदेवादिवंदितम् नमस्कृत्वाकृतार्थोस्मितत्रान्नप्राशनेनच ३ चतुर्भुजत्वंसंप्राप्तंशंखचक्रादिचिह्नितम् पु
रुषोत्तमदर्शनसर्ववैभवभागहम् ४ राजंस्त्वमपितत्राशुगच्छनीलाभिधंगिरिम् कृतार्थंकुरुचात्मानंगर्भदुःखवियोजितः
५ इत्याकर्ण्यवचस्तस्यवाडवाग्र्यस्यधीमतः पप्रच्छवैत्दृष्टमनास्तीर्थयात्राविधिपरम् ६ राजोवाच साधुविप्राग्र्यभोसाधोत्व
याप्रोक्तंममानघ पुरुषोत्तममाहात्म्यंशृण्वतांपापनाशनम् ७ ब्रूहितत्तीर्थयात्रायाविधिंश्रुतिसमन्वितम् विधिनाकेनपूर्णस्यफ
लस्यप्राप्तिताभवेत् ८ ब्राह्मणउवाच शृणुराजन्प्रवक्ष्यामितीर्थयात्राविधिंशुभम् येनसंप्राप्यतेदेवःसुरासुरनमस्कृतः ९ व
लीपलितदेहोवायौवनेनान्वितोपिवा ज्ञात्वामृत्युमनिस्तीर्णंहरिंशरणमाव्रजेत् १० तत्कीर्तनेचश्रवणेवंदनेतस्यपूजने मतिरेवप्र
कर्तव्यानान्यत्रवनितादिषु ११ सर्वंनश्वरमालोक्यक्षणस्थायिसदुःखदम् जन्ममृत्युजरातीतंभक्तिवल्लभमच्युतम् १२ भ
जेत्कामाद्भयाद्द्वेषाल्लोभाद्दंभान्नरःपुनः यथाकथंचिद्विभजन्नरोदुःखंनचाश्नुते १३ सहरिर्जायतेसाधुसंगतःपापवर्जितात् येषांकृ
पातःपुरुषाःभवत्यसुखवर्जिताः १४ तेसाधवःशांतरागाःकामलोभविवर्जिताः ब्रुवंतियन्महाराजतत्संसारनिवर्तकम् १५

तीर्थेषुलभ्यतेसाधूरामचंद्रपरायणः यद्दर्शनंनृणांपापराशिदाहाशुशुक्षणिः १६ तस्मात्तीर्थेषुगंतव्यंनरैःसंसारभीरुभिः पुण्योदकेषुसततंसाधु
श्रेणिविराजिषु १७ तानितीर्थानिविधिनाकृतानिप्रहरंत्यघं तंविधिंनृपशार्दूलकुरुष्वश्रुतिगोचरम् १८ विरागंजनयेत्पूर्वंकलत्रादिकुटुंबके
असत्यभूतंतज्ज्ञात्वाहरितुमनसास्मरेत् १९ क्रोशमात्रंततोगत्वारामरामेतिचाब्रुवन् तत्रतीर्थादिषुस्नात्वाक्षौरंकुर्याद्विधानवित् २० मनुष्या
णांचपापानितीर्थानिप्रतिगच्छताम् केशानाश्रित्यतिष्ठंतितस्माद्वपनमाचरेत् २१ ततोदंडंतुनिर्ग्रंथिंकमंडलुमथाजिनम् बिभृयाल्लोभनिर्मुक्तस्ती
र्थवेषधरोनरः २२ विधिनागच्छतांनृणांफलावाप्तिर्विशेषतः तस्मात्सर्वप्रयत्नेनतीर्थयात्राविधिंचरेत् २३ यस्यहस्तौचपादौचमनश्चैवहिसंहितं
विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते २४ हरेकृष्णहरेकृष्णभक्तवत्सलगोपते शरण्यभगवन्विष्णोमांपाहिबहुसंसृतेः २५ इतिब्रुवन्रासनयामनसा
चहरिंस्मरन् पादचारीगतिंकुर्यात्तीर्थंप्रतिमहोदयः २६ यानेनगच्छन्पुरुषोसमभागफलंलभेत् उपानहाभ्यांतुर्यांशंगोयानेनोपधादिकं २७ व्यवहर्ता
तृतीयांशंसेवयाष्टमभागवान् अनिच्छयाव्रजस्तत्रतीर्थस्नानफलंलभेत् २८ यथायथंप्रकर्तव्यातीर्थानामभियात्रिका पापस्याभवत्येवविधिदृष्ट्या
विशेषतः २९ तत्रसाधून्नमस्कुर्यात्पादवंदनसेवनैः तद्द्वाराहरिभक्तिर्हिप्राप्यतेपुरुषोत्तम ३० इतितीर्थविधिःप्रोक्तोसमासेननवि
स्तरात् एवंविधिंसमाश्रित्यगच्छत्वंपुरुषोत्तमम् ३१ तुभ्यंतुष्टोमहाराजदास्यतेभक्तिमच्युतः यथासंसारनिर्वाहःक्षणादेवभविष्यति
३२ तीर्थयात्राविधिंश्रुत्वासर्वपातकनाशनम् मुच्यतेसर्वपापेभ्यउग्रेभ्यःपुरुषर्षभ ३३ सुमतिरुवाच इतिवाक्यंससाकर्ण्यववंदे
चरणौमहान् तत्तीर्थदर्शनोत्कण्ठ्यविकलीकृतमानसः ३४ आदिदेशनिजामात्यंमंत्रवित्तमसुत्तमम् तीर्थयात्रेच्छयासर्वान्सह
नेतुंमनोदधत् ३५ मंत्रिन्पौरजनान्सर्वानादिदेशममाज्ञया पुरुषोत्तमपादाब्जदर्शनप्रतिहेतवे ३६ येमदीयेपुरेलोकायेचमद्वा
क्यकारकाः सर्वेनिर्यांतुमत्पुर्यामयासहनरोत्तम ३७ येमद्वाक्यंसमुल्लंघ्यस्थास्यंतिपुरुषागृहे तेदंड्यायमदंडेनपाणिनोधर्महेतवे
३८ किंतेनसुतवृंदेनबांधवैःकिंकुदुर्नयैः यैर्नदृष्टःस्वनेत्राभ्यांपुण्यदःपुरुषोत्तमः ३९ सूकरीवृत्तिवत्तेषांप्रसूतिर्विघ्नभक्षका
येषांनपुत्राःपौत्रावाहरिंशरणमागताः ४० योदेवोनाममात्रेणसर्वान्पालयितुंक्षमः तन्नमस्कुरुतेक्षिप्रंमदीयाप्रकृतिःशुभा ४१

इतिवाक्यंमनोहारिभगवद्गुणगुंफितम् प्रजर्हर्षमहामात्यउत्तमःसत्यनामधृक् हस्तिनंवरमारोप्यपटहंतत्रघोषयत् ४२ यदादि
ष्टंनृपेणेह तीर्थयात्रांसमिच्छता ४३ गच्छतुर्त्वरितालोकाराज्ञासहमहागिरिम् पश्यंतुपापसंहारंपुरुषोत्तममादरात् ४४ क्री
यतांसर्वसंसारसागरोगोष्पदःपुनः भूयतांशंखचक्रादिचिन्हितैस्तनुभिर्नरैः ४५ इत्यादिघोषयामासराज्ञादिष्टंयदद्भुतम् स
चिवोरघुनाथांघ्रिध्याननिर्वारितश्रमः ४६ तच्छ्रुत्वाताःप्रजाःसर्वाआनंदप्लवसंयुताः मनोदधुःस्वनिस्तारेपुरुषोत्तमदर्शनात् ४७
निर्ययुर्ब्राह्मणास्तत्रशिष्यैःसहस्रुवेषिणः आशिषंवरदानाढ्यांददतोभूमिपंप्रति ४८ क्षत्रियाधन्विनोवीरावैश्यकास्तुक्रिया
न्विताः शूद्राःसंसारनिस्तारहर्षिताःस्वीयविग्रहाः ४९ रजकाश्चर्मकाःशूद्राःकिराताभित्तिकारकाः सूचिवृत्त्याचजीवंतस्तांबूल-
कृषकारकाः ५० तालवाद्यधरायेचयेचरंगोपजीविनः तैलविक्रयिणश्चैवचवस्त्रविक्रयिणस्तथा ५१ सूतावदतःपौराणीवा
तोहर्षसमन्विताः मागधाबंदिनस्तत्रनिर्गताभूमिपाज्ञया ५२ भिषकृत्त्याचजीवंतस्तथापाकान्नकोविदाः पाकस्वादुरसाभि
ज्ञाहास्यवाक्यविरंजकाः ५३ ऐंद्रजालिकविद्याभ्रास्तथावार्तासुकोविदाः प्रशंसंतोमहाराजनिर्ययुःपुरमध्यतः ५४ रा
जापितत्रनिर्व्यूढकुलसंध्यादिकक्रियाः ब्राह्मणंतापसश्रेष्ठमानिनायस्रुनिर्मलं ५५ तदाज्ञयामहाराजोनिर्जगामपुराद्बहिः
लोकैरनुगतोराजाबभौचंद्रइवोडुभिः ५६ क्रोशमात्रमतिक्रम्यक्षौरंकृत्वाविधानतः दंडकमंडलुबिभ्रन्मृगचर्मतथाशुभम् ५७
शुभवेषेणसंयुक्तोहरिध्यानपरायणः कामक्रोधादिरहितमनोबिभ्रन्महायशाः ५८ तदादुदुभयोभेर्यआनकाःपणवास्तथा
शंखवीणादिकसर्वंदध्मुस्तत्र्ह्लादकामुहुः ५९ जयदेवशदुःखघ्नपुरुषोत्तमसंज्ञित दर्शयस्वतनुमह्यंवदतोनिर्ययुर्जनाः ६०
इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेएकोनविंशोऽध्यायः १९ सुमतिरुवाच अथप्रयातेभूपालः
सर्वलोकसमन्वितः महाभागैश्चशांतैश्चगायकैःकृष्णकीर्तनैः १ शुश्रावासौमहाराजामार्गेगोविंदकीर्तनम् जयमाधवभक्ता
नांशरण्यपुरुषोत्तम २ मार्गेतीर्थान्यनेकानिकुर्वन्पश्यन्महोदयम् तापसाब्राह्मणास्तेषांमहिमानमथाशृणोत् ३ विचि-

न्नविष्णुवार्त्ताभिर्विनोदितमनानृपः मार्गेमार्गेमहाविष्णुंगापयामासगायकान् ४ दीनांधकृपणानांचपंगूनांवासनोचितम् दा
नददौमहाराजाबुद्धिमान्विजितेंद्रियः ५ अनेकतीर्थविरजमात्मानंमन्यतांगतम् कुर्वन्ययौस्वीयलोकेहरिध्यानपरायणः ६
नृपोगच्छन्ददर्शाग्रेनदींपापप्रणाशिनीम् चक्रांकितग्रावयुतांमुनिमानसनिर्मलां ७ अनेकमुनिवृंदानांबहुश्रेणिविराजिता
म् सारसादिपतत्रीणांकूजितैरुपशोभिताम् ८ दृष्ट्वापप्रच्छविप्राग्र्यंतापसंधर्मकोविदम् अनेकतीर्थमाहात्म्यविशेषज्ञान
जृंभितम् ९ स्वामिन्केयंनदीपुण्यामुनितापससेविता दर्शनान्ममचित्तस्यप्रमोदपदनिर्भरा १० इतिश्रुत्वावचस्तस्यराजराज
स्यधीमतः वक्तुंप्रचक्रमेविद्वान्तीर्थमाहात्म्यमुत्तमम् ११ ब्राह्मणउवाच गंडकीयंनदीराजन्सुरासुरनिषेविता पुण्योद
कप्रवाहाचहतपातकसंचया १२ दर्शनान्मानसंपापंस्पर्शनात्कर्मजंदहेत् वाचिकंस्वीयतोयस्यपानतःपापसंचयम् १३
पुराहृष्ट्वाप्रजानाथःप्रजादुष्टातिपापिनीः स्वगंडाद्विप्रुषोनेकपापघ्नींसृष्टवानिमाम् १४ एनांनदींयेपुण्योदांस्पृशंतिस्फुरत्तरंगिणीम्
तेगर्भभाजोनैवस्युरपिपापकृतोनराः १५ अस्याभवायेचाश्मानश्चक्रचिन्हैरलंकृताः तेसाक्षाद्भगवंतोहिस्वस्वरूपधराःपराः १६
शिलाःसपूजयेद्यस्तुनित्यंचक्रसमन्विताः नजातुचिज्जनन्यावैजठरंससुपाविशेत् १७ पूजयेद्योनरोधीमान्शालिग्रामशिलांवरा
म् तेनाचीर्णव्रतंभाव्यंदंभलोभवियोगिना १८ परदारपरद्रव्यविमुखेननरेणहि जनीयःप्रयत्नेनशालग्रामःसचक्रकः १९
द्वारवत्याभवंचक्रंशिलावैगंडकीभवा पुंसांक्षणाद्धरत्येवपापंजन्मशतार्जितम् २० अपिपापसहस्राणांकर्त्ताचेन्नरोभवेत्
शालग्रामशिलातोयंपीत्वापूतोभवेत्क्षणात् २१ ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवेदपथिस्थितः शालग्रामंपूजयित्वागृहस्थोमोक्ष
माप्नुयात् २२ नजातुचित्स्त्रियाकार्यंशालग्रामस्यपूजनम् भर्तृहीनाथसुभगास्वर्गलोकहितैषया २३ मोहात्स्पृशेत्तां
महिलाजन्मशीलगुणान्विता हित्वापुण्यसमूहंसासत्वरंनरकंव्रजेत् २४ स्त्रीपाणिमुक्तपुष्पाणिशालग्रामशिलोपरि पवेराधि
कपातानिवदंतिब्राह्मणोत्तमाः २५ चंदनंविषसंकाशंकुसुमंवज्रसन्निभम् नैवेद्यंकालकूटाभंभवेद्भगवतःकृतम् २६

तस्मात्सर्वात्मनात्याज्यस्त्रियास्पर्शःशिलोपरि करोतियातिनरकंयावदिंद्राश्चतुर्दश २७ अपिपापसमाचारोब्रह्महत्यायुतोपिवा
शालग्रामशिलातोयंपीत्वायातिपरांगतिम् २८ तुलसीचंदनचक्रशंखाधद्राथचक्रकम् शिलाताम्रस्यपात्रेतुविष्णोर्नामपदामृत
म् २९ पदामृततुनवभिःपापराशिप्रदाहकम् वदंतिमुनयःशांताःसर्वशास्त्रार्थकोविदाः ३० सर्वतीर्थपरिस्नानात्सर्वक्र
मतुसमर्चनात् पुण्यंभवतियद्राजन्बिंदोबिंदोतदद्भुतम् ३१ शालग्रामशिलायत्रपूज्यतेपुरुषोत्तमैः तत्रयोजनमात्रंतुती-
र्थकोटिसमन्वितम् ३२ शालग्रामाःसमाःपूज्याःसमेषुद्वितयंनहि विषमाएवसंपूज्याविषमेषुत्रयंनहि ३३ द्वारावतीभवंचक्रं
तथावैगंडकीभवम् उभयोःसंगमोयत्रतत्रगंगासमुद्रगा ३४ रुक्षाःसर्पंतिपुरुषान्नायुःश्रीबलवर्जितान् तस्मात्स्निग्धामनोहारि
रूपिणोददतिश्रियम् ३५ आयुःकामोनरोयस्तुधनकामोहियःपुमान् पूजयन्सर्वमाप्नोतिपारलौकिकमैहिकम् ३६ प्राणांतका
लेनुर्यस्यभवेद्भाग्यवतोनृप वाचिनामहरेःपुण्यंशिलात्हृदितदंतिकम् ३७ गच्छत्सप्राणमार्गेषुयस्यविश्रंभितोपिचेत् शालिग्रा
मशिलास्फूर्तिस्तत्रमुक्तिर्नसंशयः ३८ पुराभगवताप्रोक्तमंबरीषायधीमते ब्राह्मणान्यासिनोमुक्ताःशालग्रामशिलामम ३९ स्व
रूपश्चिन्तयंमत्यमेनद्धिक्षितिमंडले पापिनापापनिर्हारंकर्तुंधूतमुदंचतत् ४० निंदंतिपापिनोयेवाशालग्रामशिलांसकृत् कुंभी
पाकेपचंत्याशकृयावदाभूतसंप्लवम् ४१ पूजांसमुद्यतकर्तुंयोवारयतिमूढधीः तस्यमातापितावंधुःसर्वेनरकभाजिनः ४२ यो-
वाकथयतिक्षिप्रंशालग्रामार्चनंकुरु सकृतार्थोनयत्याशुवैकुंठंस्वस्यपूर्वजान् ४३ अत्रैवोदाहरंतीममितिहासंपुरातनम् मुनयो
वीतरागाश्चकामक्रोधविवर्जिताः ४४ पुराकीकटसंज्ञेवैदेशेधर्मविवर्जिते आसीत्पुल्कसजातीयोनरःशबरसंज्ञितः ४५ नि
त्यंजंतुवधोद्युक्तःशरासनधरोमुहुः तीर्थप्रतिचियासूनांबलाद्धरतिसंबलम् ४६ अनेकप्राणिहत्यायांपरस्त्वनिरतःसदा सदारागा
दिसंयुक्तःकामक्रोधादिसंयुतः ४७ विचरत्यनिशंभीमेवनेप्राणिवधंकरः विषसंसिक्तबाणाग्रोरूढचापगुणोधमः ४८ एकदापर्य
टन्व्याधोप्राणिमात्रभयंकरः कालप्राप्तंनजानातिसमीपेप्युग्रमानसः ४९ यमदूतास्तुसंप्राप्ताःपाशमुद्गरपाणयः ताम्रकेशादीर्घ-

नरवालंबदंष्ट्राभयानकाः ५० श्यामालोहस्यनिगडान्बिभ्रतोमोहकारकाः बभंतुपापिनंत्वेनंप्राणिमात्रभयंकरम् ५१ कदाचिन्मन
सानायंप्राणिमात्रोपकारकः परदारापरद्रव्यपरद्रोहपरायणः ५२ एतस्यजिव्हांमहतींमहंनिष्कर्षयाम्यतः एकोवदतिचैतस्यचक्षु
रुत्पाटयाम्यहम् ५३ एकोवदतिचैतस्यकरोच्छेदीयसूरापिनः अन्योवदत्यहंकर्णौकर्तयामिदुरात्मनः ५४ एवंवदतःसुभृशत
मोष्ठैर्विलिलिहकाः आगत्यतदुरात्मानसन्निधौतस्थुरुन्मदाः ५५ एकोदूतस्तदासर्परूपंधृत्वादशत्यहो सदष्टमात्रःसहसागतासुः
पर्यजायत ५६ तदातंलोहपाशेनबध्वातेयमकिंकराः कशाभिस्ताडयामासुर्मुद्गरैःप्रहरंतिच ५७ नारेदुष्टदुरात्मात्वंकदाचिद्धर्म
माचरः मनसापियतस्त्वंवैत्वाक्षिपामोघरौरवे ५८ त्वन्मांसंवायसारौद्राःभक्षिष्यंतिक्रुधान्विताः आजन्मतस्त्वभवतानकृतधर्मसेवन
म् ५९ त्वयापुत्रकलत्राणिद्रोहकृत्वासुपोषिताः नकदाचित्स्मृतोदेवःपापहारीजनार्दनः ६० तस्मात्वांलोहशकौवाकुंभीपाकेच
रौरवे धर्मराजाज्ञयासर्वेनेष्यामोबहुताडनैः ६१ एवमुक्त्वायदानेतुंसमैक्षन्यमकिंकराः तावत्प्रासौमहाविष्णुचरणाब्जपरायणाः
६२ यमदूतास्तदादृष्टावैष्णवेनमहात्मना पाशमुद्गरदंड्डादिदुष्टायुधधरागणाः ६३ पुल्कसंलोहनिगडैर्बध्वायातुंसमुद्यताः बं
धबंधग्रसछिंधिभिंधिभिंधीतिवादिनः ६४ तदाकृपालुर्गोविंदपादपद्मपरायणः अत्यंतकृपयायुक्तश्चेतास्तत्रनदाकरोत् ६५ अ
सौजहातुदुष्टपीडांमायातुयमसन्निधौ मोचयाम्यहमद्यैवयमदूतान्प्यगच्च ६६ इतिकृत्वामतिंतस्मिन्कृपायुक्तोमुनीश्वरः शालग्रामशि
लांहस्तेगृहीत्वास्यगतोंतिके ६७ तस्यपादोदकंपुण्यंतुलसीभिर्विमिश्रितम् मुखेवविनिक्षिप्यकर्णेरामनामजजापह ६८ तुलसींम
स्तकेतस्यधारयामासवैष्णवः शिलांहृदिमहाविष्णोर्दधारपरवैष्णवः ६९ गच्छंतुयमदूतांवैयातनासुपरायणाः शालग्रामशिलास्प
र्शाद्दग्धंतेपातकंमहत् ७० इत्युक्तवतितस्मिन्वैगणाविष्णोर्महाद्भुताः आययुस्तस्यगंडक्याःशिलास्पर्शाद्धतांहसः ७१ पीतव
स्त्राःशंखचक्रगदापद्मविराजिताः मुंचंतुवैष्णवंत्वेनंकिमर्थंविधृतात्वयम् ७२ आगत्यमोचयामासुर्लोहपाशादुरासदात् मोच
यित्वामहापापकारकंपुल्कसंभटाः ७३ ऊचुःकिमर्थंबद्धोयंवैष्णवःपूज्यदेहभृत् कस्याज्ञाकारकायूयंयदधर्मंप्रकारकाः ७४

इति वाक्यंसमाकर्ण्यजगदुर्यमकिंकराः धर्मराजाज्ञयाप्राप्तानेतुंपापिनमुद्यताः ७५ नासौकदाचिन्मनसाप्राणिमात्रोपकारकः
प्राणिहत्यामहापापकारीदुष्टशरीरभृत् ७६ नृन्बहूंस्तीर्थयात्रायांजिगीषंतोव्यलुंटयन् परदाररतोनित्यंसर्वपापाधिकारकः ७७ तस्मा
न्नेतुंवयंप्राप्ताःपापिनंपुल्कसनरम् भूवद्भिर्मोचितःकस्मादकस्मादागतैर्भृटैः ७८ विष्णुदूताऊचुः ब्रह्महत्याकरोवास्तुप्राणिको-
द्यपकारकः शालग्रामशिलास्पर्शःसर्वंदहतितत्क्षणात् ७९ सर्मतिनामयच्छ्रोत्रेविप्रभाज्जपितंयदि करोतिपापसंदाहंतूलवन्हिकणो
यथा ८० तुलसीमस्तकेयस्यशिलाहृदिमनोहरा मुखेवकर्णेश्रवारामनामसुक्तस्तदेवसः ८१ तस्मादनेनतुलसीमस्तकेधारिता
परा श्राविंतरामनामास्यशिलाहृदिचधारिता ८२ तस्मात्पापसमूहोस्यदग्धःपुण्यकलेवरः यास्यतेपरमंस्थानंपापिनोयत्सुदुर्ल
भम् ८३ वर्षायुतंतत्रभुक्त्वाभोगान्सर्वमनोहरान् भारतेजन्मसंप्राप्यसमाराध्यजगद्गुरुम् ८४ प्राप्स्यतेपरमंस्थानंसुरासुर
सुदुर्लभम् नज्ञातोमहिमास्यकुशिलायाःपरमेष्ठिनः ८५ दृष्टास्पृष्टार्चिताकापिसर्वपापहराक्षणात् इत्युक्त्वातेययुःसर्वम
हाविष्णोर्गणामुदा ८६ गतास्तेकिंकराराज्ञःकथयामासुरद्भुतम् वैष्णवोहर्षमापेदेरघुनाथपरायणः ८७ मुक्तोसौयम
पाशाच्चजगामघृणितोभृशम् तदाजगामविमलंकिंकिणीजालमंडितम् ८८ विमानंदेवलोकात्तुमनोहारिमहाद्भुतम् तत्रारुह्यगतः
सोयंमहापुण्यैर्निषेविते ८९ भोगान्भुक्त्वासविपुलानाजगाममहीतलम् तस्मिन्जन्मसमासाद्यशुचिवाडवसत्कुले ९० आ
राध्यजगतामीशंगतवान्परमंपदम् सपापीसाधुसंगत्याशालग्रामशिलास्पृशन् ९१ महापीडाविनिर्मुक्तोगतस्तत्परमंपदम् म
यातेभिहितंराजन्गंडकीचरितंमहत् ९२ श्रुत्वाविमुच्यतेपापैर्भुक्तिमुक्तिंचविंदति ९३ इतिश्रीपद्मपुराणेपातालखंडेरामा
श्वमेधेशेषवात्स्यायनसंवादेशालग्राममहिमानामविंशोऽध्यायः २० सुमतिरुवाच एतन्माहात्म्यमतुलंगंडक्याःकर्णगो
चरम् कृत्वाकृतार्थमात्मानंमन्यतेस्मनृपोत्तमः १ स्नात्वातीर्थेपितॄन्सर्वान्संतर्प्यजहर्षमहान् शालग्रामशिलापूजां-
कुर्वन्वाडववाक्यतः २ चतुर्विंशच्छिलास्तत्रगृहीत्वासनृपोत्तमः पूजयामासप्रेम्णाचचंदनादिकपूजनैः ३ तत्रदोना

निदत्वाचदीनांधानांविशेषतः गंतुंप्रचक्रमेराजापुरुषोत्तममंदिरम् ४ एवंक्रमेणसंप्राप्तोगंगासागरसंगमम् कृत्वाक्षिगोचरंतं
चब्राह्मणपृष्टवान्मुदा ५ स्वामिन्वदकियद्दूरेनीलाख्यपर्वतोमहान् पुरुषोत्तमसंवासःसुरासुरनमस्कृतः ६ तदाश्रुत्वाम
हद्वाक्यंरत्नग्रीवस्यभूपतेः उवाचविस्मयाविष्टोराजानंप्रतिसादरः ७ राजन्नेतत्स्थलंनीलपर्वतस्यनमस्कृतम् किमर्थंदृश्यते
नैवमहापुण्यददर्शनः ८ पुनःपुनरुवाचेनंस्थलंनीलस्यभूभृतः कथंनदृश्यतेराजन्पुरुषोत्तमवासभृत् ९ अकस्मात
मयासम्यक्गताभिल्लाक्षिगोचराः अनेनैवपथाराजन्नारूढपर्वतोपरि १० इतितद्वाक्यमाकर्ण्यविव्यथेमानसेनृपः नीलभूधरद-
र्शायकुर्वन्नुत्कंठितंमनः ११ उवाचचकथंविप्रदृश्यतेपुरुषोत्तमः कथंवादृश्यतेनीलस्तदुपायंवदस्वनः १२ तदावोक्यं
समाकर्ण्यरत्नग्रीवस्यभूपतेः तापसोब्राह्मणोवाक्यमुवाचनृपविस्मितः १३ गंगासागरसंयोगेस्नात्वास्माभिर्महामते स्यातव्यं
तावद्वात्रयावन्नीलोनदृश्यते १४ गीयतेपापहादेवःपुरुषोत्तमसंज्ञितः करिष्यतेकृपामाशुभक्तवत्सलनामधृक् १५ त्य
जत्यसौनवैभक्तान्देवदेवशिरोमणिः अनेकेरक्षिताभक्तास्तद्धायस्वमहामते १६ इतिवाक्यंसमाकर्ण्यराजाव्यथितचेतसा
स्नात्वागंगाब्धिसंयोगेततोनशनमादधत् १७ करिष्यतिकृपांचेद्धपुरुषोत्तमईषितः पूजांकृत्वाशनंकुर्यामन्ययानशनंव्रतम्
१८ इतिकृत्वानियमनंगंगासागररोधसि गायन्हरिगुणाग्राममुपवासमथाचरत् १९ राजोवाच जयदीनदयाकरप्रभोजय
दुःखहरस्वकाल्क्य जयभक्तजनार्तिनाशनेकृतवर्ष्मन्जयदुष्टघातक २० अंबरीषमथवीक्ष्यदुःखितंविप्रशापहतसर्वसत्म्र-
भम् धारयन्निजकरेसुदर्शनंतररक्षजठराधिवासतः २१ दैत्यराजपितृकृतव्यथातुरःशूलपाशकृतदुःखबालकः श्रीनृसिं
हतनुधारणात्वयारक्षितःसपदिपश्यतःपितुः २२ ग्राहवक्रपतिताघ्रिमुद्धटंवारणंद्रमतिदुःखपीडितम् वीक्ष्यसाधुकरुणा-
र्द्रमानसस्त्वंगरुत्मतिकृतारुहक्रियः २३ त्यक्तपक्षिपतिरात्तचक्रकोवेगकंपिवनमालिकांबरः गीयसेकरभिनक्रवक्रतामोच
कःसपदितद्विनाशकः २४ यत्रयत्रतवसेवकार्दनंतत्रतत्रतवदेहधारणम् पाल्यतेचभवतानिजःप्रभापापहारिचरितैर्मनी

हरेः २५ दीननाथसुरमौलिहीरकैर्घृष्टपादतल[illegible]कवल्लभ पापकोटिपरिदाहकप्रभोदर्शयस्वनिजदर्शनंमम २५ पापकृद्ध
द्विजनोयमागतोमानसेतवतथापिदर्शय तावकावयमघौघनाशनेविस्मृतंनहिसुरासुरार्चिता २६ येवदंतितवनाममनिर्मलंते
नरंतिसकलाघसागरम् संस्मृतिर्यदिकृतातदामयाप्राप्यतासकलदुःखकारक २७ सुमतिरुवाच एवंगायन्गुणान्रा
त्रौदिवावापिमहीपतिः क्षणमात्रंनविश्रांतोनिद्राप्रापनवैसुखम् २८ गायन्गच्छन्गृणन्तिष्ठन्वदत्येतदहर्निशम् दर्शय
स्वकृपानाथस्वतनुंपुरुषोत्तम २९ एवंराज्ञःपंचदिनंगतगंगाब्धिसंगमे तदाकृपाब्धिःकृपयाचिंतयामाससगोपतिः ३० असौराजा
मर्दर्थिनगानेनविगताधकः पश्यतामामकींप्रेष्ठांसुरासुरनमस्कृताम् ३१ इतिसंचिंत्यभगवान्कृपापूरितमानसः संन्यासिवे
षमास्थायययौराज्ञोंतिकंविभुः ३२ तत्रगत्वामहाराजत्रिदंडीयतिवेषधृक् भक्तानुकंपयाप्राप्तोवीक्षितस्तोपसेनहि ३३ ओंनमो
विष्णवेत्युक्त्वानमश्चक्रेनृपोत्तमः अर्घ्यपाद्यासनैःपूजांचकारहरिमानसः ३४ उवाचभाग्यमतुलंयद्भवानक्षिगोचरः अतःपरंदा
स्यतेमेगोविंदोनिजदर्शनम् ३५ एतच्छ्रुत्वातुतद्वाक्यंसंन्यासीनिजगादतम् राजन्शृणुष्वकथितंममवाक्यंविनिश्चितम्
३६ अहंज्ञानेनजानामिभूतंभव्यंभवच्चयत् तस्मादहंब्रुवेकिंचित्शृणुष्वैकाग्रमानसः ३७ श्वोमध्यान्हेहरिर्दद्याद्दर्शनंब्रह्मदुर्लभम्
पंचभिःस्वजनैःसाकंयास्यसेपरमंपदम् ३८ तवामात्यश्चमहिलातवतापसवाडवः पुरेतवकरंवारव्यसाधुश्चतंतुवायकः ३९ एतैःपंच
भिरेतस्मिन्नीलपर्वतसत्तमे यास्यसेब्रह्मदेवेंद्रवंदितेसुरपूजिते ४० इत्युक्त्वायतिरदृश्यंगतःक्वापिनदृश्यते तदाकर्ण्यनृपोह
र्षंप्रापचाशुसविस्मयम् ४१ राजोवाच स्वामिन्कोसौसमागत्यसंन्यासीमांयदुक्तवान् नदृश्यतेपुनःकुत्रगतोसौचित्तहृ
र्षदः ४२ तापसउवाच राजन्तवमहाप्रेम्णाकृष्णश्चित्तःसमभ्यगात् पुरुषोत्तमनामायंसर्वपापप्रणाशनः ४३ श्वोमध्या
न्हेतवपुरोभविष्यतिमहान्गिरिः तमारुह्यहरिंदृष्ट्वाकृतार्थःस्यानसंशयः ४४ इतिवाक्यसुधासिंधुनाशितस्वांतसज्वरः हर्षं
यदापभगवान्ब्रह्मापिनहिवेत्तितम् ४५ तदादुंदुभयोनेदुर्वीणापणवगोमुखाः महानंदस्तदाह्यासीत्राजराजस्यचेतसि ४६

गायन्हरिंक्षणंतिष्ठन्हसन्जल्पन्ब्रुवन्नमन् आनंदंप्रापकृधनंसर्वसंतापनाशनम् ४७ इतिश्रीपद्मपुराणेपातालखंडेरामा-
श्वमेधशेषवात्स्यायनसंवादेएकविंशोऽध्यायः २१ सुमतिरुवाच अथसर्वविदिंननीत्वाहरिस्मरणकीर्तनैः रात्रौसुष्वापगंगायास्तीरो-
थसुरुफलप्रदे १ ददर्शस्वप्नमध्येसःस्वात्मानंचचतुर्भुजम् शंखचक्रगदापद्मशार्ङ्गकोदंडधारिणम् २ नित्यंतुपुरुषोत्तमस्यपु
रतःशर्वादिदेवैःसहब्रह्मश्रीमद्भिस्च नतंतुयुतामजभवाभ्यादिप्रहेत्याद्यभिः मोदादिप्रवरैर्गणैःस्तुतंतुभिःश्रीसर्वदोपास्यतंप्रेक्षन्नासनृ
पोमुलोकविषयेहर्षतमत्यद्भुतम् ३ ददातिमनसोभीष्टंपुरुषोत्तमगत्तमः आत्मानंतुकृपापात्रमन्यतेस्ममहामतिः ४ इत्येवंस्व-
प्नविषयेददर्शनृपसत्तमः प्रातःप्रबुद्धोविप्रायजगादस्वप्नमीक्षितम् ५ तच्छ्रुत्वावाडवोधीमान्कथयामासविस्मितः राजस्त्व
यासौदृष्टोयःपुरुषोत्तमसंज्ञितः ६ दास्यतेशंखचक्रादिचिह्नितांस्त्वंतनुंहरिः इतिश्रुत्वातुतद्वाक्यरत्नग्रीवोमहामनाः ७ दाप-
यामासदानानिदीनानांमनसोचितम् स्नात्वागंगाब्धिसंयोगेतर्पयित्वापितॄन्सुरान् ८ गायन्हरिगुणग्रामंप्रत्यक्षंतत्त्वदर्शनम्
ततोमध्यान्हसमयेदिविदुंदुभयोमुहुः ९ जघ्नुःसुरतराघातबहुशब्दसुशब्दिताः अकस्मात्पुष्पवृष्टिश्चबभूवनृपमस्तके १०
धन्योसिनृपवर्यस्त्वंनीलोयस्याक्षिगोचरः ११ शृणोतिसद्दिव्यंवाक्यंनृपोदेवप्रणोदितम् तदासूर्यसमाभासकोटिकोटिधरागिरिः
१२ राज्ञोक्षिगोचरोजातोनीलनामामहागिरिः राजतेःकानकैःश्रृंगैःसमंतात्परिराजितः १३ किमग्निःप्रज्वलत्येषद्वितीयःकिं-
नुभास्करः किमयंवैद्युतःपुंजःसकस्मात्स्थिरकांतिभृत् १४ तापसोब्राह्मणोदृष्ट्वानीलप्रस्थसुशोभितम् राज्ञानिवेदयामाससं
वैपुण्योमहागिरिः १५ तच्छ्रुत्वानृपपूज्यस्तुशिरसाप्रणनामह धन्योस्मिकृतकृत्योस्मिनीलोमेत्वक्षिगोचरः १६ अमात्योरा
जपुत्रीचकरवस्तुवायकः नीलप्रदृश्यसंदृष्टावभूवुःपुरुषर्षभाः १७ मुहूर्तविजयेयंत्नीलपर्वतमारुहन् महादुंदुभि
निर्घोषान्शृण्वन्सुरैःकृतान् १८ तस्योपरितनेश्रृंगेचित्रपादपराजिते ददर्शहाटकाबद्धंदेवालयमनुत्तमम् १९ ब्रह्माग
त्यसदापूजांकरोतिपरमेष्ठिनः नैवेद्यंकुरुतेयत्रहरिसंतोषकारकम् २० दृष्ट्वायतत्रविमलंदेवायतनमुत्तमम् प्रविवेशपरी-

वीरैःपंचभिःसहसंवृतः २१ तत्रहृष्टाजातरूपेमहामणिविचित्रिते सिंहासनेविराजंतंचतुर्भुजमनोहरम् २२ चंडप्रचंडविजयजया
दिभिरुपासितम् प्रणनामसपत्नीकोराजासेवकसंयुतः २३ प्रणम्यपरमात्मानंमहाराजोसुरोत्तमम् स्नापयामाससुविधिवद्वेदोक्तैःस्नान
मंत्रकैः २४ अर्घ्यपाद्यादिकंचक्रेप्रीतेनमनसानृपः चंदनेनविलेप्यैनंसुवस्त्रैर्विभिनिवेद्यच २५ धूपमारार्तिकंकृत्वासर्वस्वादुम
नोहरम् नैवेद्यंभगवन्मूर्त्यैन्यवेदयदयोनृपः २६ प्रणम्यचस्तुतिंचक्रेतापसब्राह्मणैनच यथामतिगुणग्रामगुंफितस्तोत्रसंचयैः
२७ राजोवाच एकस्त्वंपुरुषःसाक्षाद्भगवान्प्रकृतेःपरः कार्यकारणतोगिन्योमहत्तत्त्वादिपूजितः २८ त्वन्नाभिकमला
ज्जज्ञेब्रह्मासृष्टिविचक्षणः तथासंहारकर्ताचरुद्रस्त्वन्नेत्रसंभवः २९ त्वयाज्ञप्तःकरोत्यस्यविश्वस्यपरिचेष्टितम् त्वत्तोजा
तंपुरासर्वंजगत्स्थाणुचरिष्णुच ३० चेतनाशक्तिमाविश्यत्वमेवंचेतयस्यहो तवजन्मतुनास्त्येवनातस्तवजगत्पते परिणामःक्ष
योवृद्धिस्त्वयिसंत्येवनोविभो ३१ तथापिभक्तरक्षार्थंधर्मस्थापनहेतवे करोषिजन्मकर्माणिह्यनुरूपगुणानिच ३२ त्व-
यामात्स्यवपुर्धृत्वाशंखवस्तुनिहतोसुरः वेदाःसुरक्षिताब्रह्मन् महापुरुषपूर्वजः ३३ शेषोनवेत्तिमहितेभारत्यपिमहेश्वरी
किमुतान्येमहाविष्णोमादृशास्तुकुबुद्धयः ३४ मनसात्वानचाप्नोतिवागीयंपरमेश्वरी तस्मादहंकथंत्वांवैस्तोतुंस्यामीश्वरःप्र
भो ३५ इतिस्तुत्वासशिरसाप्रणाममकरोन्मुहुः गद्गदस्वरसंयुक्तोरोमहर्षांकितांगकः ३६ इतिस्तुत्वाप्रहृष्टात्माभगवान्पु
रुषोत्तमः उवाचवचनंसत्यंराजानंप्रतिसार्थकम् ३७ श्रीभगवानुवाच तवस्तुत्याप्रहर्षोभून्ममराजन्महामते जानीहित्वंम
हाराजमांचप्रकृतितःपरम् ३८ नैवेद्यभक्षणंत्वंहिशीघ्रंकुरुमनोहरम् चतुर्भुजत्वमाप्तःसन्गंतासिपरमंपदम् ३९ त्व
त्कृतस्तुतिरत्नेनयोमास्तोष्यतिमानवः तस्यापिदर्शनदास्यंभक्तिमुक्तिवरप्रदम् ४० इत्युक्तंवचनंराजाश्रुत्वाभगवतोदितम्
नैवद्यभक्षणंचक्रेचतुर्भिःसहसेवकैः ४१ ततोविमानंसंप्राप्तंकिंकिणीजालमंडितम् अप्सरावृंदसंसेव्यंसर्वभोगसमन्वितम्
४२ पुरुषोत्तमसंज्ञंचपश्यन्राजासधार्मिकः ववंदेचरणौतस्यकृपापात्रकृतात्मकः ४३ तदाज्ञातोविमानेस्वआरुह्य

महिलायुतः जगामपश्यतस्तस्यदिविवैकुंठमद्भुतम् ४४ मंत्रीधर्मपरोराजासर्वधर्मविदुत्तमः जग्मेसाकंविमानेनललना
वृंदसंवृतः ४५ तापसब्राह्मणस्तत्रसर्वतीर्थावगाहकः चतुर्भुजत्वसंप्राप्तोययौदिविविमानिभिः ४६ करवोपिमहाराज-
गानपुण्येनदर्शनम् प्राप्तोययौसुरावासंब्रह्मदेवादिदुर्लभम् ४७ सर्वभूचलितानाविष्णुलोकंपरममद्भुतम् चतुर्भुजाःशंखचक्र
गदापाथोजधारिणः ४८ सर्वेमेघश्रियायुक्ताःफुल्लसुंदभोजपाणयः हारकेयूरकटककंभूषितांगायदुर्दिवम् ४९ तद्विमानाव
लीदृष्ट्वालोकैःप्रकृतिभिस्तदा दुंदुभीनातुनिर्घोषस्तैःकृतःकर्णगोचरः ५० तदैकोब्राह्मणोह्यासीद्विष्णुपादाब्जवल्लभः गतस्त
द्विरहात्कृष्णचेताजातश्चतुर्भुजः ५१ तच्चित्रवीक्ष्यलोकास्तेप्रशंसंतोमहोदयम् गंगासागरसंयोगेस्नात्वायुस्तेपुरंप्रति ५२ अहो-
भाग्यंभूमिपतेरत्नग्रीवस्यसन्मतेः जगामानेनदेहेनतद्विष्णोःपरमंपदम् ५३ राजन्नसौनीलगिरिःपुरुषोत्तमसत्कृतः यंवीक्ष्यैव
व्रजत्यद्धावैकुंठपरमायनम् ५४ एवंनीलस्यमाहात्म्ययःशृणोतिसभाग्यवान् यस्तुश्रावयतेलोकान्सगच्छेत्परमंपदम् ५५
एतच्छ्रुत्वातुदुःस्वप्नोनश्यतिस्मृतिमात्रतः प्रांतेसंसारनिस्तारंददातिपुरुषोत्तमः ५६ योसौनीलाधिवासीचसरामःपुरुषोत्तमः सी-
तासाक्षान्महालक्ष्मीःसर्वकारणकारणम् ५७ हयमेधचरित्वासलोकान्वैपावयिष्यति यन्नामब्रह्महत्यायाःप्रायश्चित्तंप्रद
श्यते ५८ इदानींत्वद्धयःप्राप्तोनीलेपर्वतसत्तमे पुरुषोत्तमदेवंतुनमस्कुरुमहामते ५९ तत्रनिःपापिनोभूत्वायास्यामःपर-
मंपदम् यस्यप्रसादाद्बहवोनिस्तीर्णाभवसागरात् ६० एवंप्रवदतस्तस्यप्राप्तोश्वोनीलपर्वतम् वायुवेगेनपृथिवीविकुर्वन्खुर
विक्षताम् ६१ तदाराजापितत्पृष्ठचारीनीलाभिधंगिरिम् प्राप्तोगंगाब्धिसंयोगेस्नात्वागात्पुरुषोत्तमम् ६२ स्तुत्वानत्वाचदेवेशं
सुरासुरनमस्कृतम् जातंकृतार्थमात्मानमन्यतेस्मसशत्रुहा ६३ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवा
देनीलगिरिमहिमावर्णनंनामद्वाविंशोऽध्यायः २२ शेषउवाच क्षणंस्थित्वातृणंत्यक्त्वाययौवाजीमनोजवः वीरश्रेणीवृतःपत्रं
भालेधृत्वासचामरम् १ शत्रुघ्नेनसुवीरेणलक्ष्मीनिधिनृपेणच पुष्कलेनोग्रवाहेनप्रतापाग्र्येणरक्षितः २ ययौपुरींसचक्रांकां

स्रुबाहुपरिरक्षिताम् अनेकवीरकोटीभीरक्षितो नुगतः प्रभो ३ तदा पुत्रस्य दमनो मृगयामास्थितो महान् ददर्शाश्वं भालपत्रं
चंदनादिभिरर्चितम् ४ विलोक्य सेवकं प्राह कस्याश्वो मे क्षिगोचरः भालपत्रं धृतं किंतु चामरं किं तु शोभनम् ५ इति राज्ञो वचः
श्रुत्वा सेवकः प्रययौ ततः यत्रासौ वर्तते वाजी भालपत्रः स्रुशोभनः ६ गृहीत्वा तं केशसंधे रत्नमालाविभूषितम् निनाय चाग्रे भूप-
स्य सुबाहुकुलधारिणः ७ स पत्रं वाचयामास स्रुंदराक्षरशोभितम् अयोध्यायां महाराजः पुरापंक्तिरथो बली ८ तस्यात्मजो रामभ-
द्रः सर्वशूरशिरोमणिः नान्योस्ति तत्समः पृथ्व्यां धनुर्धारणविक्रमः ९ तेनासौ मोचितो वाजी चंदनादिभिरर्चितः तं पालयति धर्मा
त्मा शत्रुघ्नः परवीरहा १० येन शूरा वयं वीरा धनुर्हस्ता इमे वयम् ते गृह्णंतु बलाद्वाहं रत्नमालाविभूषितम् ११ तं च मोक्ष्यति शत्रुघ्नः
सर्ववीरशिरोमणिः अन्यथा पादयोस्तस्य पतितव्यात्तु धन्विनः १२ इत्यभिप्रायमालोक्य जरामनृपनंदनः राम एव धनुर्धारी नवयस
त्रियाः स्मृताः १३ तातेमवस्थिते पृथ्व्यां कोयं गर्वो महान्भुवि प्राप्नोति गर्वस्य फलं मम निर्मुक्तसायकैः १४ अद्य मे निशिता बाणाः
शत्रुघ्नं किंशुकं यथा पुष्पितं विदधंतु त्वद्य मच्छरव्रातविव्यधः १५ दारयंतु कपोलानि सायकाः ममदंतिनाम् अश्वान्पश्यंतु-
शतशो रुधिरौघपरिप्लुतान् १६ पिबंतु योगिनीसंघा रुधिराणि नृमस्तकैः शिवा भवंतु संतुष्टा मेदोरिक्रव्यभक्षणैः १७ पश्यंतु स्रु-
मदास्तस्य मम बाहुबलं महत् कोदंडदंडनिर्मुक्तशरकोटिविमुंचतः १८ इत्युक्त्वा महीपस्य तनुजो दमनाभिधः स्वपुरं प्रेषयित्वा
तं प्रहृष्टो भवदुद्भटः १९ सेनापतिमुवाचेदं सज्जीकुरु महामते सेनापरिमितां मह्यं वैरिवृंदनिवारणे २० सज्जां सेनां विधाय
स्रुसंमुखो रणमंडले स्थितोत्र यावदस्तु यस्तावत्प्राप्ता हयानुगाः २१ क्वासौ हयो महाराज्ञः क्व चाश्वः पत्रचिन्हितः पप्रच्छुस्ते
तु चान्योन्यं मतिव्याकुलिता मुहुः २२ तावद्ददर्श परतः प्रतापाग्र्यः परंतपः सज्जीभूतं तु कटकं वीरशब्दनिनादितम् २३ त-
त्रावदन्नने केचैनीतोश्वोनेन भूपतेः अन्यथा संमुखं तिष्ठेत्कश्चवीरो बलात्तुगः २४ इत्याकर्ण्य प्रतापाग्र्यः प्रेषयामास सेवकम्
स गत्वा तत्र पप्रच्छ कुत्राश्वो राम भूपतेः २५ केन नीतः कुतो नीतो रामं जानाति नो कुधीः यस्य शर्वं सुरवादेवा बलिमादाय सन्नताः

२६ तस्यैवैधर्मराजस्यकुपितंतुबलंमहत् सर्वथाहिप्रसिष्येतप्राणिवित्तंचपास्यति २७ इत्थमुक्तंसमाकर्ण्यतदाराजसुतोब
ली नैवंधिक्कारयामासवाक्जालेनसुदुर्मनाः २८ मयानीतोयज्ञहयःपत्रंविन्दाबलंकृतः येशूरास्तेतुमांजित्वामोचयन्तु
बलादिह २९ सेवकस्तुहयस्यश्रुत्वारोषपूर्णंसहस्त्रयौ गत्वोनिवेदयामासयथासुवहुवर्णितम् ३० तच्छ्रुत्वारोषताम्राक्षःप्र
तापाग्र्योमहाबलः ययौयोद्धुराजपुत्रंमहावीरपुरस्कृतम् ३१ रथेनकनकांगेनचतुर्वाजिसुशोभिना सुकूबरेणसर्वास्त्रपूरि
तेनययौबली ३२ धनुष्टंकारयामासमहाबलसमन्वितम् पुनःपुनर्जहारौघैःकोपादुद्रुतमिताशुकः ३३ अश्ववाहागजा
रूढारवड्गोल्लसितपाणयः अन्वयुस्तेप्रतापाग्र्यंरोषपूर्णाकुलेक्षणाम् ३४ हस्तिनःपत्तयश्चैवकोटिशःप्रधनोद्यताः चि
रकालमभीप्संतोरणवीरेणकारितम् ३५ ततोद्यतसमाज्ञायरिपुरौन्यंनृपात्मजः प्रद्युज्जगामवीराग्र्योमहाबलपरीवृतः
३६ सन्नद्धःकवचीखड्गीशरासनधरोयुवा लीलयैवययौयोद्धुंमृगराड्गजयूथकम् ३७ तदायोधाःप्रकुपिताःपरस्परवधैषिणः
छिंधिभिंधीतिभाषंतोरणकार्यविशारदाः ३८ पत्तयःपत्तिसंधेनगजारूढाश्वसादिभिः रथारूढारथैश्चैववाहारूढाश्वसंस्थि-
तैः ३९ गजाभिन्नाद्विधाजाताहयाश्चद्विदलीकृताः अनेकनरमस्तिष्कैर्मेदिनीपूरितात्वभूत् ४० तदाप्रकुपितोराजाप्र
तापाग्र्योमहाबलः स्वसैन्यकदनोद्युक्तराजपुत्रंसमीक्ष्यच ४१ उवाचसारथिंराजाप्रापयाश्वान्यतोमम सैन्यस्यकदनास
क्तोराजपुत्रोमहारथः ४२ महाबलोवीरशिरोमणिभूतोनृपात्मजः ययौसन्मुखमेवास्यप्रतापाग्र्यस्यवीर्यवान् ४३ सार
थिःप्रापयामासप्रतापाग्र्यस्यवाजिनः यत्रासौदमनोवीरःसर्वशूरशिरोमणिः ४४ गत्वातमाह्वयामासराजपुत्रंरणोद्धतम् रथे
पुरटनिर्णिक्तेतिष्ठन्कोदंडदंडभृत् ४५ रेराजपुत्रकशिशोत्वयाबद्धोश्वसत्तमः नज्ञातोस्तिमहाराजःसर्ववीरेंद्रसेवितः
४६ यस्यप्रतापदैत्येंद्रोनशक्तःसोढुमद्भुतम् तस्यत्वंवाजिनंनीत्वागतोह्यपुटभेदनम् ४७ मांजानीहिपुरंप्रासंकालरूपंतुवै
रिणाम् मुंचाश्वमभंगच्छाशुगच्छक्रीडनकंकुरु ४८ कस्यात्मजस्त्वंकुत्रत्यःकथंनोदीर्घदर्शिना धृतोश्वस्त्वयिसंजाताघृणा

ममशिशोत्वयि ४९ वाक्यमाकर्ण्यदमनःस्मितंचक्रेमहामनाः उवाचचप्रतापाग्र्यंतृणीकुर्वंश्चतद्बलम् ५० दमनउवाच
मयाबद्धोबलादश्वोनीतःस्वपुरभेदनम् नार्पयिष्येयदिसप्राणःकुरुयुद्धंमहामते ५१ त्वयायदुक्तंबालस्त्वंगत्वाक्रीडनकं
कुरु तत्प्रेक्षस्वमहाराजक्रीडनंरणमूर्धनि ५२ शेषउवाच इत्युक्त्वासगुणंचापंविधायभ्रूभुजोगजः शरणाशतमाधत्त
प्रतापाग्र्यस्यवीक्षतः ५३ संधायबाणंशतकंशरंवंदध्मौप्रतापवान् तेनशरवनिनादेनकातराणामनोत्रसत् ५४ ताडयामासहृ
दयेबाणानांशतकेनसः प्रतापाग्र्यःप्रचिच्छेदलघुहस्तःसमागतान् ५५ सबाणकृतकंदृष्ट्वाकुपितोव्यमुंचच्छरान् कंकपक्षा
नुशितान्तीक्ष्णभल्लान्राजात्मजोबली ५६ आकाशेभुविमध्येचबाणान्ददर्शिरेततः स्वनामचिन्हितांस्तीक्ष्णधारापातसुशो
भितान् ५७ शरास्तावद्धजहृदिलग्नावन्हिकणान्बहून् सृजंतःकुर्वतेसैन्यदहनंतद्भुवंमहत् ५८ प्रतापाग्र्यःप्रकुपितोति
ष्ठतिष्ठेतिवेब्रुवन् शरेणदशसंख्येनताडयामासयोधिनं ५९ तेबाणाराजपुत्रस्यललाटेपरिनिष्ठिताः विराजतेरमचमुनेद-
शशाखास्तरौरिव ६० तेनबाणप्रहारेणविव्यथेनमहामनाः यष्टिकाप्रहतोयद्वत्कुंजरःसप्तवर्षणः ६१ बाणान्धनुषिसंधाय
मुमोचत्रिशतान्रुक्मान् स्वर्णपुंखवरचितान्महाकालनलोपमान् ६२ तेबाणास्तुप्रतापाग्र्यवक्षोभित्वागतास्त्वधः शोणिताक्तायया
रामचंद्रभक्तिपराङ्मुखाः ६३ प्रतापाग्र्योप्रकुपितःशरान्मुंचन्सहस्रशः अकरोद्विरथंसूनुंसुबाहोस्तत्क्षणाद्भुतम् ६४ च-
तुर्भिश्चतुरोवाहान्द्वाभ्यांध्वजमपानयत् एकेनसारथेःकायात्शिरोत्वधअपानयत् ६५ चतुर्भिस्ताडयामासतंसूनुंनृपतेःपुनः
तत्क्षणाच्चापमेकेनगुणयुक्तंतुचिच्छिदे ६६ सोन्यंरथंसमारुह्यहयरत्नसुशोभितम् धनुःकरेसमादायसज्यंचक्रेमहामनाः
६७ प्रत्युवाचप्रतापाग्र्यंत्वयाविक्रांतमद्भुतम् पश्येदानींपराक्रांतिंधनुषोममसद्भट ६८ एवमुक्त्वातुदमनोबाणान्द-
शसमाददे चतुर्भिश्चतुरोवाहान्निनाययमसादनम् ६९ चतुर्भिस्तिलशःकृत्वारथंचक्रसमन्वितः एकेनहृदिविव्याधवा
णेनैकेनसारथिम् ७० जगर्जशरवमापूर्यशरवशब्देनशब्दितम् तत्कर्मपूजयन्साधुसाधुवीरमहाबल ७० इतिवि-

क्रांतमालोक्यप्रतापाग्र्योरुषान्वितः अन्येरथेसमास्थायययौयोद्धुंनृपात्मजम् ७२ उवाचवीरपश्यत्वंममविक्रांतमद्भुत-
म् इत्युक्त्वासमुमोचौघान्शराणांशितपर्वणाम् ७३ शूराःसर्वत्रदृश्यंतेकुंजरेषुहयेषुच पुरश्चह्यग्रेचसर्वत्रव्याप्ताश्चातरगोच
राः ७४ तंराजपुत्रंशितबाणकोटिभिर्व्याप्तंविधायाशुजगर्जविक्रमी सहर्षयन्स्वीयगणान्परान्वैकुर्वन्प्रभाशून्यतमानुगतास्त-
कान् ७५ सराजपुत्रःशितसायकव्रजैःसंपूर्णमात्मानमवेक्ष्यरोषितः जग्राहशस्त्राणिविशेषविक्रमोधनुश्चदंडंभुजदंडयोर्महा
न् ७६ चकर्तसर्वाण्यस्त्राणिशस्त्राणिचमहाबलः रोषताम्रेक्षणोमुंचन्शरान्वैरिविदारणः ७७ तच्छस्त्रजालंनिर्धूयराज
पुत्रोजगादतम् क्षमस्वैकंप्रहारंमेयदिशूरोसिमारिष ७८ यद्यनेनभवंतंवैरथात्पातयामिन प्रतिज्ञांशृणुमेवीरममगर्वेणनि
र्मिताम् ७९ वेदंनिंदंतियेमर्त्याहेतुवादविचक्षणाः तेषांपापंममैवास्तुनरकार्णवमज्जकम् ८० इत्युक्त्वाबाणमासाद्यकोद
डेकालसन्निभम् ज्वालामालाकुलंतीक्ष्णंनिषंगादुद्धृतंवरम् ८१ समुक्तोनृपपुत्रेणहृदिलक्ष्यीकृतःशिरः जगामतरसातंवैका-
लानलसमप्रभः ८२ प्रतापाग्र्यःशरंदृष्ट्वास्वपातनसमुद्यतम् बाणान्धनुषिधायाथशरच्छेदायवैशितान् ८३ सबाणःसर्व
बाणांस्तान्छिंदन्मध्यतएवहि जगामतूर्णमेवास्यहृदयंधैर्यसंयुतः ८४ संलग्नोहृदिनालीकःप्रविवेशतदंतरम् राजाकृत
प्रहारस्तुपपातपृथिवीतले ८५ मूर्च्छितंचेतनाहीनंरथोपस्थाद्गतंभुवि सारथिस्तुसमादायापोवाहरणमंडलात् ८६ हाहा
कारोमहानासीत्बलभग्नगतंततः यत्रशत्रुघ्ननामासौवीरकोटिपरीवृतः ८७ राजात्मजोजयंप्राप्यप्रतापाग्र्यंविजित्यसः प्र
तीक्षांतुचकारास्यशत्रुघ्नस्यचभूपतेः ८८ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेत्रयोविंशोऽध्यायः
२३ शेषउवाच शत्रुघ्नस्यक्रुधाविष्टोदंतान्दंतैर्विनिष्पिषन् हस्तौधुन्वन्लिहन्नेवसृक्वणीजिह्वयासकृत् १ पुनःपुनस्तान्प-
प्रच्छकेनाश्वोनीयतेमम प्रतापाग्र्यःकेनजितोसर्वशूरशिरोमणिः २ सेवकास्तेतदाप्रोचुर्दमनोनामशत्रुहन् सुबाहुजःप्रता
पाग्र्यंजितवान्हयमाहरत् ३ इतिश्रुत्वाहयंनीतंदमनेनस्ववैरिणा आजगामसवेगेनयत्राभूद्रणमंडलम् ४ तत्रापश्यन्स-

शत्रुघ्नोगजान्दीर्णकपोलकान् पर्वतानिवरक्तोदेमज्जमान्महाधनान् ५ हयास्तत्रनिजारोहकर्तृभिःसहिताःक्षितौ मृतावीरेण
दृष्टाशत्रुघ्नेनरुक्कोपिना ६ नरान्रथपतीन्भग्नान्वीक्ष्यमाणःसशत्रुहा अतीवचुक्रुधेयावत्प्रलयेप्रलयार्णवः ७ पुरतोदम-
नंवीक्ष्यहयनेतारमद्भुतम् सैनिकैःसहस्थातारंतृणीकृत्यनिजंबलम् ८ तदाराजाप्रत्युवाचयोधान्कोपाकुलेक्षणः कोसौदमन
जेतात्रसर्वशस्त्रास्त्रधारकः ९ योवैराजसुतंवीररणकर्मविशारदम् जेष्यत्येवात्रनिर्भ्रांतिसज्जीभूतांभवत्स्वयम् १० इति
वाक्यंसमाकर्ण्यपुष्कलःपरवीरहा दमनंजेतुमुद्युक्तोजगादवचनंत्विदम् ११ स्वामिन्कोयंदमनकःकेदपरिमितंबलम् जेष्ये
हतत्वयत्नेनगच्छाम्येषमहामते १२ सेवकेमयियुद्धायस्थितेकैर्नीयतेहयः रघुनाथप्रतापोयंसर्वंकृत्यंकरिष्यति १३ स्वामि
न्शृणुप्रतिज्ञांमेतवमोदप्रदायिनीम् नजेष्येदमनंयर्हिरणकर्मविचक्षणम् १४ रामचंद्रपदांभोजमध्वास्वादवियोगिनाम् य-
द्धनुर्भवेत्तन्मेदमनंनजयेयदि १५ पुत्रायेमातृपादान्यत्तीर्थंमत्वातयासह विरुद्धंतेततोमह्यंनजयेदमनंयदि १६ अद्यमद्बा
णनिर्भिन्नमहोरस्कोनृपांगजः अलंकरोतुप्रधनेभूतलंशयनेनहि १७ शेषउवाच इतितद्वाक्यमाकर्ण्यपुष्कलस्यरघूद्वहः ज
हर्षचित्तेतेजस्वीनिर्दिदेशरणंप्रति १८ सआज्ञमायेयौसैन्यैर्बहुभिःपरिवारितः यत्रास्तेदमनोराजपुत्रःशूरैरलक्षितः १९ दम
नोपितमाज्ञायआगतंरणमंडले प्रत्युज्जगामवीराग्र्यःस्वसैन्यैःपरिवारितः २०. अन्योन्यंतौसंमिलितौरथस्थौरथशोभितौ स-
मरेशक्रदैत्यौकिंयुद्धायसमुपागतौ २१ उवाचपुष्कलस्तंवैराजपुत्रंमहाबलम् राजपुत्रंदमनकंमांजानीहिसमागतम् २२
सम्प्रतिशत्रुघ्नयुद्धायारत्तात्मजसुद्धृदम् पुष्कलेनस्वनाम्नाचलक्षितंतेविवृद्धसत्तम् २३ रघुनाथपदांभोजनित्यसेविमधुव्रतम् त्वां
जेष्येशस्त्रसंघेनसज्जीभवमहामते २४ इतिवाक्यंसमाकर्ण्यदमनःपरवीरहा प्रत्युवाचहसन्वाग्मीनिर्भयोदृष्टविक्रमः २५
सुबाहुपुत्रंदमनंपितृभक्तिहृताघकम् विद्धिमामश्वनेतारंशत्रुघ्नस्यमहीपतेः २६ जयोदैवविसृष्टोयंयस्यचालंकरिष्यति स
प्राप्नोतिनिरीक्षस्वबलंमरणमूर्धनि २७ इत्युक्त्वासशरंचापंविधायाकर्णपूरितम् मुमोचबाणान्निशितान्वैरिप्राणापहा-

रिणः २८ तेबाणास्तुरिवलीभूतास्वच्छदुर्गमनंमहत् सूर्यभानपतस्तत्रबाणच्छायानिवारिता २९ गजानांकटभित्तीषु
लग्नासायकसंततिः अलंकरोतिधातूनांरागाइवविचित्रिताः ३० पतितास्तत्रदृश्यंतेनरावाहागजारयाः शरव्रातेननृपतेःस्क
तेनपरिताडिताः ३१ तद्विक्रांतिसमालोक्यपुष्कलःपरवीरहा शरणाच्छादयद्व्योमरणमंडलमीक्ष्यच ३२ शरासनेसमा
धृत्तबाणंत्वअभिमंत्रितम् आत्तम्यसम्यक्विधिवत्मोचयामाससायकम् ३३ ततोग्निःप्रादुरभवत्तत्रसंग्राममूर्धनि ज्वालाभि
र्विलिहन्व्योमप्रलयाग्निरिवोत्थितः ३४ ततोस्यसैन्यंनिर्दग्धंत्रासभ्रांतंरणांगणे पलायनपरंजातंवन्हिज्वालानिपीडितम् ३५
छत्राणितुप्रदग्धानिचंद्राकाराणिधन्विताम् दृश्यंतेजातरूपाभकांतिधारीणितत्रह ३६ हयादग्धाःपलायंतेकेसरेषुत्नवैरि
णाम् रथाअपिगतादहंसकूबरसमन्विताः ३७ मणिमाणिक्यरत्नानिवहतःकरभास्ततः पलायनदहनभूज्ज्वालामालाभिपीडि-
ताः ३८ कुत्रचिद्हतिनोनष्टाःकुत्रचिद्धयसादिनः कुत्रचित्पत्तयोनष्टावन्हिदग्धकलेवराः ३९ शराःसर्वेनृपोद्भूतप्रमुक्ता
प्रलयंगताः आशुशक्षिज्वालाभिर्भस्मीभूताःसुमनतः ४० तदास्वसैन्येदग्धेचमदनोरोषपूरितः सर्वास्त्रवित्तच्छोस्त्रंवारु
णास्त्रमथाददे ४१ वारुणंवन्हिशांत्यर्थंमुक्तंतेनमहीभृता विप्लावयद्बलंतस्यरथवाजिसमाकुलम् रथाविप्लाविताःस्तोये
दृश्यंतेपरिपंथिनाम् गजाश्चापिपरिपुष्टाःस्वीयांशांतिसमेस्तत ४३ वन्हिःप्रशांतिमगमद्व्यस्त्रपरिमोचितः शांतिमापब
लस्वीयंवन्हिज्वालाभिपीडितम् ४४ कंपिताःशीततोयेनसीत्कुर्वंतेत्रवैरिणः क्रूरकान्वृष्टिभिःक्षिप्तावायुनात्रप्रपीडिताः
४५ तदास्वबलमालोक्यतोयपूरेणपीडितम् कंपितंक्षुभितंनष्टमस्यस्त्रंतुविनिर्हतम् ४६ तदातिकोपताम्राक्षःपु-
ष्कलोभरतात्मजः वायव्यास्त्रंसमाधत्तधनुष्येकेमहाशरे ४७ ततोवायुर्महानासीत्तद्वायुर्वोत्रजंमहत् नाशयामाससर्वे
गेनघनानीकमुपस्थितम् ४८ वायुनास्फालितानागाःपरस्परसमाहताः अश्वाश्चमहतान्योन्यंसारोहेणसमन्विताः
४९ नराःप्रभंजनोद्भूतामुक्तकेशानिरौजसः पतंतोत्रपरीक्षंतेवैतालाइवभूगताः ५० वायुनास्वबलंराजापरिभूतंविलोक्यसः

राजपुत्रःस्पर्वतास्त्रंधनुष्युच्चैःसमादधे ५१ तदातुपर्वताःपेतुर्मस्तकोपरिसैनिकान् वायुःसंछादितस्तैस्तुनभश्चक्रामकुत्रचित् ५२ तदास्त्रंवज्रसंज्ञंतुसमाधत्तशरासने वज्रेणकृंतास्तेसर्वेजाताश्चतिलशःक्षणात् ५३ वज्रनगांश्चनिःशेषान्कृत्वाबाणाभिमंत्रितम् राजपुत्रोरसिप्रोच्चैःपपातस्तनवत्भृशम् ५४ सआकुलितचेताभूत्हृदिविद्धःक्षताभृशम् विव्यथेबलवान्वीरःकश्मलपरमापसः ५५ तंवैकश्मलिनंदृष्ट्वासारथिर्नयकोविदः अपोवाहरणात्तस्मान्मूर्छितंतंनरेंद्रजम् ५६ ततोयोधाराजसूनोःभ्रनष्टाःप्रपलायिताः गत्वापुरींसमाचख्युःकश्मलस्थंनृपात्मजम् ५७ पुष्कलोजयमाप्येवरणमूर्धनिधर्मवित् नप्रहृतंपुनःशक्तोरघुनाथवचःस्मरन् ५८ ततोदुंदुभिनिर्घोषोजयशब्दोमहानभूत् साधुसाध्वितिवाचश्चप्रावर्ततमनोहराः ५९ हर्षंप्रापसशत्रुघ्नोजयिनंवीक्ष्यपुष्कलम् प्रशशंसेसुमत्यादिंशस्त्रिभिःपरिवारितः ६० इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेशत्रुघ्नविजयोनामचतुर्विंशतितमोऽध्यायः २४ शेषउवाच अथवीरस्यभद्रान्निजान्नृपोरुधिरौघेनपरिप्लुतांगकान् स्खमापनवेश्मशोचतान्परिपप्रच्छसस्तस्यचेष्टितम् १ गदतांकिलकर्मतस्यवैसकथंचाहरदश्ववर्यकम् कथयंतुपुनःकियद्बलवतवीराःकतियोद्धुमागताः २ स्वतरात्रुघ्नबलोन्मुरक्ककथंममवीरोदमनोरणंव्यधात् विजयंतुविधायदुर्जयंकिलवीरवतकोप्यशानयत् ३ इत्याकर्ण्यवचोराज्ञःभत्युत्तस्तस्वसेवकाः शतजेनपरिक्लिष्टगात्रवस्त्रादिधारिणः ४ राजन्नश्वसमालोक्यपुत्रनिन्हाद्यलंकृतम् ग्राहयामासगर्वेणतृणीकृत्यरघूत्तमम् ५ ततोहयानुगःप्राप्तःस्वल्पसैन्यसमावृतः तेनसाकमभूद्युद्धंतुमुलंरोमहर्षणम् ६ समूर्छितःकृतस्तेनतवपुत्रेणसायकैः तिष्ठनेवातदायातःशत्रुघ्नःस्वबलैर्वृतः ७ ततोयुद्धंमहद्भूच्छस्त्रास्त्रपरिबृंहितम् बहुशोजयमापद्तवपुत्रोमहाबलः ८ इदानींतेनमुक्तास्त्रक्षतंहन्नृपतेःसुतः अलंकरोतिप्रधनंसर्ववीरैःससेवितम् ९ इतिवाक्यंसमाकर्ण्यरोषशोकसमन्वितः स्थगितांगइवासीत्ससमुद्रइवपर्वणि १० उवाचसेनाधिपतिंरोषप्रस्फुरिताधरः दंतैर्दंतान्लिहन्नोष्ठंजिह्वयाशोककर्षितः ११ सेनापतेकुरुष्वाराममसेनातुसज्जिताम् योत्स्येरामस्यसुभटैर्ममपुत्रोपघातकैः १२ अद्यमत्पुत्रदुःखस्यदातारंनिशितैःशरैः भेदयामिय-

दिष्टेनेरक्षितापिमहेश्वरः १३ सेनापतिरिदंवाक्यंप्रोक्तंसुभुजभूपतेः निशम्यचतथाकुर्वन्साज्ञीभूतोऽभवत्त्वयम् १४ राज्ञेनिवे
दयामाससंसज्जांचतुरंगिणीम् सेनाकालबलप्रख्यांहतदुर्जनकोटिकाम् १५ श्रुत्वासेनापतेर्वाक्यंसुबाहुःपरवीरहा निर्जगामय
तस्तत्रशत्रुघ्नःस्वसुतार्दनः १६ कुंजरैश्चमदायुक्तैर्हयैश्चपवनोजवैः नरैश्चसर्वशस्त्रास्त्रपूरितैरिपुंजैर्नृभिः १७ भूश्चकंपतदा-
तत्रसैन्यभारेणभूरिणा संमर्दःसुमहानासीत्तत्रसैन्येविसर्पति १८ राजानंनिर्गतंदृष्ट्वारथेनकनकांगिना शत्रुघ्नबलमुद्युक्तःस
ववैरिप्रहारकम् १९ सुकेतुस्तस्यवैभ्रातागदायुद्धविशारदः रथेनाशुजगामायसर्वशस्त्रास्त्रपूरितः २० चित्रांगस्तुसुतोराज्ञः
सर्वयुद्धविचक्षणः जगामस्वरथेनाशुशत्रुघ्नबलमुन्मदम् २१ ततोनुजोविचित्राख्योविचित्ररणकोविदः ययौरथेनहेमेनभ्रातृ
दुःखेनपीडितः २२ अन्येऽप्यरामहेष्वासाःसर्वशस्त्रास्त्रकोविदाः ययोर्नृपसमादिष्टाःप्रधनंवीरपूरितम् २३ राजासुबाहुःसंरोषा
दागतःप्रधनांगणे विलोकयामाससुतंमूर्च्छितंशरपीडितम् २४ रथोपस्थंस्थितंभूदंस्मसुतंदमनाभिधम् वीक्ष्यदुःखंमुहुःप्राप
विजयामासपल्लवैः २५ जलेनसिक्तःसुस्पृष्टोराजाकोमलपाणिना संज्ञामापशरैर्वीरोदमनःपरमास्त्रवित् २६ उत्थितःकुधनु
र्मौक्तिकपुष्कलइतिस्मृतः क्वगतोरणकंस्यक्त्वामहाबाणव्रणपीडितः २७ इतिवाक्यंसमाकर्ण्यसुबाहुःपुत्रभाषितम् परमंहर्ष
मापेदेपरिरभ्यसुतंस्वकम् २८ दमनोवीक्ष्यजनकंनृपंनम्रशिरोधरः पपातपादयोर्भक्त्याक्षतदेहोऽस्त्रराजिभिः २९ स्वसुतंर
थसंस्थंतुविधायनृपतिःपुनः जगादसेनाधिपतिंरणकर्मविशारदः ३० व्यूहंरचयसंग्रामेक्रौंचाख्यंरिपुदुर्जयम् यमाविश्यज
येत्सैन्यंशत्रुघ्नस्यमहीपतेः ३१ तद्वाक्यमाकर्ण्यसुबाहुभूपतेःक्रौंचाख्यसद्व्यूहविशेषभिद्रुमम् यन्नाविशंतेसहसारिपोर्गणाम
हाबलाःशस्त्रसमूहधारिणः ३२ मुखेसुकेतुस्तस्यासीद्गलेचित्रांगसंज्ञकः पक्षयोराजपुत्रौद्वौपुच्छेराजाप्रतिष्ठितः ३३ मध्ये
सैन्यंमहत्तस्यचतुरंगसुशोभितम् कृत्वान्यवेदयद्राज्ञेक्रौंचव्यूहंविचित्रितम् ३४ राजादृष्ट्वासुसन्नद्धंक्रौंचव्यूहंसुनिर्मितम्
रणायस्वमतिंचक्रेशत्रुघ्नकटकेस्थिते ३५ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेक्रौंचव्यूहनिर्माणंना-

थपंचविंशोऽध्यायः २५ शेषउवाच शत्रुघ्नस्तद्बलंदृष्ट्वाभीषणाकृतिमेघवत् हस्त्यश्वरथपादातैर्बहुभिःपरिवारितम् १ सुमतिंप्र-
त्युवाचेदंवचोगंभीरशब्दयुक् नानावाक्यविचारज्ञैःपंडितैःपरिसेवितः २ शत्रुघ्नउवाच सुमतेकस्यनगरंप्राप्तोमेहयसत्तमः बलमेत-
न्भिर्दृश्येहपूर्णोदधितरंगवत् ३ कस्यैतद्बलमुत्कर्षंचतुरंगसमन्वितम् पुरतोभातियुद्धायसमुपस्थितमादरात् ४ एतत्सर्वंसमाच-
क्ष्वयथावद्वृत्तंतेमम यच्छ्रुत्वायुद्धसंस्थायैनिर्दिशामिस्वकान्भटान् ५ इतिवाक्यंसमाकर्ण्यसुमतिःशुभबुद्धिमान् उवाचवचनंशी-
तःशत्रुघ्नंवैरितापनम् ६ सुमतिरुवाच चक्रांकानगरीराजन्वर्ततेसविधाशुभा यस्यांसंतिनराःपापरहिताविष्णुभक्तितः ७ त-
स्याःपुर्याःपतिरयंसुबाहुर्धर्मवित्तमः तवायंपुरतोभातिपुत्रपौत्रपरिवृतः ८ स्वदारनिरतोनित्यंपरदारपराङ्मुखः विष्णोःकथास्यकर्ण-
स्थानापरार्थप्रकाशिनी ९ परस्वंनसमादत्तेषष्ठांशादधिकंनृपः ब्राह्मणाविष्णुभक्त्यैवंपूज्यंतेतेनधर्मिणा १० नित्यसेवारतोविष्णुपाद-
पद्ममधुव्रतः एषस्वधर्मनिरतःपरधर्मपराङ्मुखः ११ एतस्यबलतुल्यंहिनवीराणांबलंक्वचित् पुत्रस्यपतनंश्रुत्वारोषशोकसमाकुलः
१२ चतुरंगसमेतोयंयुद्धायसमुपस्थितः तवापिवीराबहवोलक्ष्मीनिधिमुखाअमून् १३ जेष्यंतिशस्त्रसंघेननिर्दिशाशुपरेहितान्
शत्रुघ्नस्तद्वचःश्रुत्वाप्रोवाचस्वभटान्वरान् १४ रणप्राप्तिभवोत्कर्षपरिपूरितमानसान् क्रौंचव्यूहोथरचितःसुबाहुपरिसैनिकैः १५
मुखपक्षस्थितायोधास्तान्कोभेत्स्यतिशस्त्रवित् पश्यन्भेदनिजांशक्तिंयोवीरविजयोद्यतः १६ सगृह्णातुमदीयाद्धिपाणिपद्माच्च
वीटकम् तदालक्ष्मीनिधिर्वीरोजग्राहक्रौंचभेदने १७ सर्वशस्त्रास्त्रविद्वीरैर्बहुभिःपरिवारितः उवाचवचनंराजायास्येहंक्रौंचभे-
दने १८ भार्गवःपूर्वमेवासीत्क्रौंचभेत्तातथाप्यहम् तथान्यवीरमावोचन्कोस्यसार्धंगमिष्यति १९ पुष्कलःपृष्ठतस्तस्ययातुंच-
क्रेमतिंततः रिपुतापोनीलरत्नउग्राश्वोवीरमर्दनः २० सर्वशत्रुघ्नसंदेशाद्ययुस्तत्क्रौंचभेदने शत्रुघ्नोपिरथस्थश्चसर्वायुधधरःपरः
२१ पृष्ठतोस्यपरीयायबहुभिःसैनिकैर्वृतः तदाभूच्चलितौदृष्ट्वावन्योन्यबलवारिधी २२ प्रलयंकर्तुमुद्युक्तौजगतःसुतरंगिणौ
तदाभेर्यःसमाजघ्नुरुभयोःसेनयोर्हदाः २३ रणभेर्यःशंखनादाःश्रूयंतेतत्रतत्रह हेषितैर्वाजिनांतत्रगर्जितैर्द्विरदाम्भृशम् २४ हा-

ह्रांकुर्वंतिपादातागर्जंतिरथनेमयः तत्रप्रकुपिताःशूराःस्वबाहुबलदर्पिताः २५ छिंधिभिंधीतिभाषंतोदृश्यंतेबहुवोरणे एवंभूतेर
णोद्युक्तेसैन्येशत्रुप्रभवैरिणः २६ मुखसंस्थंसुकेतुंसलक्ष्मीनिधिरुवाचह लक्ष्मीनिधिरुवाच जनकस्यसुतंविद्धिलक्ष्मीनिधिरितिस्मृ
तः २७ सर्वशस्त्रास्त्रकुशलसर्वशास्त्रविशारदः सुचारवरामचंद्रस्यसर्वदानवदशितुः २८ नोचेन्मद्बाणनिर्भिन्नोयास्यसेयमसाद
नम् इतिब्रुवंतंवीराग्र्यंसुकेतुःसहसात्वरन् २९ सज्यचापंविधायाशुबाणान्मुंचन्नुस्थिरोभवत् तेबाणाःशितवर्षाणःस्वर्णपुंखा
समंततः ३० व्यापिताददृशूनत्ररणमध्येतिदुर्मदः तद्बाणजालंतरसानिहत्यलक्ष्मीनिधिश्चापकेमाततज्यम् विधायतस्योरसि
बाणषट्कंसमोचतीक्ष्णंशिलपर्वशोभितम् ३१ तद्बाणाःसुभुजभ्रातुर्हृदयंसुविदारयन् गतास्तेभुविदृश्यंतेरुधिराक्तामलीमसाः
३२ तद्बाणभिन्नहृदयःसुकेतुःकोपपूरितः जघानशरसंतत्यातीक्ष्णयानतपर्वया ३३ उभौबाणविभिन्नांगौउभौदंतजविद्रु-
तौ सैनिकैःपरिदृश्यंतेकिंशुकाविवपुष्पितौ ३४ मुंचंतौबाणकोटीश्चसंधानौतरसाशरान् नकेनापिविलक्ष्येतेलघुहस्तौमहा
बलौ ३५ कुंडलीकृतसच्चापौवर्षतौबाणधारया नवांबुदाविवनभःसांद्रनिर्देशकारिणौ ३६ तयोर्बाणागजान्वाहान्नरान्शूरा-
न्विमस्तकान् कुर्वतःकेवलंदृष्टान्नचसंधानमोचनम् ३७ पृथिवीसुभटैःपूर्णासकिरीटैःसकुंडलैः धनुर्बाणकरैरोषसंदष्टाधरलच्छ
दैः ३८ तयोःप्रयुद्ध्यतोर्दर्पात्सर्वशस्त्रास्त्रकोविदोः युद्धंसमभवद्घोरंदेवविस्मापनंमहत् ३९ संमर्दभिवदत्यंतंवीरकोटिविदार
णः नकुत्रचित्कश्चिद्दृष्टःशरजालांतरंबरम् ४० तस्मिंस्तुसमयेवीरोलक्ष्मीनिध्यरिमर्दनः बाणान्चापेसमाधत्तवसुसंख्यामितान्
शितान् ४१ चतुर्भिस्तुरगान्वीरोसुकेतोरनयत्क्षयम् एकेनध्वजमत्युग्रंचिच्छेदतरसाहसन् ४२ एकेनसारथेःकायाच्छिरोभू
मावपातयत् एकेनचापंसगुणमच्छिनद्रोषपूरितः ४३ एकेनहृदिविव्याधसुकेतोर्वेगवान्नृपः तत्कर्माद्भुतमुद्वीक्ष्यवीराविस्मय
मायुः ४४ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः महतींसगदांधृत्वायोद्धुकामोभ्युपेयिवान् ४५ तमायांतमथोवीक्ष्यगदा
युद्धविशारदम् महत्यागदयायुक्तोरथादेवततारसः ४६ गदामादायमहतींसर्वायसविनिर्मिताम् जातरूपविचित्रांगांसर्वशोभापुर

स्कृताम् ४७ लक्ष्मीनिधिर्भृशंक्रुद्धोसुकेतोर्वक्षसिक्रुधा ताडयामासत्हृदयेगदांवज्राग्रसन्निभाम् ४८ गदयाताडितोवीरोनाकंपत
महामुने मदोन्मत्तोयथादंतीबालेनस्रग्भिराहतः ४९ उवाचतंसवीराग्र्योनृपंलक्ष्मीनिधिंतदा सहस्वैकंप्रहारंमेयदिशूरःपरंतप ५०
इत्युक्त्वाताडयामासललाटेगदयाभृशम् गदयाताडितोभालेसृग्वमन्कुपितोभृशम् ५१ मूर्ध्नितंताडयामासगदयाकालरूपया सुके
तुरपितंस्कंधेताडयामासधर्मवित् ५२ एवंभृशंप्रकुपितौगदायुद्धविशारदौ गदायुद्धंप्रकुर्वाणौपरस्परजयैषिणौ ५३ अन्योन्याघा
तविभ्रांतौपरस्परवधोद्यतौ नकोपितत्रहीयेतनकोजीयततसंयुगे ५४ मूर्ध्निभालेतथास्कंधेहृदिगात्रेषुसर्वतः रुधिरौघपरिक्लिन्नौमहाब
लपराक्रमौ ५५ तदालक्ष्मीनिधिःक्रुद्धोगदामुद्यम्यवेगवान् गजामप्रबलंहंतुंहृदिराजानुजंबली ५६ तमायांतमथालोक्यस्वगदांमह
तींदधत् ययौतंतरसाहंतुंराजभ्राताबलाद्बलम् ५७ गदांतेनविनिक्षिप्तांस्वकरेधृतवानयम् तथैवगदयातस्यहृदिजघ्नेमहाबलः ५८
स्वगदांतेनवैनीतांहृत्वालक्ष्मीनिधिर्नृपः बाहुयुद्धेनतंयोद्धुमियेषबलवत्तमम् ५९ तदाराजानुजःक्रुद्धोबाहुभ्यामुपगृह्यतम् युयुधेस-
र्वयुद्धस्यज्ञातावीरेषुसत्तमः ६० तदालक्ष्मीनिधिस्तस्यहृदिजघ्नेप्रमुष्टिना तदासोपिशिरस्येकंमुष्टिमुद्यम्यचाहनत् ६१ मुष्टिभिर्वज्र
संकाशैस्तालस्फोटैश्चदारुणैः अन्योन्यंजघ्नतुःक्रुद्धौसंदष्टाधरपल्लवौ ६२ मुष्टामुष्टीतदादंतीकचाकचीनखानखी उभयोरभवद्युद्धं
तुमुलंरोमहर्षणम् ६३ तदाप्रकुपितोभ्राताप्रनृपतेश्चरणेनृपम् गृहीत्वाभ्रामयामासताडयामासभूतले ६४ लक्ष्मीनिधिःकरंगृह्यतंनृपा-
नुजमुच्चकैः भ्रामयित्वाशतगुणंधरोपस्थेजघानतम् ६५ सतदापतितोभूमौसंज्ञामाप्यक्षणादभूः तथैवभ्रामयामासव्योम्निवेगे
नविक्रमी ६६ एवंप्रयुद्ध्यमानौतौबाहुयुद्धगतौपुनः पदापादंकरैःपाणिंहृदिहृद्दनेमुरवम् ६७ एवंपरस्परंश्लिष्टौपरस्परव-
धैषिणौ उभावपिपराक्रांतावुभावपिचमूर्च्छितः ६८ तदाविस्मयमापेदेतदावीराःसहस्रशः धन्योलक्ष्मीनिधिर्भूपोधन्योराजानुजोब-
ली ६९ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेषड्विंशतितमोऽध्यायः २६ शेषउवाच चित्रांगःक्रौंचकं
टस्थोरथस्थोवीरशोभितः गाहयामासतत्सैन्यंवराहइववारिधिम् १ धनुर्विस्फोटयामासमेघनादेननादिनम् मुंचन्शरौघान्नि

शितान्वैरिकोदिविदाहकान् २ तद्बाणभिन्नसर्वांगाः शेरते स्म भटा भृशम् सकिरीटा विचित्रांगा गांडीवोष्ठपुटा भृशम् ३ एवं प्रवृ-
त्ते संग्रामे ययौ योद्धुं स पुष्कलः मणिचित्रितमादाय चापं वैरिप्रतापनम् ४ तयोः संगतयो रूपं ददृशाते मनोहरम् पुरा तारक-
संग्रामे शिखिपत्रारिकैरो यथा ५ विस्फारयन्धनुः शीघ्रं सव्यसाची तु पुष्कलः ताडयामास चित्रांगं शरैः सन्नतपर्वभिः ६ चित्रांगो-
पि रुषाक्रांतो शरासनइषून्सतान् अमुंचद्बहुशो बाणान्रणमंडलमूर्धनि ७ नादानं न च संधानं न मोचनमथापि वा नदृश्यते परं दृष्टौ कुं-
डलीकृतचापिनौ ८ तदासौ पुष्कलः क्रुद्धः शराणां शतकेन तम् विव्याध वक्षःस्थलके महायोद्धारमुद्भटम् ९ चित्रांगस्तान्
शरान्सर्वान् चिच्छेद तिलशः क्षणात् ताडयामास चांगेषु पुष्कलं शितसायकैः १० पुष्कलस्तद्रथं दिव्यं भ्रामकास्त्रेण शोभिना न-
भसि भ्रामयामास तदद्भुतमिवाभवत् ११ भ्रांतो मुहूर्तमात्रं तु तद्रथो हयसंयुतः स्थितिं लेभे न स्म भटः सर्वत्र रणमंडले १२ त-
देनं विक्रमं दृष्ट्वा चित्रांगः कुपितो भृशम् उवाच पुष्कलं धीमान् सर्वास्त्रेषु विशारदः १३ चित्रांग उवाच त्वया साधु कृतं कर्म स्म
भटैर्यद्धि मान्यते मद्रथो वाजिसंयुक्तः ससूतो नभसोपतत् १४ पराक्रमं समीक्षस्व ममापि स्म भटेडितम् आकाशचारि संभवा-
न्भव त्वमरपूजितः १५ इत्युक्त्वाथ मुमोचास्त्रं तदा परमदारुणम् धनुषा परमास्त्रज्ञो सर्वधर्मविदुत्तमः १६ तेन बाणेन सर-
थः खे बभ्रामपतंगवत् सरथः सहयः संख्ये ससारथिः समाभवत् १७ भ्रांतः सरथवर्यस्तु नभसि सहयान्वितः यावत्स्थितिं
स लभते तावन्मुक्तः पुनः शरः १८ पुनश्च परिबभ्राम रथः सूतसमन्वितः तत्कर्म वीक्ष्य पुत्रस्य राजा विस्मयमागतः १९ कथंचित्
स्थितिमापेवं पुष्कलं परवीरहा रथं जघान बाणेश्च ससूतं सहसारथिम् २० स भग्नस्यंदनो वीरः पुनरन्यं समाश्रितः सोपि भग्नः श-
रै राशु पुष्कलेन रणांगणे २१ पुनरन्यं समास्थाय यावदायाति संमुखम् तावद्बभंज निशितैः सायकैस्तद्रथं पुनः २२ एवं द-
शरथा भग्नान्नृपतेरात्मजस्य हि पुष्कलेन तु वीरेण महासंयुगशालिना २३ तदा चित्रांगकः संख्ये रथे स्थित्वा विचित्रिते आ-
जगाम ह वेगेन पुष्कलं प्रतियोधितम् २४ पुष्कलं पंचभिर्बाणैस्ताडयामास संयुगे तैर्बाणैर्निहितोत्यंतं विव्यथे भरतात्मजः २५

सक्रुद्धश्चापमुद्यम्यबाणान्दशशितान्महान् मुमोचहृदयेतस्यस्वर्णपुंखस्रुशोभितान् २६ तेबाणाःपपूरेतस्यरुधिरंबहुदारुणाः
पीत्वापेतुर्भुविक्षिप्रंक्रूदसाक्षस्यपूर्वजाः २७ तदाविद्याँगकःक्रुद्धोभल्लान्पंचसमाददे मुमोचभालेपुत्रस्यभरतस्यमहौजसः २८
तैर्भल्लैराहतःक्रुद्धोशरासनवरेशरान् दधत्प्रतिज्ञामकरोद्धिद्याँगनिधनप्रति २९ शृणुराजात्मजक्षिप्रंमत्प्रतिज्ञांवधाश्रिताम् तः
ज्ज्ञात्वासावधानेनयोद्धव्यंस्रुभटेनहि ३० बाणेनानेनचेत्वांवैनकुर्यांप्राणवर्जितम् सतींसंदुष्यवनिताशीलाचारस्रुशोभिताम् ३१
योलोकःप्राप्यतेलोकैर्यमस्यपुरवर्त्मनि सलोकोममवैभूयात्सत्यममप्रतिश्रुतम् ३२ इतिश्रेष्ठवचःश्रुत्वाजहासपरवीरहा उवा
चमतिमान्वीरःपुष्कलंवचनंशुभम् ३३ मृत्युर्वैप्राणिनांभाव्यःसर्वत्रैवचसर्वदा तस्मान्मेनिधनेदुःखंनास्तिशूरशिरोमणे ३४
प्रतिज्ञायाकृतावीरत्वयावीरेणशोभिना सासत्यैवपुनर्मेद्यश्रूयतांव्याहृतंमहत् ३५ तवबाणंवधेमुक्तंममनच्छेद्मिचेदिह तदा
मेश्रृणुयद्वाक्यंसर्ववीराभिमानितम् ३६ तीर्थंजिगिमिषोर्योवैकुर्यान्मार्गविखंडनम् एकादशीव्रतादन्यज्ज्ञानातिव्रतमुच्चकैः
३७ तस्यपापंममैवास्तुचेन्नछेद्म्येद्यसायकम् इतिवाक्यमुदीर्यैवतूष्णींभूतोधनुर्धरो ३८ तदानेनविषगात्त्वादुद्धृत्वासा
यकंवरम् कथयामासविशदंवाक्यंवाक्यविशोरदः ३९ पुष्कलउवाच यदिरामांघ्रियुगुलेनिष्कापट्येनचेतसा उपासि
तेमयातर्हिममवाक्यंकृतंभवेत् ४० यदिस्वमहिलांमुक्त्वानान्यांजानामिचेतसा तेनसत्येनमद्वाक्यंसत्यंभूयाद्रणागणे ४१
इतिवाक्यमुदीर्यासौबाणोधनुषिसंधितः कालानलोपमोवीरवधसंयुक्तपर्वकः ४२ तंबाणमुक्तमालोक्यततोराजासुतो
बली बाणंशरासनेधत्तंतीक्ष्णंकालानलोपमम् ४३ तेनबाणेनसंछिन्नोबाणःस्वधमुद्यतः हाहाकारोमहानासीच्छिन्नेत
स्मिन्शरेतदा ४४ पराद्धपतितंभूमौपूर्वार्धफलसंयुतम् शिरोधरांचकर्ताशुपद्मनालमिवक्षणात् ४५ तदाभूमौपतितं
तंददृशुःपरसैनिकाः हाहाभूतंबलंसर्वंपलायनपरंगतम् ४६ पृथ्व्यांतन्मस्तकंश्रेष्ठंसकिरीटंसकुंडलम् पतितंशुशुभेती
व्रचद्रबिंबंभुवागतम् ४७ तंवीक्ष्यपतितंवीरःपुष्कलोभरतात्मजः व्यगाहतव्यूहमिमंसर्ववीरैकशोभितम् ४८ इतिश्रीप

द्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेपुष्कलप्रतिज्ञापूरणोनामसप्तविंशतितमोऽध्यायः २७ शेषउवाच अ
थपुत्रंसमालोक्यपतितंकुसुमद्युतम् विललापभृशंराजाकृतदुःखेनदुःखितः १ मूर्ध्निसंताडयामासपाणिभ्यामतिदुः
खितः कंपायमानःसर्वांगैरश्रून्मुंचन्सुपुष्कलान् २ गृहीत्वापतितंवक्त्रंचंद्रबिंबमनोहरम् पुष्कलेषुक्षतास्रग्भिःक्लिन्नं
कुंडलशोभितम् ३ कुटिलभ्रूयुगश्रेष्ठंसंदष्टाधरपल्लवम् संचुंबन्मुखपद्मेनविलपन्निदमब्रवीत् ४ हापुत्रवीरकथमुत्सु
कंचेतसामांकिंनेक्षसेविशदनेत्रयुगेनशूर किमद्यविनोदकथयाहसितंत्वमेवरोषोदधिप्लुवितमानसमेवलक्ष्ये ५ वदपुत्रकथं
मांत्वंपृच्छसेनहसंस्तुनः अमृतैर्मधुरास्वादैर्विनोदयसिपुत्रक ६ शत्रुघ्नाश्वंगृहाणत्वंसितचामरशोभितम् स्वर्णपत्रेणशोभाढ्यंत्यज
निद्रांमहामते ७ एषप्रतापविशदःप्रतापाढ्यःपरंतपः धनुर्बिभ्रत्पुरोभातिपुष्कलःपरवीरहा ८ एनंवारयसत्तीक्ष्णैर्बाणैःकोदंडनि
र्गतैः कथंत्वंरणमध्येवैशेषेवीरविमोहितः ९ हस्तिनःपत्तयश्चैवरथारूढाभयार्दिताः शरण्यंत्वांसमायांतितान्रक्षस्वमहामते
१० पुत्रत्वयाविनासोढुंकथंशक्तोरणांगणे शत्रुघ्नसायकान्तीक्ष्णांस्तीक्ष्णकोदंडनिर्गतान् ११ अतोमांतुत्वयाहीनंकोवापालयि
तुंक्षमः तस्मात्त्वंत्यजसन्निद्रांचेज्जयायक्षमस्तदा १२ इत्थंविलप्यस्वभृशंताडयन्स्वकरेणहृत् बहुशोविललापायंपुत्रदुःखे
नदुःखितः १३ तथाविचित्रोदमनोरथयोःसंस्थितोतदा पितरंचरणेनत्वागदतःस्मयथोचितम् १४ राजन्नस्मासुजीवत्सु
किंदुःखवहृदितहृद वीराणांप्रधनेमृत्युर्वांछितोजायतेमहान् १५ धन्योयंतवचित्रांगोयोवीरभुविशोभते सकिरीटस्तुसंदष्ट
दंतच्छदयुगप्रभुः १६ कथयाशुकिमद्येवकुर्वातेवाक्यमीदृशम् शत्रुघ्नवाहिनींसर्वांहन्योवयमनाथिनीम् १७ अद्यतंपु
ष्कलंभ्रातुर्वधकारणमादरात् पातयावोरणेतस्यशिरोमुकुटसेवितम् १८ त्यजशोकंस्वदुःखार्तःकथंभासिमहामते आज्ञाप-
यास्मानाज्ञार्हान्कुरुयुद्धेमतिंभवान् १९ इतिवाक्यंसमाकर्ण्यपुत्रयोवीरमानितम् शोकंसत्त्वामहाराजोयुद्धायमतिमादधा-
त् २० तावपिप्रतियोद्धारंवांछंतौरणदुर्मदौ जग्मतुःकटकंभूयःसमंताद्भटपूरिते २१ रिपुतापनदमनोनीलरत्नेनचेतरः यु-

युधेबाणसाहस्रैर्घनौघाविवसन्नतौ २२ राजाकनकसंनद्धेरथेमणिविचित्रिते रत्नकूबरशोभाढ्येतिष्ठन्चापधरोरथी २३ ययौ
यावद्धनुःशत्रुघ्नोवीरकोटिभिरावृतम् तृणीकुर्वन्महावीरान्धनुर्धरविशारदान् २४ तयोर्युद्धमागतंदृष्ट्वासुबाहुरोषपूरितम् पुष्कलो
नकुर्वंतंसर्वसैन्यवधादिकम् २५ शत्रुघ्नस्यचसंचारीहनुमान्समुखोभवत् नरवायुद्धेमहानादंकुर्वन्मेघइवाद्भुते २६ सुबाहुस्तं
हनूमंतआगच्छंतंमहावरम् उवाचप्रसहन्वाक्यंरोषपूरितलोचनः २७ क्वासौमत्पुत्रहंताअत्रगतोयोरणमंडले पातयाम्यद्यतस्याशु
शिरोज्वलितकुंडले २८ क्वशत्रुघ्नोवाहपालःक्वचरामःकुतोभटाः प्राणहंतारमायांतपश्यतुप्रधनेऽद्भुतम् २९ इत्युक्तवचनंआक
र्ण्यहनुमान्निजगादतम् शत्रुघ्नोलवणच्छेत्तावर्ततेसैन्यपालकः ३० सकथंप्रधनेयुद्धंत्वत्सेवकैःसुस्थितेनृपः मांविजित्यरणेतंचत्वं
तासिनरर्षभ ३१ इत्युक्तवंतंतरसाविव्याधदशसायकैः हृदिवानरमत्युग्रंपर्वताभमिवस्थितम् ३२ तेबाणाआगतास्तेनगृहीत्वाक
रसंपुटे चूर्णयामासतिलशःशितान्वैरिविदारणान् ३३ चूर्णयित्वाशरांस्तांस्तुनिनदन्घननिर्जिनैः पुच्छेनावेष्ट्यतस्योच्चैरथंनिन्येम
हाबलः ३४ तदानृपवरोसौआकाशेस्थितएवसः लांगूलंताडयामासशिताग्रैःसायकैर्मुहुः ३५ सताडितस्तुपुच्छाग्रेशरैःसन्न
तपर्वभिः मुमोचतद्रथंदिव्यंकनकैर्विचित्रितम् ३६ समुक्तस्तेनतरसाशरैस्तीक्ष्णैर्जघानतम् हनुमंतंकपिवरंरोषसंपूरितेक्षण-
म् ३७ हनूमान्बाणविच्छिन्नसर्वत्ररुधिराप्लुतः महारोषसमाधत्तनृपोपरिकपीश्वरः ३८ गृहीत्वादंष्ट्रयोस्तस्यरथंहयसमन्वि
तम् चूर्णयामासवेगेनतदद्भुतमिवाभवत् ३९ स्वरथंभज्यमानंतुदृष्ट्वाराजात्वरन्बली अन्यंरथंसमास्थाययुयुधेतमहारथः ४०
पुच्छेमुखेवैयोरसिचभुजेचरणयोर्नृपः जघानशरसंधानकोविदोक्रूरमास्त्रवित् ४१ तदापद्भिःकपिवरस्ताडयामासवक्षसि पदात्यं
तंक्षुराग्रेणराज्ञःसुभटशोभिनः ४२ सपदापहतोभूमौपपातकिलमूर्च्छितः मुखाद्वमन्नसृक्कोष्णंश्वासपूरप्रवेपितः ४३ तत्र
प्रकुपितोयंतंहनूमान्प्रधनांगणे अश्वान्वीरान्गजांश्चापिचूर्णयामासवेगतः ४५ तदासुकेतुःसंज्ञांतुतदालक्ष्मीनिधिर्नृपः उभा
वपिचसन्नद्धौयुद्धायसमुपस्थितौ ४५ राजानंमूर्च्छितंदृष्ट्वाप्रपलाय्यगतानराः इतस्ततोबाणसंघैःक्षतांगाःपुष्कलवैरिणा ४६

तद्भज्यमानंस्वबलंवीक्ष्यराजात्मजोबली दमनस्तंभयामाससेतुर्वार्धिमिवोच्चलम् ४७ तदातुमूर्च्छितोराजास्वप्नमेकंददर्शह रणमध्ये-
कपिवरप्रपदाघाततांडितः ४८ रामचंद्रस्त्वयोध्यायांसरयूतीरमंडपे ब्राह्मणैर्याज्ञिकश्रेष्ठैर्बहुभिःपरिवारितः ४९ तत्रब्रह्मादयोदे-
वास्तत्रब्रह्मांडकोटयः कृतप्रांजलयस्तत्रस्तुवंतिस्तुतिभिर्मुहुः ५० रामंश्यामंसरोजनयनंमृगशृंगपरिग्रहम् गायंतिनारदाद्याश्च
वीणोल्लसितपाणयः ५१ नृत्यंत्यप्सरसस्तत्रघृताचीमेनकादयः वेदामूर्तिधराभूत्वाउपतिष्ठंतिराघवम् ५२ यत्रकश्चिद्दुस्तु
जातंसर्वशोभासमन्वितम् तस्यदातारमखिलभक्तानांभोगसंयुतम् ५३ इत्येवमादिसंपश्यन्जाग्रत्संज्ञामवापसः ब्रह्मशापहृत
ज्ञानःकिंदृष्टंमेह्यवावदत् ५४ उत्थायप्रययौपश्चाच्छत्रुघ्नचरणंप्रति भृत्यकोटिपरीवारोरथकोटिपरिच्छन्नः ५५ रुक्मकेतुतुसमाहू
त्यविचित्रंदमनंतथा युद्धंकर्तुंसमुद्युक्तान्वारयामासधर्मवित् ५६ उवाचतान्महाराजोधर्मात्माधर्मसंयुतः रेपुत्राःशृणुतामे
कंवाक्यंधर्मसुसेवितम् ५७ मायुद्धंकुरुतक्षिप्रंमनयस्तुमहाननभूत् यद्रामचंद्रवाहस्तुअगृण्हाद्दमनोमम ५८ एषरामः
परब्रह्मकार्यकारणतःपरः चराचरजगत्स्वामीनमानुषवपुर्धरः ५९ नतद्धिब्रह्मविज्ञानमधुनाज्ञातवानहम् पुरासितांगशा-
पेनहृतज्ञानधनोधनः ६० अहंपुरातीर्थयात्रागतस्तत्वविवित्सया तत्रानेकामयापृष्टामुनयोधर्मवित्तमाः ६१ असितांग
मुनिवरंगतवान्ज्ञातुमिच्छया तदासौवाचमांविप्रःकृपांकृत्वाममोपरि ६२ योसावयोध्याधिपतिःसपरब्रह्मशब्दितः तस्य-
याजानकीदेवीसाक्षात्साचिन्मयीस्मृता ६३ एनंतुयोगिनःसाक्षादुपासंतेमयादिभिः दुस्तरापारसंसारवारिधिंसंतितीर्षवः ६४
स्मृतमात्रोमहापापहारीसंगरुडध्वजः यएनंसेवितेविद्वान्ससंसारंतरिष्यति ६५ तदाहसमहंविप्रंकोयंरामस्तुमानुषः
केयंसाजानकीदेवीहर्षशोकसमाकुला ६६ अजन्मनःकथंजन्मअकर्तुःकृत्यमत्रकिम् जन्मदुःखजरातीतंकथयस्वमुने
मम ६७ इत्युक्तवंतमांक्रुद्धःशशापससुनीश्वरः अज्ञात्वातत्स्वरूपंत्वंप्रतिब्रूषेममाधम ६८ एनंनिंदसिरामंत्वमानुषो
यमिदंहसन् तस्मात्त्वंतत्वसंमूढोभविष्यस्युदरंभरी ६९ तदाहंतस्यचरणौगृहीत्वादययायुतः चकारविनयंमांतुप्रोवाच

करुणानिधिः ७० तंरामस्यचाविनयंकरिष्यसियदानघ तदाहनुमदंघ्रिस्त्वांताडयिष्यतिवेगतः ७१ तदात्वंज्ञायसेराजन्नान्य
थास्वमनीषया पुराहमुक्तस्तेनेदंतद्दृष्टमधुनामया ७२ यदामांहनुमान्क्रुद्धस्ताडयामासवक्षसि तदादर्शिरमानाथपूर्णब्रह्मसु-
शोभितम् ७३ तस्मादश्वंतुशोभाढ्यमानयंतुमहाबलाः धनानिचैववासांसिराज्यंचेदंमहद्धनम् ७४ रामंदृष्ट्वाकृतार्थःस्या
महंयज्ञेतिपुण्यदे आनयंतुहयंमह्यंरोचतेनुतदर्पणम् ७५ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसं
वादेसुबाहुपराजयोनामअष्टाविंशतितमोऽध्यायः २८ शेषउवाच तेतुतातवचःश्रुत्वाहर्षिताःसंप्रहारिणः तथेत्यूचुर्महाराजं-
रामदर्शनलालसम् १ पुत्राऊचुः राजन्भवत्पदांभोजान्नान्यत्जानीमतत्परम् यत्तवस्त्वांततोजानत्तद्भवत्वद्यवेगतः २ अश्वो
यंनीयतांतत्रसितचामरभूषितः रत्नमालातिशोभाढ्यश्चंदनादिकचर्चितः ३ राज्यमाज्ञाफलंस्वामिन्कोशाबहुसमृद्धयः वासां-
सिसुमहार्हाणिसूक्ष्माणिसुगुणानिच ४ चंदनंचंद्रकंचैववाजिनःसुमनोहराः हस्तिनस्तुमदोद्धतारथाःकाचनकूबराः ५ विचि-
त्रांबरवर्णादिनानाभूषणभूषिताः दास्यःशतसहस्रंचदासाश्चसुमनोरमाः ६ मणयःसूर्यसंकाशारत्नानिविविधानिच मुक्ताफला
निताराणिगजकुंभभवानिच ७ विद्रुमाःशतसाहस्राःसर्ववस्तुमहोद्यम् तत्सर्वंरामचंद्रायदेहिराजन्महामते ८ सुतानस्मान्किंकरान्भःस
वानर्पयभूपते कथंनकुरुषेराजन्त्वदधीनंनृपासनम् ९ शेषउवाच इतिपुत्रवचःश्रुत्वाहर्षितोभून्महीपतिः उवाचचसुतान्वी
रान्स्ववाक्यकरणोद्यतान् १० राजोवाच आनयंतुहयंसर्वेसन्नधाःशस्त्रपाणयः नानारथपरीवारास्ततोयास्तेनृपंप्रति ११ शेषउवाच इतिरा
ज्ञोवचःश्रुत्वाविनिर्विवादमनस्तथा सुकेतुःसमरेशूराजग्मुस्तस्याज्ञयाद्रुताः १२ तेगत्वायपुरींशूरावाजिनंसुमनोरमम् सित
चामरसंयुक्तंस्वर्णपत्राद्यलंकृतम् १३ रत्नमालाविभूषाढ्यंचित्रपत्रेणशोभितम् विचित्रमणिभूषाढ्यंमुक्ताजालस्वलंकृतम् १४
रज्वाधृतंमहावीरैःपूर्वतःपृष्ठतोभटैः महाशस्त्रास्त्रसंयुक्तैःसर्वशोभासमन्वितैः १५ सितातपत्रमस्योच्चैर्भातिमूर्धनिवाजिनः
सुचामरद्वयंतस्यध्रियतेपुरतोमुहुः १६ कृष्णागर्वादिधूपैश्चधूपितंवायुवेगिनम् राज्ञःपुरोनिनायाश्वंहयमेधस्यसत्कृताः १७

रा०मे०
३८

तमानीतंहयंदृष्ट्वारत्नमालाविभूषितम् मनोजवंकामरूपंजहर्षमतिमान्नृपः १८ जगामपद्भ्यांशत्रुघ्नंराजचिन्हाद्यलंकृतः स्वपुत्रपौ-
त्रैःसंयुक्तोराजापरमधार्मिकः १९ यथोक्तंतुधनानांसंसङ्ख्ययंशतगामिनाम् एतद्विनरकंमत्वादुःखदंसक्तचेतसाम् २० शत्रुघ्न-
सदद्रूशीर्षसितछत्रेणशोभिनम् चामरैर्वीजितंदृष्ट्वासेवकैःपुरतःस्थितैः २१ स्मृमतिप्रतिपृच्छतिरामंचद्रकथानकम् भयवार्तावि-
निर्मुक्तवीरशोभास्वलंकृतम् २२ वीरैःकोटिभिराकीर्णंनेत्रपाताभिकांक्षिभिः वानराणांसहस्रैश्चसमंतात्परिवारितम् २३ दृ-
ष्ट्वाशत्रुघ्नचरणौप्रणनामसपुत्रकः धन्योहमितिसंहृष्टोवदन्नामैकमानसः २४ शत्रुघ्नस्तुप्रनम्रंतंदृष्ट्वाराजानमुद्धरम् उत्थाप्या
सनतःसर्वैर्भटैर्दोर्भ्यांपरिष्वजत् २५ दृढंसंष्वज्यराजानंशत्रुघ्नःपरवीरहा उवाचहर्षमापन्नोगद्गदस्वरहर्षितः २६ सुबा-
हुरुवाच अद्यधन्योस्मिसस्मृतःसकुटुंबःसवाहनः यद्युष्मच्चरणौद्रक्ष्येनृपकोटिभिरावृतः २७ अज्ञानिनास्मृतेनायंगृही-
तोवाजिनांवरः बालिशेनानयंतंमेक्षमस्वकरुणानिधे २८ जानामीतिरघोर्नाथंसर्वदेवाधिदैवतम् लीलयाविश्वस्रष्टारंहंतार-
मपिपालकम् २९ इदंराज्यंसमृद्धांगंसमृद्धबलवाहनम् इमेकोशाधनैःपूर्णाइमेपुत्राइमेवयम् ३० सर्वेवयंरामनाथा
स्त्वदाज्ञाप्रतिपालकाः गृहाणसर्वंसकलंनमेस्तिकिंचिदुन्मतिम् ३१ क्वासौहनूमान्रामस्यचरणांभोजषट्पदः यत्प्रसादा-
दहंप्राप्स्येराजाराजस्यदर्शनम् ३२ साधूनांसंगतःकिंहिप्राप्यतेनमहीतले यत्प्रसादादहंमुक्तोब्रह्मशापमतीतरम् ३३
पश्याम्यद्यमहाराजंपद्मपत्रनिभेक्षणम् प्राप्स्यामिजन्मनःसर्वंफलंदुर्लभमत्रच ३४ समतावद्गतंचाशुबहुरामवियोग-
तः स्वल्पमुर्वरितंतत्रकथंद्रक्ष्येरघूत्तमम् ३५ ममदर्शयतंरामंयज्ञकर्मविचक्षणम् यदंघ्रिरजसापूताशिलाजातागताधि-
नी ३६ काकःपरंपदंप्राप्तोयद्बाणेस्पर्शनान्नृखगः अनेकेयस्यवक्त्राब्जंवीक्ष्यसंख्येपदंगताः ३७ येत्वस्यरघुनाथस्यना-
मगृण्हंतिसादरात् तेयांतिपरमंस्थानंयोगिभिर्यद्धिचिंत्यते ३८ धन्यायोध्याभवल्लोकायेराममुखपंकजम् स्वलोचनपुटैः
पीत्वास्मरवंयांतिमहोदयात् ३९ इतिसंभाष्यनृपतिर्वाहराज्यधनानिच सर्वंसमर्प्यचोवाचकिंकरोस्मिमहीपते ४० इतिवा-

अ०
२८

३८

वचःसमाकर्ण्यराज्ञ पुरःपुरंजयः प्रत्युवाचेतितंभूपंवाग्मीवाक्यविशारदः ४१ शत्रुघ्नउवाच कथंराजन्निदंब्रूषेत्वंवृद्धोम
मपूजितः सर्वंत्वदीयंत्वद्राज्यंदमनोविदधात्वयम् ४२ क्षत्रियाणामिदंकृत्यंयत्संग्रामविधायकम् सर्वंराज्यंधनंचेदंप्र
तियातुममाज्ञया ४३ यथामेरघुनाथस्तुपूज्योवाङ्मनसातदा तथात्वमपिमत्पूज्योभविष्यसिमहीपते ४४ भवान्सज्जी
भवत्वद्यहयस्यानुगमंप्रति सन्नद्धःकवचीरवड्गीगजाश्वरथसंयुतः ४५ इतिवाक्यंसमाकर्ण्यशत्रुघ्नस्यमहीपतिः पुत्रंराज्ये
भिषेच्यैवशत्रुघ्नेनसुपूजितः ४६ महारथैःपरिवृतोनिजपुत्रोरणांगणे पुष्कलेनमहस्तस्यत्वकरोत्सांपरायिकम् ४७
क्षणशःशोचतंराजालोकंदृष्ट्वामहारथः ज्ञानेननाशयच्छोकंरघुनाथमनुस्मरन् ४८ सज्जीभूतोरथेतिष्ठन्महासैन्यपरि
वृतः आजगामसशत्रुघ्नंमहारथपरिवृतः ४९ राजातमागतंदृष्ट्वासर्वसैन्यसमन्वितम् गतुंचकारधिषणांहयस्यस्यपा-
लने ५० सोश्वोविमोचितस्तेनभालपत्रेणचिन्हितः ब्रह्मावर्तंभ्रमन्प्रायाद्योजनपदान्बहून् ५१ तत्रतत्रस्थभूपालैर्महाशू
राभिपूजितैः प्रणतिःक्रियतेतस्यनकोपितमगृण्हत ५२ केचिद्वासांसिचित्राणिकेचिद्राज्यंस्वकंमहत् केचिद्धनजनंकेचि
दानीयप्रणमंतितम् ५३ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेसुबाहुनिर्याणंनामएकोनत्रिंशति
तमोऽध्यायः २९ शेषउवाच अथतेजःपुरंप्राप्तस्तुरंगःपत्रशोभितः यस्यांपालयतेराजाप्रजाःसत्येनसत्यवान् १ रथ-
कोटिपरीवारोरघुनाथानुजस्ततः हयानुगोययौतस्यपुरतःशूरवर्ष्मणः २ तद्दृष्ट्वानगरंरम्यंचित्रप्राकारशोभितम् कांचनैः
कलशैस्तत्रपरितःपरिभाषितम् ३ देवायतनसाहस्रैःसर्वतश्चविराजितम् यतीनांतुमठास्तत्रशोभंतेयतिपूरिताः ४ व
हत्यत्रमहादेवीशिरिवलोचनमूर्धगा हंसकारंडवाकीर्णामुनिवृंदनिषेविता ५ ब्राह्मणानांप्रत्यगारमग्निहोत्रभवःपुनः
धूमस्तत्रपुनात्यंगपानकप्लुवसंप्लुतान् ६ उवाचसुमतिंराजाशत्रुघ्नःशत्रुतापनः तत्पुरप्रेक्षणोद्भूतहर्षविस्मितमानसः ७
केस्यदंपुरमाभातिसुमतेतत्वंतोवद विचित्रंसर्वशोभाढ्यंपरविस्मापनंमहत् ८ शेषउवाच इतिवाक्यंसमाकर्ण्यशत्रु

घ्नस्यमहीपतेः उवाचसुमतिःसर्वंयथानथमनुच्छृतम् ९ सुमतिरुवाच शृणुष्वावहितःस्वामिन्वैष्णवस्यकथांशुभाम्
याश्रुत्वामुच्यतेपापाद्ब्रह्महत्यासमादपि १० जीवन्मुक्ताचरीवृतिरामाङ्घ्रिरजषट्पदः सत्यवान्यज्ञयज्ञाङ्गज्ञाताकर्ताविताम
हान् ११ धेनुप्रसादाद्बहुभिर्व्रतैर्यंप्रापतत्पिता ऋतंभराख्योजगतींविदितःपरधार्मिकः १२ गोःप्रसन्नाददौपुत्रमनेकगु
णसंस्तुतम् सत्यवान्नामशोभाढ्यंतंजानीहिनृपोत्तमम् १३ शत्रुघ्नउवाच कावाऋतंभरोराजाकिमर्थंधेनुपूजनम् कृ
तंप्राप्तःसःतत्तस्यवैष्णवोविष्णुसेवकः १४ सर्वमेतत्समाचक्ष्ववैष्णवस्यकथानकम् श्रुतंहरतिजन्तूनांमहापापस्यपर्वतम् १५
इतिवाक्यंसमाकर्ण्यशत्रुघ्नस्यमहार्थकम् कथयामासविशदंतदुत्पत्तिकथानकम् १६ ऋतंभरोनरपतिरनपत्यःपुराभवत् क
लत्राणिबहून्यस्यनपुत्रंप्रापतेषुवै १७ तद्राजाजाबालिनामानंमुनिंदैवादुपागतम् पप्रच्छकुशलंयुक्तःस्वपुत्रोत्पत्तिकारणम् १८
ऋतंभरउवाच स्वामिन्वदस्वमेब्रूहिपुत्रोत्पत्तिकरंवचः यत्कृत्वाजायतेपत्यंममवंशधरंवरम् १९ तज्ज्ञात्वाकथयस्वाशु य-
त्कृत्वानिश्चितंवचः दानंव्रतंवार्तथैवमखंवामुनिसत्तम २० इतिराज्ञोवचःश्रुत्वाजगादमुनिसत्तमः सर्वमुत्पत्तिकृद्वाक्यंपुत्र-
स्यपरमार्थिनः २१ अपत्यप्राप्तिकामस्यसन्त्युपायास्त्रयःप्रभो विष्णुप्रसादाद्गोश्चापिशिवतुष्ट्याथवाभवेत् २२ तस्मात्त्वं
कुरुवैपूजांधेनोर्देवमयीतनोः यस्याःपुच्छेमुखेवाशृङ्गेपृष्ठेदेवाःप्रतिष्ठिताः २३ सातुष्टादास्यतिप्रेष्ठंवांछितंधर्मसंयुतम् ए-
वंविदित्वागोपूजांविधेहित्वंऋतंभर २४ योवैनित्यंपूजयतिगांगेहेयवसादिभिः तस्यदेवाश्चपितरोनित्यंभुक्त्वावहतितिहि
२५ योवैगवान्हिकंदद्यान्नियमेनशुभव्रतः तेनसत्यंनुतस्यस्युःसर्वेपूर्णामनोरथाः २६ तृषितागौर्गृहेबद्धागेहेकन्यार
जस्वला देवाश्चसर्वेनिर्माल्याहृतिपुण्यंपुराकृतम् योवैगांप्रतिषिद्धेतचरंतींतांतृणंनरः तस्यपूर्वेचपितरःकंपंतेपतनोन्मु
खाः २८ योवैयष्ट्याताडयतिधेनुंमूढोविमूढधीः धर्मराजस्यनगरंसयातिकरवर्जितः २९ योवैदंशान्निवार्येततस्यपू
र्वेह्यधोगताः नृत्यंतिमत्कृतोह्यस्मान्तारयिष्यतिभाग्यवान् ३० अत्रैवोदाहरंतीममितिहासंपुरातनम् जनकस्यपुराख्य-

त्वंधर्मराजपुरेद्रुतम् ३१ एकदाजनकोराजायोगेनासून्समत्यजत् तदाविमानंसंप्राप्तंकिंकिणीजालभूषितम् ३२ तदारुह्यग
ताराजासेवकैरुदद्देहवान् मार्गेजगामधर्मस्यसंयमिन्याःपुरोंतिके ३३ तदानरककोटीषुपीड्यंतेपापकारिणः जनकस्या
गपवनंप्राप्यसौख्यंप्रपेदिरे ३४ निरयेदाहभूपीडाजाताशीतलकारिणी महादुःखंतदानष्टंजनकस्यागवायुना ३५ त
दातंनिर्गतंदृष्ट्वाजनवःपापपीडिताः अत्यंतंचुक्रुशुर्भीतास्तद्वियोगमनिच्छवः ३६ ऊचुस्तेकरुणावाक्यमागच्छक्षणंतै
धित त्वदंगवायुसंस्पर्शात्सुखिनःस्यामपीडिताः ३७ इतिवाक्यंसमाकर्ण्यराजापरमधार्मिकः मानसेचिंतयामासकरुणापू
रपूरितः ३८ चेन्मत्तःप्राणिनांसौख्यंभवेदिहतदापुनः अत्रैवचपुरेस्थास्येस्वर्गएषमनोरमः ३९ एवंकृत्वानृपस्तस्थौत
त्रैवनिरयायतः विदधत्प्राणिनांसौख्यमनुकंपितमानसः ४० तदायमस्तुसंप्राप्तोनिरयद्वारिदुःखदः कारयन्यातनास्ती
व्राःपातकाकरकारिणाम् ४१ तदाददर्शराजानंजनकंद्वारिशोभितम् विमानेनमहापुण्यकारिणंदययायुतम् ४२ त
मुवाचप्रेतपतिर्जनकस्महसन्गिरा राजन्कुनस्त्वंसंप्राप्तोसर्वधर्मशिरोमणिः ४३ एतत्स्थानंपातकिनांदुष्टानांप्राणघातिनां
म् नायांतिपुरुषाभूयस्त्वादृशाःपुण्यकारिणः ४२ अत्रायांतिनरास्तेवैयेपरद्रोहतत्पराः परापवादनिरताःपरद्रव्यपराय-
णाः ४५ योवैकलत्रंधर्मिष्टंनिजसेवापरायणम् अपराधाहतेजह्यात्सनरोत्रसमाव्रजेत् ४६ मित्रंवंचयतेयस्तुधनलोभे
नलोभितः आगत्यात्रनरःपीडामनंतांप्राप्नोतिदारुणाम् ४६ योराममनसावाचाकर्मणादंभतोपिवा द्वेषाद्वाचोपहासाद्वानस्म
रत्येषमूढधीः ४८ तंबध्नामिपुनस्तोयेनिक्षिपामिग्रसामिच येःस्मृतोनरमानाथोनरकक्लेशवारकः ४९ तावत्तापंमनु
ष्याणामंगेषुनृपतिष्ठति यावद्रामंनरसनागृणातिकलिदुर्मतेः ५० महापापकरान्राजन्यैभजंतिमहामते तान्नयंतिभ
टामत्यंत्वादृशान्द्रष्टुमक्षमाः ५१ तस्माद्गच्छमहाराजभुंक्ष्वभोगाननेकशः विमानवरमारुह्यभुंक्ष्वपुण्यमुपार्जितम् ५२
इतिवाक्यंसमाकर्ण्यधर्मराजस्यतत्पतेः उवाचधर्मराजानंकरुणापूरितःसदा ५३ जनकउवाच अतोगच्छामिनोनाथ

जीवानामनुकंपया मदंगवायुनात्येतेसुखंप्राप्ताःस्मसंस्थिताः ५४ एतान्मुंचसिचेद्राजन्सर्वान्वैनिरयस्थितान् ततोगच्छामि
स्वर्गतःस्वर्गंपुण्यजनाश्रितम् ५५ शेषउवाच इतिवाक्यमथाश्रुत्यजनकंमृत्युवाचसः प्रत्येकंनिर्दिशन्जीवान्निरयस्थाननेकशः ५६
धर्मोवाच अयंमित्रकलत्रैर्वैविश्वस्तमनुजग्मिवान् तस्मादेनंलोहशंकोवर्षायुतमपीपचम् ५७ पश्चादेनंसूकराणांयोनौनिक्षिप्य
दोषिणम् मातुषेष्ववतारोहिखजचिन्हेनचिन्हितः ५८ अनेनपरदाराश्चबलादालिंगितामुहुः तस्मादयंपच्यतेत्ररौरवेशतहायन
म् ५९ अयंतुपरकीयस्वंसमुच्यबुभुजेकुधीः तस्मादस्यकरोच्छेदिपच्यंयंपूयशोणिते ६० अयंसायंतनेप्राप्तमतिथिंक्षुधयार्दितम्
वा पर्यापिनाकरोत्तस्यपूजनंस्वागतेनच ६१ तस्मादयंमयानीतोतामिस्रेंधसूपूरितः भ्रमरैःपीडितोयातुयातनाशतहायनाम् ६२ अयं
तावत्परस्योच्चैर्निंदांकुर्वन्नलज्जितः अयमप्यश्रृणोत्कर्णप्रेरयन्बहुशस्तुतम् ६३ तस्मादिमावंधकूपेपतितौदुःखदुःखितौ अयंमित्रध्रु
गुर्द्रुग्नःपच्यतेरौरवेभृशम् ६४ तस्मादेतान्पापभोगंकारयित्वाविमोचये तंगच्छनरशार्दूलपुण्यराशिविधायकः ६५ शेषउवाच
एवंतन्निर्दिशन्सर्वंजीवानामघकारितम् प्रोवाचराममक्तोसौकरुणापूरितेक्षणः ६६ जनकउवाच कथंनिरयनिर्मुक्ति
र्जीवानांदुःखतोभवेत् तदाशुकथयत्वंवैयत्कृत्वासुखमाप्नुयुः ६७ धर्मउवाच नैभिराराधितोविष्णुर्नैभिस्तस्यकथाश्रु
ताः कथंनिरयनिर्मुक्तिर्भवेद्वैपापकारिणाम् ६८ यदित्वमानयस्येतान्महापापकरानपि तर्ह्यर्पयमहाराजपुण्यंतत्कथयाम्य
तः ६९ एकदाप्रातरुत्थायश्रद्धाभावेनचेतसा ध्यातश्रीरघुनाथोसौमहापापहराभिधः ६९ रामरामेतियच्चोक्तंत्वयाश्रद्धे
नचेतसा तत्पुण्यमर्पयैतेभ्योयथास्यान्निरयान्मुक्तिः ७० शेषउवाच एतच्छ्रुत्वावचस्तस्यधर्मराजस्यधीमतः पु
ण्यंददौमहाराजोआजन्मसमुपार्जितम् ७१ यदाजन्मकृतैःपुण्यैरघुनाथार्चनोद्भवैः एतेषांनिरयान्मुक्तिर्भवत्वत्रमनोरमा
७२ एवंकथयतस्तस्यजीवानिरयसंस्थिताः तत्क्षणान्निरयान्मुक्ताजातादिव्यपुर्धराः ७३ ऊचुस्तेजनकराजन्त्वत्प्र
सादाद्वयंमहत् दुःखदान्निरयान्मुक्तायास्यामोपरमंपदम् ७४ तान्दृष्ट्वासूर्यसंकाशांश्चरान्निरयनिःसृतान् तुतोषचि-

त्वेसु भृशंसर्वभूतदयापरः ७५ तेसर्वेप्रययुर्लोकंदिव्यंदेवैरलंकृतम् जनकंतुप्रशंसंतोमहाराजंदयानिधिम् ७६ इति-
श्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेनरकस्थप्राणिमोचनोनामत्रिंशोऽध्यायः ३० जाबालिरुवाच
अथतेषुप्रयातेषुनरकस्थेषुवैपुनः राजापप्रच्छकीनाशपतिंधर्मविदांवरम् १ राजोवाच धर्मराजत्वयाप्रोक्तायुत्पातककश
नराः आयांतितवसंस्थानेनचधर्मकथारताः २ मदागमनमत्राभूत्केनपापेनधर्मक तद्वैकथयसर्वंमेपापकार्यंयथातथ-
म् ३ इतिश्रुत्वातुतद्वाक्यंधर्मराजःपरंतपः कथयामासतस्यैवयमपुर्यागमंतदा ४ धर्मराजउवाच राजंस्त्वमहत्पु-
ण्ययमेकादृक्कानभूपते रघुनाथपदद्वंद्वमकरंदमधुव्रतः ५ त्वत्कीर्तिस्वर्धुनीसर्वव्यापिनोमलसंयुतान् पुनातिपरमाल्हा
दकारिणीदुष्टतारिणी ६ तथापिपापलेशस्तेवर्ततेनृपसत्तम येनसंयमिनीपार्श्वमागतःपुण्यपूरकः ७ एकदातुचरं
तींगांकथयामासषेधय तेनपापविपाकेननिरयद्वारदर्शनम् ८ इदानींपापनिर्मुक्तोबहुपुण्यसमन्वितः भुंक्ष्वभोगान्सु-
विपुलान्निजपुण्यार्जितान्बहून् ९ एतेषांकरुणाव्याधिरघुनाथस्तवमहत् संयमिन्यामहामार्गेप्रेरयामासवैष्णव १०
नागमिष्यद्यदित्वंवैमार्गेणानेनसुव्रत अभविष्यत्कथंतेषांनिरयात्परिमोचनम् ११ त्वादृशाःपरदुःखेनदुःखिताःकरुणाल
याः प्राणिनांदुःखविच्छेदंकुर्वंत्येवमहामते १२ एवंवदंतंशमनंप्रणम्यसदिवंगतः दिव्येनस्तुविमानेनअप्सरोगणशो-
भिना १३ तस्माद्गावोनिशंपूज्यामनसापिनगर्हयेत् गर्हयन्निरयंयातियावदिंद्राश्चतुर्दश १४ तस्मात्त्वंचनृपश्रेष्ठगो
पूजांवैसमाचर सातुष्टादास्यतिक्षिप्रंपुत्रंधर्मपरायणम् १५ तच्छ्रुत्वाधेनुपूजांसपप्रच्छकयमादरात् पूजनीयाप्रयत्नेन
कीदृशंकुरुतेनरः १६ जाबालिःकथयामासधेनुपूजांयथाविधि प्रत्यहंविपिनंगच्छेच्चारणार्थंव्रतंचरन् १७ गवेयवा
स्तुसंभोज्यागोमयस्थानुपाहरेत् भक्षणीयायवाराजन्पुत्रकामेनभूपते १८ सायदापिबतेतोयंतदापिबजलंशुचि सोच्चै
स्थानेयदातिष्ठेत्तदात्वंनीचसंस्थितः १९ दंशान्निवारयन्नित्यंयवसंचसमाहरेत् एवंप्रकुर्वतःपुत्रंदास्यतेधर्मतत्परम् २०

राम
४१

ऋमुनिरुवाच इतिवाक्यंसमाकर्ण्यपुत्रकामऋतंभरः व्रतंचकारधर्मात्माधेनुपूजांसमाचरन् २१ प्रत्यहंकुरुतेगावयवसा
द्येनतोषिताम् देशान्वारयतेधीमान्यवभक्षकृतादरः २२ एवंधेनुंपूजयतोगतास्तद्दिवसाघनाः वनमध्येतृणादींश्चतर
तोक्वापिनिर्भया २३ एकदानृपतिस्तस्यवनस्थायांनिरीक्षणे न्यस्तदृष्टिःपरित्यज्यबभ्रामसकुतूहली २४ तदागत्या-
हनद्गावंपंचास्यःकाननांतरात् क्रोशंतींबहुधादीनांसिंहभावेनदुःखिताम् २५ तदानृपःसमागत्यविलोक्यनिजमातरम्
सिंहेननिहतांपश्यन्रुरोदातीवविह्वलः २६ सदुःखितःसमागत्यजाबालिंमुनिसत्तमम् पप्रच्छनिष्कृतिंतस्यावधपापाप
नुत्तये २७ ऋतंभरउवाच स्वामिंस्त्वदाज्ञयाधेनुंपालयन्वनमास्थितः कुतोप्यागत्यतांसिंहोजघानदृष्टिगोचरः २८
तस्यपापस्यनिष्कृत्यैकिंकरोमित्वदाज्ञया कथंवाव्रतसंपूर्तिर्ममपुत्रप्रदायिनी २९ इत्युक्तवंतंतंभूपंजगादमुनिसत्तमः सं
शृणुयाम्महीपालपापस्यास्यापनुत्तये ३० ब्रह्मघ्नस्यकृतघ्नस्यक्रूरपापस्यमहामते प्रायश्चित्तानिवर्ततेसर्वपापहराणिच ३१
कृच्छ्रैश्चांद्रायणैर्दानैर्व्रतैःसन्नियमैर्यमैः पापानिप्रलयंयांतिनियमाद्यैरनुष्ठितैः ३२ द्वयोश्चनिष्कृतिर्नास्तिपापपुंजकृतो
स्तयोः मत्यागोवधकर्तुश्चनारायणविनिंदितुः ३३ गवायोमनसादुष्टंवाच्छत्यधमसत्कृतः सयातिनिरयस्थानंयावदिंद्
राश्चतुर्दश ३४ योपिदेवंहरिंनिंदेत्सकृद्दुर्भाग्यवान्नरः सचापिनरकंपश्येत्पुत्रपौत्रपरिवृतः ३५ तस्माज्ज्ञात्वाहरिं
निंदन्गोषुदुष्टंसमाचरन् कदापिनरकान्मुक्तिंनप्राप्नोतिनरेश्वर ३६ अज्ञानप्राप्तगोहत्याप्रायश्चित्तंतुविद्यते रामभक्तंतु
धीमंतयाहित्वंऋतुपर्णकम् ३७ सर्वेषुसमदृशःसर्वान्शत्रून्मित्रान्समंचरन् तुभ्यंकथयनिक्षिप्रंगोवधस्यास्यनिष्कृति
म् ३८ तस्यदेशास्त्वमाकृष्यतेननिवारितःपुनः वैरभावंपरित्यज्यगच्छत्वंऋतुपर्णकम् ३९ सयथावदतिक्षिप्रंत
त्कुरुष्वसमाहितः यथात्वत्कृतपापस्यनिष्कृतिर्हिभविष्यति ४० सतुतद्वचनंश्रुत्वाजगामऋतुपर्णकम् रामभक्तंरि
पौमित्रेसमदृष्ट्यासमंजसम् ४१ सतस्मैकथयामासयज्ज्ञातगोवधादिकम् तस्यपापस्यनिष्कृत्यैद्युपायातस्त्वमुक्त

अ॰
३१

४१

भवन्मार्गेतमःपरमदारुणम् यस्मिन्स्वीयोनपूरक्ष्योलक्ष्यतेज्ञातिभिर्नरैः २ रजसाव्याप्तंतंव्योमविद्युतःशब्दगर्जिताः एता
दृशेतुसंमर्देमहाभयकरेततः ३ मघावर्षतिरुधिरपूयामेध्यादिकंबहु अत्याकुलाबभूवुस्तेवीराःपरमवैरिणः ४ आ
कुलीकृतलोकेतुकिमिदंकिमितिस्थितिः तमोव्याप्तानिलोकानांचक्षूंषिप्रथितौजसाम् ५ जहाराश्वंरावणस्यसुहृत्सा
तालसंस्थितः विद्युन्मालीतिविख्यातोराक्षसश्रेणिसंवृतः ६ कामगेनविमानेनसर्वायसविभेदिना आरूढःसर्ववी
राणांभयंकुर्वन्जहारतम् ७ मुहूर्त्तात्तत्तमोनष्टमाकाशंविमलंबभौ वीराःशत्रुघ्नमुख्यास्तेप्रोचुःकुत्रहयोस्तिसः
८ तेसर्वेहयराजंतुलोकयंतःपरस्परम् ददृशुर्नयदावाहहाहाहाकारस्तदाभवत् ९ कुत्राश्वोहयमेधस्यकेननीतःकु
बुद्धिना इतिवाचमवोचंस्तेतावत्सदनुजेश्वरः १० ददृशेस्फुभटैःसर्वैरथस्थैःशौर्यशोभितैः विमानस्थमारूढोराक्षसाग्र्यैः
परिवृतः ११ दुर्मुखाविकरालास्यालंबदंष्ट्राभयानकाः राक्षसास्तत्रदृश्यंतेहयग्रहणउद्यताः १२ तदाआवेद्या
मासुःशत्रुघ्नंनृपोत्तमम् हयानीतानजानीमःखेविमानवरासिनाम् १३ तमसाव्याकुलान्कृत्वावीरानस्मान्समाययौ
गृहीतुंनृपशार्दूलहयंकुरुयथोचितम् १४ शत्रुघ्नस्तद्वचःश्रुत्वामहारोषपरिप्लुतः कोस्त्येषराक्षसोयोमेहयंजग्राहवी
र्यवान् १५ विमानंतत्पतत्वद्यमद्बाणव्रजनिहतम् तपत्वद्यशिरस्तस्यक्षुरप्रैर्मेमहीतलम् १६ सज्जीयंतांरथाः
सर्वेमहाशस्त्रास्त्रपूरिताः यांतुतंप्रतिसंहर्तुंममवाजिहरंनरम् १७ इत्युक्त्वारोषताम्राक्षउवाचनिजमंत्रिणम् नयानय
विद्श्रेष्ठंयुद्धकार्यविशारदम् १८ शत्रुघ्नउवाच मंत्रिन्कथयकेयोज्याराक्षसस्यवधोद्यताः महाशस्त्रामहाशूराःपरमा
स्त्रविदुत्तमाः १९ कथयाशुविचार्यैवतत्करोमिभवद्वचः वीरान्कथयतस्यैवंयोग्यान्सर्वास्त्रकोविदान् २० एतच्छ्रु
त्वातुसचिवःप्राहवाक्यंयथोचितम् वीरान्रणवरेयोग्यान्दर्शयन्तरसानतान् २१ सुमतिरुवाच अत्रगच्छतु
तद्रक्षःसमरविजयोद्यतः महाशस्त्रास्त्रसंयुक्तःपुष्कलःपरतापनः २२ तथालक्ष्मीनिधिर्यातुशस्त्रसंघसमन्वितः

करोतु तस्य यानस्य भंगं तीक्ष्णैः स्वसायकैः २३ हनूमान् दृष्टकर्मात्र राक्षसैर्योधितुं क्षमः करोतु मुखपुच्छाभ्यां ताडनं राक्ष-
साधमम् २४ वीराग्रण्योपि ये सर्वे शूरा रणविशारदाः गच्छंतु ते खिलास्तत्र त्वद्वाक्यप्रप्रमोदिताः २५ रूक्मदश्च सुबाहु-
श्च प्रतापाग्र्यश्च सत्तमः गच्छंतु सायकैस्तीक्ष्णैस्तान् योद्धुं राक्षसाधमान् २६ सर्वानपि महाशस्त्रपरिवारे रथे स्थितः क-
रोतु युद्धविजयो राक्षसं हंतुमुद्यतः २७ एतन्मम मतं राजन्ये योधास्तत्प्रदर्शकाः ते गच्छंतु रणे शूराः किमन्यैर्बहुभिर्ज-
नैः २८ इत्युक्तवति वीराग्र्ये आमात्यवरसेविते शत्रुघ्नः कथयामास वीरान्संग्रामकोविदान् २९ भो वीराः पुष्कला-
द्याये सर्वे शस्त्रास्त्रकोविदाः ते वदंतु प्रतिज्ञां वै मत्पुरो राक्षसार्दने ३० कृत्वा प्रतिज्ञां विपुलां स्वपराक्रमशोभिनीम् गच्छं-
तु रणमध्ये हि यूयं बलसमन्विताः इति वाक्यं समाकर्ण्य शत्रुघ्नस्य महाबलाः स्वां स्वां प्रतिज्ञां महतीं चक्रुस्ते तेजसान्विताः
३२ तत्रादौ पुष्कलो वीरो श्रुत्वा वाक्यं महीपतेः परमोत्साहमनसा प्रतिज्ञां सूचिवांस्तदा ३३ पुष्कल उवाच शृणु स्वं नृप-
शार्दूल मत्प्रतिज्ञां पराक्रमात् विहितां सर्वलोकानां शृण्वतां परमाद्भुताम् ३४ चेन्न कुर्यां शरैर्मुक्तैस्तीक्ष्णैः कोदंडनिर्ग-
तैः दैत्यं मूर्छितमत्यंतं कीर्णकेशाकुलाननम् ३५ कन्यास्वभ्रातृयत्पापं यत्पापं देवनिंदने तत्पापं मम संभूयाद्यदि कु-
र्वेनृतं वचः ३६ यदि मद्बाणनिर्भिन्नाः सैनिकाः सुमहाबलाः न पतंति महाराज प्रतिज्ञा तत्र मे शृणु ३७ यः स्वाशयो-
विभेदं यः शिवविष्णोरपि क्रियात् तत्पापं मम वै भूयाच्चेत्कुर्यामनृतं वचः ३८ सर्वनृद्वाक्यमित्युक्त्वा रघुनाथपदाब्जे
भक्तिर्मे निश्चला कार्यं करिष्यति मनीषितम् ३९ पुष्कलस्य प्रतिज्ञां तां श्रुत्वा लक्ष्मीनिधिर्नृपः प्रतिज्ञां व्यदधात्स्वीयां स्वपराक्र-
मशोभिताम् ४० लक्ष्मीनिधिरुवाच वेदानां निंदनं श्रुत्वा तत्र यो निवसेन्नरः मानसे रोचये यस्तु सर्वधर्मबहिष्कृतः
४१ ब्राह्मणो यो दुराचारो लाक्षायाविक्रमं चरेत् गां च विक्रयते मूढो धनलोभेन मोहितः ४२ म्लेच्छकूपोदकं पीत्वा प्रायश्चि-
त्तं तु नाचरेत् तत्पापं मम वै भूयात् विमुखश्चेद्भवाम्यहम् ४३ तत्प्रतिज्ञां मया श्रुत्वा हनूमान् रणकोविदः रामांघ्रिस्मरणांकु-

वान् ४२ तदाप्रोवचतंराजाऋतुपर्णःप्रतापवान् उवाचचहसन्वाक्यंबुद्धिमान्धर्मकोविदः ४३ कोहंराजन्मुनीनां
वैपुरतःशास्त्रवेदिनाम् तान्हित्वाकिंतुमांप्राप्तोमूर्खंपंडितमानिनम् ४४ त्वयिमय्यस्तिचेत्श्रद्धातदाकिंचिद्ब्रवी-
म्यहम् शृणुष्वनरशार्दूलगदितंममसादरः ४५ भवस्वरघुनाथंत्वंकर्मणामनसागिरा नैष्कापट्येनलोकेशंतोषयस्व
महामते ४६ सतुष्टोदास्यतेसर्वंत्वद्धृदिस्थंमनोरथम् अज्ञानकृतगोहत्यापापनाशंकरिष्यति ४७ रामस्मरणपू
तात्माधेनुंब्राह्मणसत्तमे दत्वायथोक्तकनकांपापनिष्कृतिमाप्स्यसि ४८ एतच्छ्रुत्वातुतद्वाक्यंऋतम्भरन्नृपस्तदा विधाय-
रामस्मरणंपूतात्माव्रतमाचरत् ४९ धेनुंसपालयत्पूर्वंजगामविपिनंमहत् रामनामस्मरन्नित्यंसर्वभूतहितेरतः ५०
तस्मैतुष्टातुसुरभिःप्रोवाचपरितोषिता राजन्वरयमत्तोवैपरंहृत्स्थमनोरथम् ५१ तदाप्रोवाचवैराजापुत्रंदेहिमनोरमम्
रामभक्तंपितृरतंस्वधर्मप्रतिपालकम् ५२ तदाप्रादाद्धरसापिनथेत्युक्तामनोरथम् जगामदर्शनंदेवीकामधेनुःकृपावती ५३
सकालेप्राप्तवान्पुत्रंवैष्णवंरामसेवकम् सत्यवत्संज्ञयायुक्तमकरोत्तत्रतत्पिता ५४ सत्यवतस्कृतंलब्ध्वापितृभक्तिपरंमहा
न् परमंहर्षमापेदेशक्रःस्कृतमवाप्यहि ५५ सराजाधार्मिकंपुत्रंप्राप्यहर्षेणनिर्भरः तज्यंतस्मिन्महींन्यस्यजगामतपसेव
नम् ५६ तत्राराध्यहृषीकेशंभक्तियुक्तेनचेतसा निर्मुक्तपापःस्वजनैरगाद्धरिपदंनृप ५७ इतिश्रीपद्मपुराणेपाताल-
खंडेरामाश्वमेधेशेषवात्स्यायनसंवादेधेनुवर्णनंनामएकत्रिंशत्तितमोऽध्यायः ३१ सुमतिरुवाच एतद्ग्रामाधिपःसोम्यस-
त्यवान्नामविश्रुतः निजधर्मेणलोकेशंरघुनाथमतोषयत् १ तस्मैतुष्टोरमानाथोददौभक्तिमचंचलाम् निजपादपयोजाते
दुर्लभांपुण्यकोटिभिः २ नित्यश्रीरघुनाथस्यकथाकथनतत्परः कुरुतेसर्वलोकानांपावनंकृपयायुतः ३ योनपूजय-
तेदेवंरघुनाथंरमापतिम् सतेनताड्यतेदंडैर्यमस्यापिभयावहैः ४ अष्टमाद्वत्सरादूर्ध्वमशीतिवत्सरोभवेत् तावदेकाद
शीसेवैमानुषैरामसेवकैः ५ तुलसीवल्लभायस्यकदाचिद्यच्छिरोदरम् नमुंचतिरमानाथपादपद्मस्त्रगुत्तमा ६ ऋषीणा

मपिपूज्योयमितरेषांकथानहि. रघुनाथस्मृतिप्रीतिधूतपाप्माहताशुभः ७ ज्ञात्वायंरामचंद्रस्यवाजिनंपरमाद्भुतम् आ
गत्यतुभ्यंसदास्यत्यतद्राज्यमकंटकम् ८ त्वयायदितराजन्तत्तत्कथितमुत्तमम् पुनःकिंपृच्छसेस्वामिन्नाज्ञापयकरोमित
त् ९ शेषउवाच गतोश्वस्तत्पुरीतस्तुनानाश्चर्यसमन्वितः तंदृष्ट्वाजनताःसर्वाराज्ञेगत्वान्यवेदयन् १० जनाऊचुः
कोप्यश्वःसितवर्णेनगंगाजलसमेननु भालेस्वर्णेनपत्रेणराजमानःसमागतः ११ तच्छ्रुत्वावचनंरम्यंजनतानांहृदीप्सितम्
तान्नत्वाहहसन्भूपोज्ञायतांकस्यवैहयः १२ तावेनंकथयामासुःशत्रुघ्नेनप्रपालितः आयात्यश्वोमहीभर्तूरामस्यपुरम
ध्यतः १३ रामस्यनामसंश्रुत्वाह्यक्षरद्वयमनोहरम् जहर्षचित्तेसुभृशंगद्गदस्वरचिन्हितः १४ मयायोध्यायतेनित्यंरघुना
थोहृदालये तस्याश्वःसहशत्रुघ्नःसमायातोपुरंमम १५ हनुमांस्तत्ररामांघ्रिसेवाकर्ताभविष्यति कदाचिदपियोरामंन
विस्मरतिमानसे १६ गच्छामियत्रशत्रुघ्नोयत्रमारुतनंदनः अन्येपियत्रपुरुषारामपादाब्जसेवकाः १७ आमात्यानादि
देशाथसर्वराजधनंमहत् गृहीत्वातुमयासार्द्धंगच्छध्वंत्वरयापुनः १८ यास्येहंरघुनाथस्यहयंपालयितुंवरम् कर्तुंचराम
पादाब्जपरिचर्यांसुदुर्लभाम् १९ इत्युक्त्वानिजगामाथशत्रुघ्नंप्रतिसैनिकैः तावत्पुरीमथप्राप्तोरामभ्रातासमैनिकः २०
वीरागर्जंतिप्रबलरथाश्वगजनादितम् जयशब्दस्वनास्तत्रवेणुनादाश्चसर्वतः आगत्यसत्यवान्नामामंत्रिभिःसुसमन्वितः
चरणेप्रणिपत्यैवराज्यंप्रादान्महाधनम्. २२ शत्रुघ्नस्तंचराजानंज्ञात्वाराममनुव्रतम् तद्राज्यंतस्यपुत्रायरुक्मनाम्नेददा
न्महत् २३ हनूमंतंपरीरभ्यसुबाहूरामसेवकम् आज्ञात्वारामभक्तांश्चपरिरभ्यमहायशाः २४ कृतार्थमिवचात्मा
नंमेनेसत्यसमन्वितः ननंदचेतसितदाशत्रुघ्नेनसमन्वितः २५ हयस्तावद्गतोदूरंवीरैःसुपरिरक्षितः शत्रुघ्नस्तेनभूपेन
ययौवीरसमन्वितः २६ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेलोमशदर्शनंनामद्वात्रिंशत्तित·
मोऽध्यायः ३२ शेषउवाच गच्छत्सुरथवर्येषुशत्रुघ्नादिषुभूरिषु महाराजेषुसर्वेषुरथकोटिसमेतिषु १ अकस्माद·

त्वाप्रोवाचवचनंशुभम् ४४ मत्स्वामीहृदयेनित्यंध्यायतेयोगिभिर्मुहुः यंदेवाःसासुराःसर्वेनमंतिमणिमौलिभिः
४५ रामःश्रीमानयोध्यायाःपतिर्लोकेशपूजितः तस्मृत्वायच्चमेवाक्यंतन्नुसत्यंभविष्यति ४६ राजन्कार्यंमहा-
दैत्योदुर्बलःकाममेस्थितिः कथयाशुमयाकार्यमेकेनविनिपातनम् ४७ मेरुंदेवेंद्रसहितंलांगुलाग्रेणतोलये जलधिं
शोषयेत्सर्वंसंवर्तंचपिबाम्यहम् ४८ राज्ञःश्रीरघुनाथस्यजानक्याःकृपयामम तन्नास्तिभूतलेराजन्यन्नोसाध्यंभवेन्म
म ४९ एतद्वाक्यमयाप्रोक्तमनृतंस्याद्यदिप्रभो तदाममरमानाथभक्तिर्दूरतराभवेत् ५० यःशूद्रःकपिलागावंप-
योबुध्यातुपालयेत् तस्यपापंममैवास्तुचेत्कुर्यामनृतंवचः ५१ ब्राह्मणींगच्छतेमोहात्यःशूद्रःकाममोहितः त-
स्यपापंममैवास्तुचेत्कुर्यामनृतंवचः ५२ यत्पापान्नरकंगच्छेत्स्पर्शनाच्चापिरौरवम् तापिबेन्मदिरायोनाजिव्हास्वाद-
नलोलुपः ५३ तस्यचज्जायतेपापंतन्ममैवास्तुनिश्चितम् चेन्नकुर्यांप्रतिज्ञातंसत्यंरामकृपाव्रजात् ५४ एवमुक्तामहावी
रायोधास्तेतरसायुताः चक्रुःप्रतिज्ञामहतींस्वपराक्रमशालिनीम् ५५ शत्रुघ्नोपिव्यधात्तत्रप्रतिज्ञांपश्यतोनरान् साधु
साधुप्रशंसंतोतान्वीरान्युद्धकोविदान् ५६ कथयामिपुरोयुष्मान्प्रतिज्ञांसत्यशोभिताम् तच्छृण्वंतुमहाभागामृधोत्सा
हसमन्विताः ५७ चेत्तस्यशिरआहृत्यपातयामिनसायकैः विमानस्थंकबधान्वभिन्नंचेन्नसृजाम्यहम् ५८ यत्पा
पंकूटसाक्षीणांयत्पापंस्वर्णचौरिणाम् यत्पापंब्रह्मनिंदानांतन्ममास्त्वद्यनिश्चयात् ५९ इतिशत्रुघ्नसद्वाक्यंश्रुत्वातेवी-
रपूजिताः धन्योसिराघवभ्रातःकुरुत्वद्दन्योपराभवेत् ६० त्वयावैनिहतोदैत्योदेवदानवदुःखदः लवणोनामलोक
शबलहारीमहाबलः ६१ कोयंवराक्षसोदुष्टःक्वचास्यैबलमल्पकम् करिष्यसिक्षणादेवतस्यनाशंमहामते ६२ इ-
त्युक्त्वातेमहावीराःसज्जीभूतारणांगणे प्रतिज्ञांस्वांमृतांकृत्वायुयुस्तेराक्षसंमुदा ६३ इतिश्रीपद्मपुराणेपातालखंडे
रामाश्वमेधेशेषवात्स्यायनसंवादेसुमालीरक्षसाअश्वहरणोनामत्रयस्त्रिंशोतितमोऽध्यायः ३३ शेषउवाच रथेःस

दर्शैवैः शोभाढ्यैः सर्वशस्त्रास्त्रपूरितैः वाजिरत्नसमायुक्तैर्ययुस्ते राक्षसाधमम् १ तान्दृष्ट्वा कामगेयानेस्थितः प्रोवाच राक्षसः मेघगंभीरया वाचा तर्जयन्निव भूरिशः २ मायातु रूभटायोद्धुं गच्छंतु निजमंदिरम् मा स जंतु स्वकान्प्राणान्मोक्ष्ये वाजिनवरम् ३ विद्युन्मालीति विख्यातो रावणस्य सुहृत्सखा मत्सरस्तुः परमा तस्य निष्कृतिं कर्तुमयिवान् ४ क्वासौ रामो ममाहन्यात्सरवाहं रावणं बली तस्य भ्राता पि कुत्रास्ते सर्वशूरशिरोमणिः ५ तं हत्वा निष्कृतिं तस्य प्राप्स्ये रामस्य चानुजम् पिबन्रुधिरमुद्भूतकंठनालस्य बुद्बुदैः ६ इति वाक्यं समाकर्ण्य योधानां प्रवरोत्तमः पुष्कलो निजगादेनं वीर्यशौर्यसमन्वितः ७ पुष्कल उवाच विकत्थनं न कुर्वीत संग्रामे सुभटो नरः पराक्रमं दर्शयति निजशस्त्रास्त्रवर्षणैः ८ रावणो निहतो येन स सुहृत्त्वं जनैर्वृतः तस्य वाजिनमाहृत्य कुत्र गंतासि दुर्मद ९ पतिष्यसि त्वं शत्रुघ्न बाणैः कोदंडनिर्गतैः त्वां भक्ष्यंति शिवा भूमौ पतितं प्राणवर्जितम् १० मा गर्ज दुष्ट रामस्य सेवके मयि संस्थिते गर्जति सुभटो युद्धे शत्रुं जित्वा महोदयात् ११ शेष उवाच एवं ब्रुवंतं तं वीरं पुष्कलं रणदुर्मदम् जघान शक्त्या सुभृशं हृदि राक्षससत्तमः १२ आयांतीं तां महाशक्तिमायसीं कांचनाश्रितां चिच्छेद त्रिभिरत्युग्रैः शितैर्बाणैः सुपुष्कलः १३ सा त्रिधा न्यपतद्भूमौ विशिखैर्निःप्रभाकृता पतंती वीरराजासौ विष्णोः शक्तिस्त्रयीविक्रम १४ तां छिन्नां शक्तिकां दृष्ट्वा राक्षसः परतापनः जग्राह शूलं तरसा त्रिशिखं लोहनिर्मितम् १५ तीक्ष्णाग्रं ज्वलनप्रख्यं राक्षसेंद्रो व्यमोचयन् आयांतं तिलशश्चक्रे बाणैः पुष्कलसंज्ञितः १६ छित्वा त्रिशूलं तरसा राघवस्य हि सेवकः पुष्कलश्चापि आधत्त बाणान्तीक्ष्णान्मनोजवान् १७ ते बाणा हृदि तस्याशु लग्ना रागं बतासृजन् वैष्णवस्य यथा स्वांते गुणा विष्णोर्मनोहराः १८ बाणव्यथा सुदुःखार्तो विद्युन्माली सुदुर्मदः जग्राह मुद्गरं घोरं पुष्कलं हंतुमुद्यतः १९ मुद्गरः प्रसृतस्तेन विद्युन्माल्यपि धेनिहि हृदि लग्नोसृजत् शीघ्रं कश्मलं तस्य धन्विनः २० मुद्गरप्रहतो वीरः कंपमानः सवेपथुः पपात स्यंदनोपस्थे पुष्कलः शत्रुतापनः २१ उग्रदंष्ट्रोथ तद्भ्राता लक्ष्मीनिधिमयोधयत् शस्त्रैर्बहु-

विधैर्मुक्तैर्वैरिप्राणहृतिंकरैः २२ पुष्कलस्तत्क्षणात्प्राप्यसंज्ञांराक्षसमब्रवीत् धन्योसिराक्षसश्रेष्ठमहीयांस्तेपराक्रमः २३
पश्येदानींममाप्रोच्चैःप्रतिज्ञांशूरमानिताम् विमानात्पातयाम्यद्यभूमौत्वांशितसायकैः २४ इत्युक्त्वानिशितंबाणंसमगृण्हा-
द्दुरासदम् ज्वलंतमग्नितेजस्कंमहोदार्यसमन्वितम् २५ सयावत्तत्प्रतीकर्तुंविधत्तेस्वपराक्रमम् तावत्तद्धृदिगतोत्युग्र-
स्तीक्ष्णधारःससायकः २६ तेनबाणेनविभ्रांतोभ्रमच्चित्तःसराक्षसः पपातकामगोपस्थाद्भूमौविगतचेतनः २७ उग्र
दंष्ट्रेनवैदृष्टोपतमानोनिजाग्रतः गृहीत्वातंविमानात्तनिनायरिपुशंकितः २८ आहचारिंमहारोषात्पुष्कलंबलिनांवरम् म
द्भ्रातरंपातयित्वाकुत्रयासिस्फदुर्मते २९ मांवैयुधिविनिर्जित्यगंतासिजयमुत्तमम् स्थितेमयितवस्वांतेजयाशाविनिवर्ततांम्
३० एवंब्रुवततरस्तंजघानदशभिःशरैः हृदयेतस्यदुष्टस्यरोषपूरितलोचनः ३१ सताडितोदशशरैःपुष्कलेनमहात्म-
ना चुक्रोधहृदिदुर्बुद्धिस्तूंहंतुमुपचक्रमे ३२ दंताभिर्षिष्प्यसक्रोधोमुष्टिमुद्यम्यचाहनत् व्यनदद्वज्रनिर्घातपातशंकास्व
जन्हृदि ३३ मुष्टिनाभिहतोवीरःपुष्कलःपरमास्त्रवित् नाकंपतविनिर्लेशंवाञ्छन्तस्यदुरात्मनः ३४ वत्सदंतान्महातीक्ष्णा
न्मुमोचतद्धृदिसायकान् तैर्बाणैर्व्यथितोदैत्योत्रिशूलंतुसमाददे ३५ जाज्वल्यमानंविशिखज्वालामालातिभीषणम् क्षिप
त्तद्धृदिमहावीरःपुष्कलस्यतुदारुणम् ३६ मूर्छितस्तेनशूलेननिहतोधन्विसत्तमः कश्मलंपरमंप्राप्तःपपातस्यंदनोपरि ३७
मूर्च्छांप्राप्तंतमाज्ञायहनूमान्पवनात्मजः कोपव्याकुलितःस्वांतेबभाषेतंतुराक्षसम् ३८ कुत्रगच्छसिदुर्बुद्धेमयियोद्धरि
संस्थिते त्वांहन्मिचरणाघातैर्वाजिहर्तारमागतम् ३९ एवमुक्त्वामहादैत्यंजघानपरसैनिकान् विमानस्थान्नखाग्रेण
दारयन्नभसिस्थितः ४० लांगूलेनाहताःकेचित्केचित्पादतलाहताः बाहुभ्यांदारिताःकेचित्पवनस्यतनूभुवा ४१ न
श्यंतिकेचिन्निहताःकेचिन्मूर्च्छंतिसहताः पलायंतपदाघातभयंपीडाहतास्ततः ४२ अनेकेनिहतास्तत्रराक्षसाश्चातिदा
रुणाः छिन्नाभिन्नाद्विधाजाताःपवनस्यसुतेनवै ४३ कामगंतुविमानंतद्भिन्नप्राकारतोरणम् हाहाकुर्वद्भिरसुरैः

समंतात्परिवारितम् ४४ हनूमतिमहाशूरेक्षणंभूमौक्षणंदिवि इतस्ततःप्रदृश्येतकामयानंदुरासदम् ४५ यत्रयत्रविमानंतत्रतत्रसमीरजः प्रहरंन्नेवदृश्येतकामरूपधरःकपिः ४६ एवंतदाकुलीभूतेविमानस्थेमहाजने उग्रदंष्ट्रस्तुदैत्येंद्रोहनूमंतमुपेयिवान् ४७ कपेत्वयामहत्कर्मकृतंयद्दृढपातनम् क्षणंतिष्ठसिचेत्कुर्वेतवप्राणवियोजनम् ४८ एवमुक्त्वाहनूमंतप्रजहारसुदुर्मतिः त्रिशूलेनसुतीक्ष्णेनज्वलत्पावककांतिना ४९ तदागतंत्रिशूलंसमुरवेजग्राहवीर्यवान् चूर्णयामाससकलंसर्वलोहविनिर्मितम् ५० चूर्णयित्वात्रिशूलंसतदास्यमृचोदितम् जघानतंचपेटाभिर्बह्वीभिर्हनुमान्बली ५१ सआहतःकपींद्रेणचपेटाभिरितस्ततः व्यथितोव्यसृजन्मायासर्वलोकभयंकरीम् ५२ तदानभोभवत्तीव्रंयत्रकोवानदृश्यते यत्रस्त्रीयोनपारक्यासैनिकःकोपिलक्ष्यते ५३ शिलाःपर्वतशृंगाभाःपततिस्मसदोपरि ताभिर्हतास्तुतेसर्वेव्याकुलाःसमजज्ञिरे ५४ विद्युतोविलसंत्यत्रगर्जंतिजलदाघनम् वर्षंतिपूयरुधिरंमुंचंतिसकलंजलम् ५५ आकाशात्पतमानानिकबंधानिबहूनिच दृश्यंतेछिन्नशीर्षाणिसकुंडलयुतानिच ५६ नग्नाविरूपाःस्मश्मश्रुशीर्णकेशाःस्मदुर्मुखाः दृश्यंतेसर्वतोदैत्यादारुणाभयकारिणः ५७ तदाव्याकुलितालोकाःपरस्परभयाकुलाः पलायनपराजातामहोत्पातमपस्यत ५८ तदाशत्रुघ्नसेनानीरथेस्थित्वामहायशाः श्रीरामस्मरणंकृत्वाचापेसंधायसायकान् ५९ तामायांसंविधूयाथमोहनास्त्रेणवीर्यवान् शरधाराःकिरन्व्योम्निववर्षसमरेस्फुरम् ६० तदादिशःप्रसेदुस्तारविस्तुपरिवृंहयन् मेवायथागतयाताःपुष्कलःशांतिमागतः ६१ तदाविमानंपुरतोदृश्यतेराक्षसैर्युतम् छिंधिभिंधीतिभाषाभिर्व्याकुलस्मृतरामहत् ६२ बाणाश्चशतसाहस्राःस्वर्णपुंखेश्वशोभिताः पेतुर्विमानेनभसिस्थितकामगमेमुहुः ६३ तदाभग्नंविमानंतत्दृश्यतेयत्तदुच्चकैः त्रिपुरःखंडमेकत्रभग्नागमिवभूतले ६४ तदाप्रकुपितोदैत्याबाणान्नुषिसंदधे तैर्बाणैर्विकिरन्रामभ्रातरंरणमध्यगम् ६५ तेबाणाःशतसाहस्रालग्नावपुषिभूरिशः शोभामापुःशोणितौघान्वहंतस्तीक्ष्णवक्रिणः ६६ शत्रुघ्नःपरयाशक्त्या

संयुक्तोवायुदैवतम् अस्त्रंधनुषिचाधत्तराक्षसानांप्रकंपनम् ६७ तेनास्त्रेणविमानस्थाःपतंतोमुक्तमूर्द्धजाः दृश्यंते
भूतवेतालभूताःप्रेतनिशाचराः ६८ तदस्त्रंरघुनाथस्यभ्रात्रामुक्तंविलोक्यच अस्त्रंचापाशुपत्यंसचापेधाद्रनुजात्मजः
६९ ततःप्रवृत्तावेतालाभूताःप्रेतनिशाचराः कपालकर्त्तरीयुक्तापिबंतःशोणितंबहु ७० तेवैशत्रुघ्नवीराणांरुधिराणिप्र-
पुर्मुदा जीवतामपिदुर्वाराःकर्त्तरीपाणिशोभिताः ७१ तदस्त्रंव्याप्नुवंदृष्ट्वासर्ववीरप्रभंजनम् मुमोचतन्निरासायचास्त्रं
नारायणाभिधम् ७२ नारायणास्त्रंतान्सर्वान्वारयामासतत्क्षणात् तेसर्वेविलयंप्रापुर्निशाचरप्रणोदिताः ७३ तदा
क्रुद्धोनिशाचारीविद्युन्मालीसमाददे त्रिशूलंनिशितंघोरंशत्रुघ्नंहंतुमुल्बणम् ७४ शूलहस्तंसमायांतंविद्युन्मालिनमाह-
वे सायकैःप्रहरतस्यभुजावधःशशिप्रभैः ७५ तद्बाणैश्छिन्नहस्तश्चशिरसाहंतुमुद्यतः नयाहियाहिशत्रुघ्नकरस्त्रानाद्य
भविष्यति ७६ इतिब्रुवाणंतरसाचिच्छेदशितसायकैः मस्तकंतस्यबलिनःशूरस्यसहकुंडलम् ७७ तच्छिन्नशिरसं
दृष्ट्वाउग्रदंष्ट्रःप्रतापवान् मुष्टिनाहंतुमारेभेशत्रुघ्नंक्रूरसेवितम् ७८ शत्रुघ्नस्तुक्षुरप्रेणसायकेनाच्छिनच्छिरः प्रधा-
वतारणेचाहनन्सर्वशस्त्रास्त्रकोविदान् ७९ हतशेषाययुःसर्वेराक्षसानाथवर्जिताः शत्रुघ्नंप्रणिपत्याथददुर्वाजिनमाहृ-
तम् ८० ततोवीणानिनादाश्चशंखनादाःसमंततः श्रूयंतेशूरवीराणांजयनादामनोहराः ८१ इतिश्रीपद्मपुराणेपाता
लखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेसुमालीनामराक्षसपराजयोनामचतुस्त्रिंशतितमोऽध्यायः ३४ शेषउवाच प्रा
प्यतंवाजिनंराजाशत्रुघ्नोराक्षसैर्हृतम् अत्यंतहर्षमापेदेपुष्कलेनसमन्वितः १ रुधिरैःसिक्तगात्रास्तेयोधालक्ष्मीनिधि-
स्तदा रणोत्साहेनसंयुक्तप्रशशंसुर्महान्नृपम् २ हतेतस्मिन्महादैत्येविद्युन्मालिनिदुर्जये सुराःसर्वेभयंत्यक्त्वासुखमा
पुर्महत्तमम् ३ नद्यस्तुविमलाजातारविस्तुविमलोभवत् वातावबुःसुगंधाढ्याःसिक्ताविमलविप्रुषैः ४ सन्नद्धास्ते
महावीरारथस्थाविमलांगकाः राजानमूचुस्तेसर्वेजयलक्ष्म्यासमन्विता ५ राजानऊचुः दिष्ट्याहतस्त्वयादैत्योविद्यु-

न्मातीमहामते यद्भयात्त्रासमापन्नाःसुराःस्वर्गान्निराकृताः ६ हृस्याप्राप्तोमहावाजीरघुनाथस्यशोभितः दिष्ट्यागंतासिसर्वत्रज
यंतुक्षितिमंडले ७ स्वामिन्मुचत्विमवाहमनोवेगमनोरमम् समयस्यविलंबोमाभवत्तत्रमहामते ८ शेषउवाच इतिश्रु-
त्वातुतद्वाक्यंवीराणांसमयोचितम् साधुसाधुप्रशंस्यैतान्मुमोचहयसत्तमम् ९ समुक्तोश्वोत्तरामाशांबभ्रामरथरक्षितः रथपत्तिह
यैःश्रेष्ठैःसर्वशस्त्रास्त्रकोविदैः १० तत्रयद्वृत्तमेतस्यशत्रुघ्नस्यमनोहरम् वात्स्यायनशृणुष्वैतत्पापराशिप्रदाहकम् ११ रेवा-
तीरमथाप्राप्तोमुनिवृंदनिषेवितम् नीलरत्नसमूहस्यसरःकिंतुपयोभिधाम् १२ तान्तान्मुनिवरान्सर्वान्प्रणमन्शूरसेवितः
जगामहयरत्नस्यपृष्ठतःकामगामिनः १३ गच्छंस्तत्राश्रमंजीर्णंपलाशपर्णविनिर्मितम् रेवायाजलकल्लोलैःसिक्तंपापहरा-
श्रयम् १४ तंदृष्ट्वासुमतिंप्राहसर्वज्ञंनयकोविदम् शत्रुघ्नःसर्वधर्मार्थकर्मकर्तव्यकोविदः १५ राजोवाच मंत्रिन्कथ
यकस्यायमाश्रमःपुण्यदर्शनः विचारचतुरश्रेष्ठवदेतन्ममपृच्छतः १६ शेषउवाच इतिवाक्यंसमाकर्ण्यसुमतिःप्राहतन्नृपम्
विशदस्मेरयावाचादर्शयन्नात्मसौहृदम् १७ सुमतिरुवाच एनंदृष्ट्वामहाराजधूतपापावयंखलु भविष्यामोमुनिश्रेष्ठंसर्वशा-
स्त्रपरायणम् १८ तस्मान्नत्वातमापृच्छसर्वंसकथयिष्यति रघुनाथपदांभोजमकरंदातिलोलुपः १९ नाम्नात्वारण्यकंख्या-
तंरघुनाथाङ्घ्रिसेवकम् अत्युग्रतपसापूर्णंसर्वशास्त्रार्थकोविदम् २० इतिश्रुत्वातुतद्वाक्यंधर्मार्थपरिबृंहितम् जगामतम-
थोद्रष्टुंस्वल्पसेवकसंयुतः २१ हनूमान्पुष्कलोवीरःसुमतिर्मंत्रिसत्तमः लक्ष्मीनिधिःप्रतापाग्र्यःसुबाहुःसुमदस्तथा २२ एतैः
परिवृतोराजाशत्रुघ्नःप्रापदाश्रमम् नमस्कर्तुंद्विजवरमारण्यकमुदारधीः २३ गत्वाततापसश्रेष्ठंनमस्कारमथाकरोत् सर्वैस्तैः
सहितोवीरैर्विनयानतकंधरैः २४ तान्दृष्ट्वासन्नतान्सर्वान्शत्रुघ्नप्रमुखान्नृपान् अर्घ्यपाद्यादिकंचक्रेफलमूलादिभिस्ततः
२५ उवाचतान्नृपान्सर्वान्भवंतःकुत्रसंगताः कथमत्रसमायातास्तत्सर्वंवदतानघाः २६ तच्छ्रुत्वावाक्यमेतस्यमुनिव
र्यस्यवाडव सुमतिःकथयामासवाक्यवादविचक्षणः २७ सुमतिरुवाच रघुवंशनृपस्यायमश्वोवैपाल्यतेखिलैः यागंक-

रिष्यतेवीरः सर्वसंभारसंभृतम् २८ तच्छ्रुत्वावचनंतस्यजगादमुनिसत्तमः दंतकांत्याखिलंघोरंतमोनिर्वारयन्निव २९ आरण्य
कउवाच किंयागैर्विविधैरन्यैःसर्वसंभारसंभृतैः स्वल्पपुण्यप्रदैर्घोरैःक्षयिष्णुप्रदुदायिभिः ३० मूढोलोकेहरिंत्यक्त्वाकरोत्यन्य
समर्चनम् रघुवीररमानाथस्थिरैश्वर्यपदप्रदम् ३१ योनरैःस्मृतमात्रोपिहरतेपापपर्वतम् तंमुक्त्वाक्लिश्यतेमूढोयागयोगव्र
तादिभिः ३२ अहोपश्यतमूढत्वंलोकानामतिवंचितम् सुलभंराममभजनमुक्त्वादुर्लभमाचरेत् ३३ सकामैर्योगिभिर्वापिचिं
त्यतेकामवर्जितैः अपवर्गप्रदान्नृणांस्मृतमात्राखिलप्रदः ३४ पुराहंतत्वविज्ञानांज्ञानिनांस्वविचारयन् आगमंबहुतीर्थानित-
त्वंकोपिनमेदिशन् नदेकंहिमहद्भाग्यात्प्राप्तोवैलोमशंमुनिम् स्वर्गलोकान्समायातंतीर्थयात्राचिकीर्षया ३६ सत्वरंप्रणिपत्या-
थपर्यपृच्छंमहामुनिम् महायुषमहायोगिसंसेवितपदाद्वयम् ३७ स्वामिन्मयाद्यमानुष्यंप्राप्तमद्भुतदुर्लभम् संसारघोरजल
धिंकिंकर्तव्यंतितीर्षुणा ३८ विचार्यकथयत्वंतद्ब्रूतदानूजपोमखः देवोवाविद्यतेयोवैसंसाराभोधितारकः ३९ यंज्ञात्वासंसृतिं
घोरांतरामित्वत्कृपाश्रितः तन्मेकथययोगीन्सर्वशास्त्रार्थपारग ४० इतिमद्वाक्यमाकर्ण्यजगादमुनिसत्तमः शृणुष्वैकमनाविप्र
श्रद्धयापरयायुतः ४१ संतिदानानितीर्थानिव्रतानिनियमायमा योगायज्ञास्तथानेकेवर्ततेस्वर्गदायकाः ४२ परंगुह्यंप्रवक्ष्या-
मिसर्वपापप्रणाशनम् तच्छृणुष्वमहाभागसंसाराभोधितारकम् ४३ नास्तिकायनवक्तव्यंनचाश्रद्धालवेपुनः निंदकायशठायाथ
नदेयंभक्तिवैरिणे ४४ रामभक्तायशांतायकामक्रोधवियोगिने वक्तव्यंसर्वदुःखस्यनाशकारकमुत्तमम् ४५ रामान्नास्तिपरोदे-
वोरामान्नास्तिपरंव्रतम् नहिरामात्परोयोगोनहिरामात्परोमखः ४६ तंस्मृत्वाचैवजप्त्वाचपूजयित्वानरःपरः प्राप्नोतिपरमामृद्धिमैहि
कामुष्मिकिंतया ४७ संस्मृतोमनसाध्यातःसर्वकामफलप्रदः ददातिपरमांभक्तिंसंसाराभोधितारिणीम् ४८ श्वपाकोपिहिसं
स्मृत्यरामंयातिपरांगतिम् येवेदशास्त्रनिरतास्त्वादृशास्तत्रकिंपुनः ४९ सर्वेषांवेदशास्त्राणांरहस्यंतेप्रकाशितम् समाचरतयाल
हियथास्यात्तेमनीषितम् ५० एकोदेवोरामचंद्रोव्रतमेकंतदर्चनम् मंत्रोप्येकश्चतन्नामशास्त्रंतद्ध्येवतत्स्मृतिः ५१ तस्मात्सर्वा

त्मनारामचंद्रंभजमनोहरम् यथागोष्पदवत्तुच्छोभवेत्संसारसागरः ५२ श्रुत्वामयातुतद्वाक्यंपुनःप्रश्नमकर्षितम् कथंवाध्याय
तेदेवःकथंवापूज्यतेनरैः ५३ कथयस्वमहाबुद्धेसर्वज्ञममविस्तरात् यज्ज्ञात्वाहंकृतार्थःस्यांत्रिलोक्यांमुनिसत्तम ५४ एतच्छ्रु
त्वातुतद्वाक्यंविचार्यसतुलोमशः कथयामासमेसर्वेरामध्यानपुरःसरम् ५५ शृणुविप्रेंद्रवक्ष्यामियत्पृष्टंतुत्वयानघ यथातुध्येद्र
मानायोसंसारज्वरदाहकः ५६ अयोध्यानगरेरम्येचित्रमंडपशोभिते ध्यायेत्कल्पतरोमूलेसर्वकामसमृद्धिदे ५७ महामरकतस्व
र्णनीलरत्नादिशोभिते सिंहासनेचित्तहरंकांत्यातामिस्रनाशनम् ५८ तस्योपरिसमासीनंरघुराजमनोरमम् दूर्वादलश्यामतनुं
देवदेवेंद्रपूजितम् ५९ राकायांपूर्णशीतांशुकांतिधिक्कारिवक्त्रिणम् अष्टमीचंद्रशकलसमभालाधिधारिणम् ६० नील
कुंतलशोभाढ्यंकिरीटमणिरंजितम् मकराकारसौंदर्यकुंडलाभ्यांविराजितम् ६१ विद्रुमच्छविसत्कांतिरदच्छदविराजित
म् तारापतिकराकारद्विजराजिसुशोभितम् ६२ जपापुष्पाभयामाध्व्याजिह्वयाशोभिताननम् यस्यांवसंतिनिगमाऋग्गा
द्याःशास्त्रसंयुताः ६३ कंबुकांतिधरग्रीवाशोभयासमलंकृतम् सिंहवदुच्चकौस्कंधौमांसलौबिभ्रतंवरम् ६४ बाहूदधानं
दीर्घांगौकेयूरकटकांकितौ मुद्रिकाहीरशोभाभिर्भूषितौजानुलंबिनौ ६५ वक्षोदधानंविपुलंलक्ष्मीवासेनशोभितम् श्रीवत्सादिवि
चित्रांकैरंकितंसुमनोहरम् ६६ मनोहरोदरंनाभिशुभकट्याविराजितम् कांच्यावैमणिमत्याचविशेषेणश्रियान्वितम् ६७ ऊ
रुभ्यांविमलाभ्यांवैजानुभ्यांशोभितंश्रिया चरणाभ्यांवज्ररेखायवांकुशरेखया ६८ युताभ्यांयोगिध्येयाभ्यांकोमलाभ्यां
विराजितम् ध्यात्वास्मृत्वाचसंसारसागरंत्वंतरिष्यसि ६९ तावत्पूजयेन्नित्यंचंदनादिभिरिच्छया प्राप्नोतिपरमामृद्धिमैहिका
मुष्मिकींवराम् ७० त्वयापृष्टंमहाराज्ञोरामस्यध्यानमुत्तमम् तत्तेकथितमेतद्धिसंसारजलधितर ७१ इतिश्रीपद्मपुराणेपाता
लखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेलोमेशआरण्यकसंवादोनामपंचत्रिंशतितमोऽध्यायः ३५ शेषउवाच एतच्छ्रुत्वातुवि
प्रेंद्रोलोमशात्परमंमहत् पुनःपप्रच्छतमृषिंसर्वज्ञंयोगिनांवरम् १ आरण्यकउवाच मुनिश्रेष्ठवदेतन्मेपृच्छामियदमेयधीः

गुरवःकृपयायुक्ताभाषंतेसेवकेखिलम् २ कोसौरामोमहाभागयोनित्यंध्यायतेत्वया तस्यकानिचरित्राणिवदसित्वंद्विजर्षभ ३
किमर्थमवतीर्णोसौकस्मान्मानुषतांगतः तत्सर्वंकथयाशुत्वंममसंशयनुत्तये ४ शेषउवाच इतिवाक्यंसमाकर्ण्यमुनेःपरमशोभ
नम् लोमशःकथयामासरामचारित्रमद्भुतम् ५ लोकान्निरयसंमग्नान्ज्ञात्वायोगेश्वरेश्वरः कीर्तिंप्रथयितुंलोकेययाघोरंतरि
ष्यति ६ एवंज्ञात्वादयावार्धिःपरमेशोमनोहरः अवतारंचकारात्रचतुर्धासश्रियान्वितः ७ पुरात्रेतायुगेप्राप्तेपूर्णांशोरघुनंदनः
सूर्यवंशेसमुत्पन्नोरामोराजीवलोचनः ८ सरामोलक्ष्मणस्सखःकाकपक्षधरोयुवा तातस्यवचनात्तौतुविश्वामित्रमनुव्रतौ ९
यज्ञसंरक्षणार्थायराज्ञादत्तौकुमारकौ दांतौधनुर्धरौवीरौविश्वामित्रमनुस्मृतौ १० पथिप्रव्रजतोस्तत्रताटकानामराक्षसी संगता-
च्चवनेघोरे तयोर्वैविघ्नकारणात् ११ ऋषेरनुज्ञयारामस्ताटकांयमयातनाम् प्रावेशयद्धनुर्वेदविद्याभ्यासेनराघवः १२ य
स्यपादतलस्पर्शाच्छिलावासवयोगजा अहल्यागौतमवधूःपुनर्जातासुरूपिणी १३ विश्वामित्रस्ययज्ञेतुसुप्रवृत्तेरघूत्तमः मा
रीचंचसुबाहुंचजघानपरमेषुभिः १४ ईश्वरस्यधनुर्भंग्यजनकस्यगृहेस्थितम् रामःपंचदशेवर्षेषड्वर्षामथमैथिलीम् १५ उपयेमे
विवाहेनरम्यांसीतामयोनिजाम् कृतकृत्यस्तदाजातःसीतांसंप्राप्यराघवः १६ ततोद्वादशवर्षाणिरेमेरामस्तयासह सप्तविंशतिमे
वर्षेयौवराज्यमकल्पयत् १७ राज्ञानमथकैकेयीवरद्वयमयाचत तयोरेकेनरामस्तुससीतःसहलक्ष्मणः १८ जटाधरःप्रव्राजितोवर्षा-
णीहचतुर्दश भरतस्तुद्वितीयेनयौवराज्याधिपोस्तुमे १९ जानकीलक्ष्मणसखरामंप्राव्रजयन्नृपः त्रिरात्रमुदकाहारश्चतुर्थेह्निफला
शनः २० पंचमेचित्रकूटेतुरामस्थानमकल्पयत् अथत्रयोदशेवर्षेपंचवट्यांमहामुने २१ रामोविरूपयामासशूर्पणखांनिशाचरी
म् वनेविचरतस्तस्यजानक्यासहितस्यच २२ आगतोराक्षसस्तांतुहर्तुपापविपाकतः ततोमाघसितेष्टम्यांमुहूर्तेवृंदसंज्ञिते २३
राघवाभ्यांविनासीतांजहारदशकंधरः तेनैवंह्रियमाणासाचक्रंदकुररीयथा २४ रामरामेतिमांरक्षरक्षमांरक्षसाहृताम् यथाश्येनःक्षु-
धार्त्तःक्रंदंतींवर्हिकांनयेत् २५ तथाकामवशंप्राप्तोरावणोजनकात्मजाम् नयत्येवंजनकजांजटायुःपक्षिराट्तदा २६ सुयुधे

राक्षसेंद्रेणसरावणहृतोपतत् मार्गशुक्लनवम्यांतुवसतींरावणालये २७ संपातिर्दशमेमासिआचचक्षेयवानरान् एकादश्यांमहेंद्रात्तुपुप्लुवेशतयोजनम् २८ हनूमान्निशितस्यांतुलंकायांपर्यकालयत् तद्रात्रिशेषेसीतायादर्शनंहिहनूमतः २९ द्वादश्यांशिंशपावृक्षेहनूमान्पर्यवस्थितः तस्यांनिशायांजानक्याविश्वासालापसंकथा ३० अक्षादिभिस्त्रयोदश्यांततोयुद्धमवर्तत ब्रह्मास्त्रेणचतुर्दश्यांबद्धःशक्रजिताकपिः ३१ वह्निनापुच्छयुक्तेनलंकायांदहनंकृतम् पूर्णिमायांमहेंद्राद्रौपुनरागमनंकपेः ३२ मार्गशुक्लप्रतिपदःपंचभिःपथिवासरैः पुनरागत्यषष्ठेन्हिध्वस्तंमधुवनंकिल ३३ सप्तम्यांप्रत्यभिज्ञानदानंसर्वनिवेदनम् अष्टम्युत्तरफल्गुन्यांमुहूर्तेविजयाभिधे ३४ मध्येप्राप्तेसहस्रांशौप्रस्थानंराघवस्यच रामःकृत्वाप्रतिज्ञांतुप्रयातोदक्षिणांदिशम् ३५ तीर्त्वाहंसागरंमाहनिष्येराक्षसेश्वरम् दक्षिणायांप्रयातस्यसुग्रीवोप्यभवत्सखा ३६ वासरैःसप्तभिःसिंधोःस्कंधावारनिवेशनम् पौषशुक्लप्रतिपदस्तृतीयायावदंबुधेः ३७ उपस्थानंससैन्यस्यराघवस्यबभूवह बिभीषणश्चतुर्थ्यांतुरामेणसहसंगतः ३८ समुद्रतरणायायपंचम्यांमंत्रउद्यतः प्रायोप्रवेशनंचक्रेरामोदिनचतुष्टयम् ३९ समुद्रवरलाभश्चसहोपायप्रदर्शनं ततोदशम्यामारभ्यत्रयोदश्यांसमापनम् ४० चतुर्दश्यांसुवेलाद्रौरामःसैन्यंन्यवेशयत् पौर्णमास्याद्वितीयांतंत्रिदिनैःसैन्यतारणम् ४१ तीर्त्वातोयनिधिंरामोवानरेश्वरसैन्यवान् रुरोधचपुरींलंकांसीतार्थंसहलक्ष्मणः ४२ तृतीयादिदशम्यंतंनिवेशश्चदिनाष्टकम् शुकसारणयोस्तत्रप्राप्तिरेकादशीदिने ४३ पौषासितारव्यांद्वादश्यांसैन्यसंख्यानमेवच शार्दूलेनकपींद्राणांसहसारोपवर्णनम् ४४ त्रयोदश्याममावास्यालंकायांदिवसैस्त्रिभिः रावणःसैन्यसंख्यानंरणोत्साहंतदाकरोत् ४५ प्रययावंगदोदौत्येमाघशुक्लाद्यवासरे सीतायाश्चततोभर्तुर्मायामूर्द्धादिदर्शनम् ४६ माघशुक्लतृतीयायादिनैःसप्तभिरष्टमीम् राक्षसैर्वानराणांचयुद्धमासचसंकुलम् ४७ माघशुक्लनवम्यांतुरात्राविंद्रजितारणे रामलक्ष्मणयोर्नागपाशबंधःकृतःकिल ४८ आकुलेषुकपीशेषुनिरुत्साहेषुसर्वशः नागपाशविमोक्षार्थंदशम्यांपवनोजपत् ४९ कर्णेस्वरूपंरामस्यगरुडागमनंततः एकादश्यांचद्वादश्यांधूम्राक्षस्यवधःकृतः ५० त्रयोदश्यांतुतेनैवनिह-

नःकंपनोरणे माघशुक्लचतुर्दश्यायावत्कृष्णादिवासरम् ५१ त्रिदिनेनप्रहस्तस्यनीलेनविहितोवधः माघकृष्णद्वितीयायाश्चतुर्थ्यां
तुत्रिभिर्दिनैः ५२ रामेणतुमुलेयुद्धेरावणोद्राविताेरणात् पंचम्याअष्टमीयावद्रावणेनप्रबोधितः ५३ कुंभकर्णस्तदाचक्रेऽभ्यवहा-
रंत्रिभिर्दिनैः कुंभकर्णोदिनैःषड्भिर्नवम्याश्चचतुर्दशीम् ५४ रामेणनिहतोयुद्धेबहुवानरभक्षकः अमावास्यादिनेशोकदवहारोबभू-
वह ५५ फाल्गुनादिप्रतिपदश्चतुर्थ्यंतंचतुर्दिनैः इंद्रजित्प्रमुखास्तत्रनिहताःपंचराक्षसाः ५६ पंचम्याःसप्तमीयावदतिकायवधस्तथा
अष्टम्याद्वादशीयावन्निहतौदिनपंचकात् ५७ निकुंभकुंभौबद्धस्तुमकराक्षस्त्रिभिर्दिनैः फाल्गुनासितद्वितीयादिनेशक्रजिताजित
म् ५८ तृतीयादिसप्तम्यंतंदिनपंचकमेवच औषध्यानयनव्यग्रादवहारोबभूवह ५९ ततस्त्रयोदशीयावद्दिनैःपंचभिरिंद्रजित्
लक्ष्मणेनहतोयुद्धेविख्यातबलपौरुषः ६० चतुर्दश्यांदशग्रीवोदीक्षांप्रापावहारतः अमावास्यादिनेप्रायाद्युद्धायदशकंधरः ६१
चैत्रशुक्लप्रतिपदःपंचमीदिनपंचकैः रावणेयुध्यमानेतुप्रचुरोरक्षसांवधः ६२ चैत्रषष्ठ्याष्टमीयावन्महापार्श्वादिमारणम् चैत्रशुक्लन
वम्यांतुसौमित्रेःशक्तिभेदनम् ६३ कोपाविष्टेनरामेणद्रावितोदशकंधरः द्रोणाद्रिराजानयनेलक्ष्मणार्थमुपाकृतः ६४ दशम्यामवहा
रोभूद्रात्रौयुद्धेतुरक्षसाम् एकादश्यांतुरामायरथंमातलिसारथिः ६५ प्रेरितोवासवेनाजावर्षयामासभक्तितः कोपवानथद्वादश्या
यावत्कृष्णचतुर्दशी ६६ अष्टादशदिनैर्रामोरावणंद्वैरथेवधीत् संग्रामेतुमुलेजातेरामोजयमवाप्तवान् ६७ माघशुक्लद्वितीयायाश्चैत्र
शुक्लचतुर्दशीम् सप्तर्तिर्दिनसंख्यात्रमध्यंपंचदशाहकम् ६८ युद्धावहारःसंग्रामेद्विसप्ततिदिनान्यभूत् संस्कारोरावणादीनाममावा
स्यादिनेभवत् ६९ वैशाखादितिथौरामउवासरणभूमिषु अभिषिक्तोद्वितीयायांलंकाराज्येविभीषणः ७० सीताशुक्लतृतीयायांदे
वम्योवरलंभनम् हत्वाचिरेणलंकेशंलक्ष्मणाग्रजएवच ७१ गृहीत्वाजानकींपुण्यांदुःखितांराक्षसेनतु आदायपरयाप्रीत्याजानकींसन्य
वर्तत ७२ वैशाखस्यचतुर्थ्यांतुरामःपुष्पकमाश्रितः विहायसानिवृत्तस्तुभूयोयोध्यांपुरींप्रति ७३ पूर्णचतुर्दशेवर्षेपंचम्यांमाधव-
स्यतु भरद्वाजाश्रमेरामःसगणःसमुपाविशत् ७४ नंदिग्रामेतुषष्ठ्यांसभरतेनसमागतः सप्तम्यामभिषिक्तोसौभूयोयोध्यांरघूद्वह

७५ दशैकाधिकमासांतुचतुर्दशाहमैथिली उवास रामरहिताराबणस्यनिवेशने ७६ द्विचत्वारिंशकेवर्षेरामोराज्यमकारयत् सी
तायाश्चत्रयस्त्रिंशद्वत्सराश्चतदाभवत् ७७ सचतुर्दशवर्षांतेप्रविश्यस्वांपुरींप्रभुः आयोध्यांमुदितोरामोहत्वारावणमाहवे ७८ भ्रातृ
भिःसहितस्तत्ररामोराज्यमकारयत् सीतापार्श्ववतस्तस्यपुरोधावदतांवरः ७९ अगस्त्यःकुंभसंभूतिस्तमागंनारघोःपतिम् तद्वाक्या
द्रघुनाथोसौकरिष्यतिहयक्रतुम् तस्यागमिष्यतिहयःआश्रमेतवसुव्रत तेषांयोधाःप्रमुदिताआयास्यंतितवाश्रमम् ८१ तेषांमध्येरामक
थाःकरिष्यंतिमनोहराः तैःसाकंत्वमयोध्यायांगंतासित्वंद्विजर्षभ ८२ द्रक्ष्यसिरामममयोध्यायांपद्मपत्रनिभेक्षणम् तद्दर्शनादेवसंसारवार्धिनि
स्तरैवेभवान् ८३ इत्युक्त्वासौमुनिवरोलोमशःसर्वबुद्धिमान् उवाचतेकिंप्रष्टव्यंतदहंवच्मितेहितम् ८४ ज्ञातंत्वत्कृपयासर्वंरामचारित्र
मद्भुतम् त्वत्प्रसादादवाप्स्येहंरामस्यचरणांबुजम् ८५ मयानमस्कृतःपश्चाज्जगामसमुनीश्वरः तत्प्रसादान्मयावाप्तंरामस्यचरणांबुज
म् ८६ सोहंस्मरामिरामस्यचरणावन्वहंमुहुः गायामितस्यचरितंमुहुर्मुहुरतंद्रितः ८७ पावयामिजनानन्यांगानेनस्वांतहारिणा ह
ष्यामितन्मुनेर्वाक्यंस्मारंस्मारंतदीक्षया ८८ धन्योहंकृतकृत्योहंसभाग्योहंमहीतले रामचंद्रपदांभोजदिदृक्षामेभविष्यति ८९ तस्मात्स
र्वात्मनारामोभजनीयोमनोहरः वंदनीयोहिसेवार्हःसंसाराब्धितितीर्षया ९० तस्माद्यूयंकिमर्थंहिप्राप्ताःकोवानराधिपः यागंकरोतिधर्मात्मा
हयमेधंमहाक्रतुम् तत्सर्वंकथयंतत्रयातुंवाहस्यपालने स्मरंतुरघुनाथांघ्रिंस्मृत्वास्मृत्वापुनःपुनः ९२ इतिवाक्यंसमाकर्ण्यमुनेर्विस्मयमा
गताः रघुनाथस्मरंतस्तेप्रोचुरारण्यकंमुनिम् ९३ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेलोमशआरण्यकसंवादे
षट्त्रिंशत्तिमोऽध्यायः ३६ शेषउवाच तेपृष्टामुनिवर्येणरामचारित्रमद्भुतम् धन्यंसभाग्यंमन्वानाःप्रोचुरात्मानमादरात् १ जगाद्भुः
पवित्रितावयंसर्वेदर्शनेनतवाधुना यद्रामकथयास्मान्वैपावयस्यधुनाजनान् २ शृणुष्ववचनंतथ्यंभवान्ब्रह्मर्षिसत्तमः त्वयापृष्टंयद
स्माभिःसर्वंतत्कथयामिवै ३ अगस्त्यवाक्यात्श्रीरामोविप्रहिंसापनुत्तये यागंकरोतिसुमहत्सर्वसंभारसंभृतम् ४ तत्पालयानात्सर्वेवै
त्वदाश्रममुपागताः अश्वेनसहिताविप्रतज्जानीहिमहामते ५ इतिवाक्यंसमाकर्ण्यमनोहारिरसायनम् अत्यंतंहर्षमापेदेब्राह्मणो

रामभक्तिमान् ६ अद्यमेफलितोवृक्षोमनोरथश्रियान्वितः अद्यमेजननीधन्याजातामांसुषुवेतुया ७ अद्यराज्यंमयाप्राप्तंकंटकेनविवर्जि
तम् अद्यकोशाःकृसंपन्नाअद्यदेवाःकृतोषिताः ८ अग्निहोत्रफलंत्वद्यप्राप्तंमेहविषाहुतम् यद्द्रक्ष्येरामचंद्रस्यचरणांभोरुहोयुगम् ९
योनित्यंध्यायतेस्वांतेअयोध्यायाःपतिःप्रभुः समेदृग्गोचरोनूनंभविष्यतिमनोहरः १० हनूमान्मांसमालिंग्यप्रेक्षतेकुशलंमम भक्तिमेमह-
तींदृष्ट्वातोषंप्राप्स्यतिसत्तमः ११ इतिवाक्यंसमाकर्ण्यहनूमान्कपिसत्तमः जग्राहपादयुगुलंमुनेरारण्यकस्यहि १२ स्वामिन्हनूमान्-
विप्रर्षेसेवकोहंपुरस्थितः जानीहिरामदासस्यरेणुकल्पंमुनीश्वर १३ इत्युक्तवतितस्मिन्वैमुनिःपरमहर्षितः आलिलिंगहनूमंतरामभ
क्त्याकृशोभितम् १४ उभौप्रेमविनिर्भिन्नौउभावपिसुधाप्लुतौ स्थगितौचित्रलिखिताविवतत्रबभूवतुः १५ उपविष्टौकथास्तत्रचक्रतुःकृ-
मनोहराः रघुनाथपदांभोजप्रीतिनिर्भरमानसौ १६ हनुमांस्तमुवाचेदंवचोविविधशोभनम् आरण्यकंमुनिवरंरामांघ्रिध्याननिर्भरम्
१७ स्वामिन्नयंदशरथकुलदीपांकुरोमहान् रामभ्राताभहाशूरःशत्रुघ्नःप्रणमत्यसौ १८ लवणोयेननिहतोसर्वलोकभयंकरः कृता
श्चकृखिनःसर्वेमुनयःकृतपोधनाः १९ एषपुष्कलनामात्वांनमत्युद्भटसेवितः येनाधुनामहावीराजिताःसमरमंडले २० जानीह्येनं
बहुगुणंरामामात्यंमहाबलम् प्राणप्रियंरघुपतेःसर्वज्ञंधर्मकोविदम् २१ सुबाहुरयमत्युग्रोवैरिवंशदवानलः रामपादांबुजालंबनम
तित्वांमहायशाः २२ कृमदोह्येषपार्वत्यांकृतरामांघ्रिसेवया प्राप्तोधुनासौसंसारवार्धिनिस्तरणंमहत् २३ सत्यवान्राममश्वंयःप्रास
माश्रुत्यसेवकात् राज्यंनिवेदयामाससत्वांप्रणमतिक्षितौ २४ इतिवाक्यंसमाकर्ण्यसमालिंग्यसमादरात् चकारारण्यकऋषिःस्वागतंफ-
लकादिना २५ तेहृष्टास्तत्रवसतिंचक्रुर्मुनिवराश्रमे प्रातर्नित्यक्रियांकृत्वारेजुर्यांतेमहोद्यमाः २६ नरयानमथारोप्यसेवकैःसहितं
मुनिम् शत्रुघ्नःप्रापयामासायोध्यांरामाकृतालयम् २७ सदूरान्नगरींदृष्ट्वासूर्यवंशनृपोषिताम् पदातिरभवद्वेगाद्रघुनाथदिदृक्षया
२८ संप्राप्यनगरींरम्यामयोध्यांजनशोभिताम् मनोरथसहस्रेणसंरूढोरामदर्शने २९ ददर्शतत्रसरयूतीरेमंडपशोभिते रामंदूर्वाद-
लश्यामंकंजकांतिविलोचनम् ३० मृगशृंगंकरैरम्यंधारयंतंश्रियान्वितम् ऋषिवृंदैर्व्यासमुख्यैर्वृतंभ्रातृभिःकृसेवितम् भरतेनकृमित्रा

पास्तन्नृजेनपरीवृतम् ददंतंदीनसंघेभ्योदानानिप्रार्थितानिनितम् ३२ विलोक्यारण्यकाराख्योसौकृतार्थइत्यमन्यत मल्लोचनेषद्यदल
समानेराम लोकके ३३ अथमेसर्वशास्त्रस्यज्ञातृत्वंत्वद्यसार्थकम् येनश्रीराममाज्ञायप्राप्तोयोध्यापुरीमिमाम् ३४ इत्येवमादिवचनानि
बहूनिहृस्वारामांघ्रिदर्शनसुहर्षितगात्रशोभी आयाद्रमेश्वरसमीपमगम्यमन्यैर्योगीश्वरैरपिविचारपरैःसुदूरम् ३५ धन्योहमद्यरामस्य
चरणावक्षिगोचरौ करिष्यामिवचोरम्यंवदन्राममवेक्ष्यच ३६ रामोपिवाडवश्रेष्ठंज्वलंतंस्वेनतेजसा तपोमूर्तिधरंवीक्ष्यप्रत्युत्थानमकल्प
यत् ३७ रामचंद्रस्तस्यपादौसुचिरन्नतवान्महान् ब्रह्मण्यदेवपावित्र्यंकृतमद्यतनोर्मम ३८ इतिवाक्यंवदंस्तस्यपादयोःपतितःप्रभुः
सुरासुरनमन्मौलिमणिनीराजिताघ्रिकाः ३९ प्रणतंतंनृपश्रेष्ठंवाडवेंद्रोमहातपाः गृहीत्वाभुजयोर्मध्यमालिंग्यचप्रियंप्रभुम् ४० कौसल्या
स्तनयस्तंवैउच्चैर्मणिमयासने प्रास्थापयपादयोर्युग्मंजलेनाक्षालयत्प्रभुः ४१ पादावनेजनोदतुमस्तकेधात्धरिःस्वयम् पवित्रितोद्यसगणःस
कुटुंबइतिब्रुवन् ४२ चंदनेनविलेप्याथगांचप्रादात्पयस्विनीम् उवाचचवचोरम्यंदेवदेवेंद्रसेवितः ४३ स्वामिन्मखोमयावाजिमेध
संज्ञःक्रियेतह सोयंत्वच्चरणायानादद्यपूर्णोभविष्यति ४४ अद्यमेब्रह्महत्योत्थपापहानिंकरिष्यति अश्वमेधःक्रतुर्युष्मच्चरणेनपवित्रि
तः ४५ इतिवाक्यंब्रुवाणंतंराजाराजेंद्रसेवितम् आरण्यकउवाचेदंहसन्माध्व्यागिरामुनिः ४६ स्वामिंस्तवतुयुक्तंहिवचोब्रह्मण्य
भूमिप त्वन्मूर्तयोमहाराजब्राह्मणावेदपारगाः ४७ त्वंयदाब्रह्मपूजादिशुभकर्मकरिष्यसि तनोरिवलान्नृपाविप्रपूजयिष्यंतिभूमिप
४८ त्वयोक्तंयन्महाराजविप्रहत्यापनुत्तये यागंकरोमिविमलंतत्तुहास्यकरंवचः ४९ यन्नामस्मरणान्मूढःसर्वशास्त्रविवर्जितः स
र्वपापाब्धिमुत्तीर्यसगच्छेत्परमंपदम् ५० सर्ववेदेतिहासानांसारार्थोयमतिस्फुटः यावन्नरामस्मरणंक्रियतेपापतारकम् ५१ तावद्गर्ज
तिपापानिब्रह्महत्यासमानिच नयावत्प्रोच्यतेनामरामचंद्रतवस्फुटं ५२ त्वन्नामगर्जनंश्रुत्वामहापातककुंजराः पलायंतेमहाराजकुत्रचि
त्स्थानलिप्सया ५३ तस्मात्तवकथंहत्यामहापुरुषदर्शनम् रामत्वत्सुकथांश्रुत्वापूतःसर्वोभविष्यति ५४ मयापूर्वंकृतयुगेगंगायास्तीरवासि
नाम् ऋषीणामुखतोवाक्यंश्रुतमेतत्पुराविदाम् ५५ तावत्पापभियःपुंसांकातराणांसुपापिनाम् यावन्नवदतेवाचारामनाममनोहरम्

५६ तस्माद्धन्योहमधुनामत्तंसंसृतिविनाशनम् सांप्रतंसुलभंरामचंद्रत्वद्दर्शनादभूत् ५७ इत्युक्तवंतंसमुनिंपूजयामासतत्रवै सर्वेमुनिजनाःसाधु
साधुवाक्यमितिब्रुवन् ५८ शेषउवाच अत्याश्चर्यमभूत्तत्रतन्मेनिगदितःशृणु वात्स्यायनमुनिश्रेष्ठरामभक्तिपरायण ५९ रामंदृष्ट्वामहाराजयाहृ
द्ध्यानगोचरम् अत्यंतंहर्षमापन्नोजगादसमुनीश्वरान् ६० मुनीश्वराःसशृणुतमद्वाक्यंसुमनोहरम् मादृशःकोनुभूर्लोकेभविष्यतिसुभाग्यवा
न् ६१ नास्तिमत्सदृशःकोपिनजातोनभविष्यति यद्रामभद्रोमांनत्वास्वागतंपरिपृष्टवान् ६२ तत्पादपंकजरजःश्रुतिमृग्यंसदैवहि सोद्यमत्पाद्ये
पाद्यंपीत्वापूतममन्यत् ६३ एवंप्रवदतस्तस्यब्रह्मस्फोटोभवत्तदा निर्गतंतद्भवंतेजोविवेशरघुनायके ६४ पश्यतांसर्वलोकानांसरयूतीरमंडपे
सायुज्यमुक्तिंसप्राप्तदुर्लभांयोगिभिर्जनैः ६५ दिविनूर्यनिनादोभूद्वीणानादोभवत्तदा पुष्पवृष्टिःपपाताग्रेपश्यतांचित्रमद्भुतम् ६६ मुनयोप्येतद्दि
क्षित्वाप्रशशंसतोमुनीश्वरम् कृतार्थोयंमुनिश्रेष्ठोयद्रामवपुर्वीक्षितः ६७ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेआरण्यकमुनेर्वि
ष्णुलोकगमनोनामसप्तत्रिंशतितमोऽध्यायः ३७ शेषउवाच एतदाख्यानकंश्रुत्वावात्स्यायनउदारधीः परमंहर्षमापेदेजगादचफ
णीश्वरम् १ वात्स्यायनउवाच कथांसंशृण्वतेमह्यंतृप्तिर्नास्तिफणीश्वर रघुनाथस्यभक्तार्त्तिहारिकीर्तिकरस्यवै २ धन्योवारण्य
कोनाममुनिर्वेदधरःपरः रघुनाथंसमालोक्यदेहंतत्याजनश्वरम् ३ ततोराज्ञोहयःकुत्रगतःकेननियंत्रितः कथंतत्ररमानाथकी
र्तिर्जाताफणीश्वर ४ सर्वंकथयतत्तथ्यंसर्वज्ञोसियतोमम धराधरवपुर्धारीसाक्षात्तस्यस्वरूपधृक् ५ व्यासउवाच इतिवा
क्यंसमाकर्ण्यप्रहृष्टेनांतरात्मना उवाचरामचारित्रंतत्तद्गुणकथोद्यमः ६ शेषउवाच साधुपृष्टोस्मिविप्रर्षेरघुनाथगुणान्मुहुः
श्रुतान्श्रुतवत्कृत्वातेषुलोलुपतांव्यधात् ७ ततोनिरगमद्वाहःसैनिकैर्बहुभिर्वृतः रेवातीरेमनोज्ञेतुमुनिवृंदनिषेविते ८ सेना
चरास्ततःसर्वेयत्रवाहस्ततस्ततः प्रसर्पंतिनिरीक्षंतस्तन्मार्गेरणकोविदाः ९ वाजीगतोसौरेवायाह्रदगाधजलान्विते भालस्वर्ण
मयंपत्रंधारयन्पूजितांगकः १० ततोजलेममज्जासौरामचंद्रहयोवरः तदासर्वेमहाशूरास्तत्रविस्मयमागताः ११ तेःपरस्परमू
चोनेकथंहयसमागमः कोत्रगंताजलेवाहमानेतुंतंमहोदयम् १२ इतियावत्समुद्दिश्यामंत्रयंतेपरस्परम् तावद्वीरशतैःसार्धं

माजगामरक्षोऽपतिः १३ तान्सर्वान्विमनस्कान्वै दृष्ट्वा शत्रुघ्नसंज्ञितः पप्रच्छ मेघगंभीरवाचा वीरशिरोमणिः १४ किं स्थितं निखिलैरद्य युष्माभिः संगशोऽजले कुत्रास्त्वो रघुनाथस्य स्वर्णपत्रेण शोभितः १५ जले किं विनिमग्नोसौ हृतो वा केन मानिना तन्मे कथयत क्षिप्रं कथं यूयं विमोहिताः १६ इतिवाक्यं समाकर्ण्य राज्ञो रघुवरस्य हि कथयामासुस्ते सर्वे वीरशूरशिरोमणिम् १७ जना ऊचुः स्वामिन्वयं न जानीमो मुहूर्तोद्य भवज्जले निमग्नः ज्ञातनो नायाद्धयस्त्वमनोहरः त्वमेव तत्र गत्वेमं वाहमानय वेगतः अस्माभिस्तत्र गंतव्यं त्वया सार्द्धं महामते १९ इति श्रुत्वा वचस्तेषां सैनिकानां रघूद्वहः खेदं प्राप जनान्पश्यन्जलसंतरणोद्यतान् २० उवाच मंत्रिमुख्यं सः किं कर्तव्यमतः परम् कथं वाहस्य संप्राप्तिर्भविष्यति वदस्व तत् २१ के तत्र शूराः संयोज्या जलेन्वेषयितुं हयम् को वानयिष्यते वाहं केनोपायेन तद्वद २२ इति राज्ञो वचः श्रुत्वा मतिमान्विसत्तमः उवाच समये योग्यं शत्रुघ्नं हर्षयन्निव २३ स्वामिन्नस्ति तव श्रीमन्भक्तिरद्भुतकर्मणः पातालगमने शक्तिर्जलमध्यादिहस्फुटम् २४ अन्यच्च पुष्कलस्यापि शक्तिरस्ति महात्मनः हनूमतोपि रामस्य पादसेवापरस्य च २५ तस्माद्यूयं तत्र गत्वा हयमानय तद्ध्रुवम् यतो भवेद्वाहमेधो रघुनाथस्य धीमतः २६ शेष उवाच इतिवाक्यं समाश्रित्य शत्रुघ्नः परवीरहा स्वयं विवेश तोयांते हनुमत्पुष्कलान्वितः २७ यावज्जलं विवेशासौ तावत्पुरमदृश्यत अनेकोद्यानशोभाढ्यं नानैवपुदभेदनम् २८ तत्र माणिक्यरचिते स्तंभे स्वर्णमये हयम् बद्धं ददर्श रामस्य स्वर्णपत्रसुशोभितम् स्त्रियस्तत्र मनोहारिरूपधारिण्य उत्तमाः सेवंते सुंदरीमेकां पर्यंके सुखमास्थिताम् ३० तान्दृष्ट्वा नाः स्त्रियः सर्वाः प्रावोचुः स्वामिनीं प्रति एतेल्पवयवृष्माणो मांसपुष्टकलेवराः ३१ भविष्यंति तवश्रेष्ठमाहारस्य फलं महत् एतेषां शोणितं स्वादु पुरुषाणां गतायुषाम् ३२ एतद्वचः समाकर्ण्य सेवकीनां वरांगना जहार किंचिद्वदनं नर्तयंती भ्रुवानघा ३३ तावत्त्रयस्ते संप्राप्ताः सन्नाहश्रीविशोभिताः शिरस्त्राणं दधतस्ते शौर्यवीर्यसमन्विताः ३४ तान्दृष्ट्वा महिलास्तत्र सौंदर्यश्रीसमन्विताः प्रापुस्ते विस्मयं किंचिन्नकिमिदं दृश्यते महत् ३५ नमश्चक्रुर्महात्मानः सर्वदेववरांगनाः किरीटमणिविद्योतद्योतितांघ्रियुगास्ततः ३६ सा तान्पप्रच्छ पुरुषान्सर्वश्रेष्ठानुभाषिणी केयूयमत्र संप्राप्ताः कथं चापधरा नराः ३७ मत्स्थलं सर्वदेवानामगम्यं मोहनं महत् अत्र प्राप्तस्य तु क्वापि निर्गमि

नैभवत्युत ३८ अश्वोयंकस्यराज्ञोवैकथंचामरवीजितः स्वर्णपत्रेणशोभाढ्यःकथयंतुममाग्रतः ३९ शेषउवाच इतितस्यावचःश्रुत्वामो अ·
हनाक्षरसंयुतम् हनुमांस्तांप्रत्युवाचगतभीःप्रहसन्निव ४० वयंवैकिंकराराज्ञस्त्रैलोक्यस्यशिरवामणेः त्रिलोकीयंप्रणमतेसर्वदेवशि-
रोमणिम् ४१ रामभद्रस्यजानीहिहयमेधप्रवर्तितुः प्रमुंचवाहमस्माकंकथंबद्धोवरांगने ४२ वयंसर्वास्त्रकुशलाःसर्वशास्त्रेषुकोविदाः
नयिष्यामबलाद्वाहंहत्वातत्प्रतिरोधकम् ४३ इतिवाक्यंसमाकर्ण्यप्लवगस्यवरांगना विवक्षुःप्रत्युवाचेदंहसंतीवाक्यकोविदा ४४ मया
नीतमिमंवाहनकोमोचयितुंक्षमः वर्षायुतेननिशितैर्बाणकोटिभिरुच्छ्रितैः ४५ पुरारामस्यपादाब्जसेवकीकर्मकारिणी नगृहीष्यामित
द्वाहंराजराजस्यधीमतः ४६ महानविनयोजातोममभत्याःसुवाजिनम् क्षमताद्रामचंद्रस्तच्छरण्योभक्तवत्सलः ४७ युयंक्लिष्टास्तत्तुरु-
याहयार्थेनस्ययक्षितुः याचध्वंवरमप्राप्यंदेवानामपिसत्तमाः ४८ यथामेमीवमत्युग्रक्षमेतपुरुषोत्तमः व्रीडांत्यक्त्वाखिलायूयंवृणुध्वंवरमु
त्तमम् ४९ तस्यावचःपरंश्रुत्वाहनूमान्निजगादताम् रघुनाथप्रसादेनसर्वमस्माकमूर्जितम् ५० तथापियाचेवरमेकमुत्तमंविधेहित-
न्मेमनसःसमीहितम् भवेभवेनोरघुनाथःपतिर्वयंचतत्कर्मकराश्चकिंकराः ५१ एतद्वचनमाकर्ण्यप्लवगस्यतदांगना उवाचवाक्यंमधुरं
प्रहस्यगुणपूजितम् ५२ भवद्भिःप्रार्थितंयद्वैदुर्लभंसर्वदैवतैः तद्भविष्यत्यसंदेहःसेवकास्तद्रघोःपतेः ५३ अथापिवरमेकंवैदास्यामिकु-
तूहलना रघुनाथस्यतुष्ट्यर्थंतदत्तंमेभवेद्वचः ५४ अग्रेवीरमणिर्भूपोमहावीरसमन्वितः गृहीष्यतिभवद्वाहंशिवेनपरिरक्षितः ५५ तज्जया
र्थंमहास्त्रंतुगृण्हीतसुमहाबलाः द्वैरथेसतुयोद्धव्यःशत्रुघ्नेनत्वयामहान् ५६ इदमस्त्रंयदात्वंतुप्रक्षिपिष्यसिसंगरे अनेनपूतोरामस्यस्व
रूपंज्ञास्यतेपुनः ५७ ज्ञात्वातवाजिनंदत्वाचरणेप्रपतिष्यति तस्माद्गृह्णीध्वमस्त्रंततन्ममवैरिविदारणम् ५८ तच्छ्रुत्वारघुनाथस्यभ्रा
ताजग्राहचास्त्रकम् उदक्षुरवःपवित्रागोयोगिन्यादत्तमद्भुतम् ५९ तत्प्राप्यास्त्रंमहातेजाबभूवरिपुकर्शनः दुःप्रधर्ष्योदुराराध्योवरिवारण
सच्छृणिः ६० तान्नत्वाराघवभ्रातोशत्रुघ्नोहयसत्तमम् गृहीत्वागाज्जलात्तस्माद्देवातीरेसुरवोचिते ६१ तंदृष्ट्वासैनिकाःसर्वेप्रहृष्टांगामुदा-
न्विताः साधुसाधुप्रशंसंतःपप्रच्छुर्हयनिर्गमम् ६२ हनूमान्कथयामासहयस्यागमनंमहत् वरप्राप्तिंचताभ्योवैतेनपिश्रुत्वामुदंगताः ६३

इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेशत्रुघ्नस्ययोगिनीदर्शनंनामअष्टत्रिंशत्तितमोऽध्यायः ३८ शेषउवाच नि नदत्सुमृदंगेषुवीणानादेषुसर्वतः मुक्तोवाहस्ततोदेवपुरंदेवविनिर्मितम् १ यत्रस्फटिककुड्यानांरचनाभिर्गृहानृणाम् हसंतिविंध्यवि मलपर्वतनागसेवितम् २ राजतानिगृहाण्यत्रदृश्यंतेप्रकृतेरपि विचित्रमणिसन्नद्धानानामाणिक्यगोपुराः ३ पद्मिन्योयत्रलोकानांगेहे- गेहेमनोहराः हरंतिचित्तानिनृणांमुखपद्मदलेक्षिताः ४ पद्मरागमणिर्यत्रगेहेगेहेसभूमिषु बद्धःसंलक्ष्यतेविप्रतदोषस्पर्धयानु किम् ५ क्रीडाशैलाःप्रत्यगारंनीलरत्नविनिर्मिताः कुर्वंतिशंकांमेघानांमयूराणांकलापिनाम् ६ हंसायत्रनृणांगेहेस्फाटिकेषुनि यंत्रिताः कुर्वंतिमेघान्नोभीतिंमानसंनस्मरंतिच ७ निरंतरशिवस्थानध्वस्तचंद्रिकयातमः शुक्लकृष्णविभेदोनपक्षयोस्तत्रवैरि- णाम् ८ तत्रवीरमणीराजाधार्मिकेष्वग्रणीर्महान् राज्यंकरोतिविपुलंसर्वभोगसमन्वितम् ९ तस्यकुत्रोमहाशूरोनाम्नारुक्मांगदो बली वनिताभिर्गतोरम्यदेहाभिःक्रीडितुंवनम् १० तासांमधुरसरावःकंकणानारवस्तथा मनोहरतिकामस्यकिमन्यस्यकथात्र भो ११ वनंजगामसुमहत्सुपुष्पनगसंयुतम् सदाशिवकृतस्थानंऋतुषट्कैर्विराजितम् १२ चंपकायत्रबहुशःफुल्लकोरकशोभि ताः कुर्वंतिकामिनांतत्रहृच्छयार्तिंविलोकिताः १३ चूताःफलादिभिर्नम्रामंजरीकोटिसंयुताः नागाःपुन्नागवृक्षाश्चतथाशालास्त मालकाः १४ कोकिलानांसमारावाःसंजज्ञेश्रुतिगोचराः सदामधुपझंकारंगतनिद्रासुमल्लिका १५ दाडिमानांसमूहैश्चकर्णिकारैःसमन्वि ताः केतकीधातकीवन्यवृक्षराजिविराजिताः १६ तस्मिन्वनेप्रमदसंयुतचित्तवृत्तिर्गायन्कलंमधुरवाक्विचिकीर्षयोच्चैः उद्य- त्कुचाभिरभितोवनिताभिरागाच्छोभानिधानवपुरुद्धतभीर्विवेश १७ काश्चित्तन्नृत्यविद्याभिस्तोषयंतिस्मशोभनम् काश्चिद्गानकलाभि- श्चकाश्चिद्वाक्चतुरोक्तिभिः १८ भ्रूसंज्ञयापराःकाश्चित्तोषयामासरुन्मदाः परिरंभणचातुर्यैस्तंहृष्टंविदधुःस्त्रियः १९ ताभिःपु ष्पोच्चयंकृत्वाभूषयामासतास्त्रियः वेण्याकोमलयाशंसनुरेमेकामवपुर्धरः २० एवंप्रवृत्तेसमयेराजराजस्यधीमतः प्रायात्तद्वनदे शंसहयःपरमशोभनः २१ तत्स्वर्णपत्ररचितंसुललाटदेशंगंगासमंघुसृणकुंकुमपिंजरांगम् गत्यासमंपवनवेगतिरस्कारिण्योदृष्ट्वास्त्रि

यःपरमकौतुकधामदेहम् २२ ऊचुःपतिंकमलमध्यपिशंगवर्णास्ताम्राधरप्रतिभयाहतविद्रुमाभाः हंसव्रजाःसततहास्यसुशोभिवक्त्राःका
मस्यवामनयनेवविमोहनाख्याः २३ स्त्रियऊचुः कांतकोयंमहानर्वास्वर्णपत्रैकशोभितः कस्यवाभातिशोभाढ्योगृहाणस्वबलादिम
म् २५ शेषउवाच तदुक्तवचआकर्ण्यलीलाललितलोचनः जग्राहहयमेकेनकरपत्रेणलीलया २६ वाचयित्वास्वर्णपत्रंस्पष्टवर्णसम
न्वितम् जहासमहिलामध्येजगाद्वचनंपुनः २७ रुक्मांगदउवाच पृथिव्यांनास्तिमेपित्रासमःशौर्येणचश्रिया तस्मिन्कथंविधत्तेस
उत्सुकंरामभूमिपः २८ यस्यरक्षांप्रकुरुतेमहारुद्रपिनाकधृक् यंदेवादानवायक्षानमंतिमणिमौलिनः २९ कुरुताद्वाजिमेधंवैजन
कोमेमहाबलः यात्वेनवाजिशालायांबध्नंतुममयेभटाः ३० इतिवाक्यंसमाकर्ण्यमहिलास्तामनोहराः प्रहर्षवदनाजाताःकांतंतुपरि
रेभिरे ३१ गृहीत्वाचहयंपुत्रोराज्ञोवीरमणेर्महान् पुरपत्नीसमायुक्तोमहोत्साहमवीविशत् ३२ मृदंगध्वनिषुप्रोच्चैराहतेषुसमं
ततः बंदिभिःसंस्तुतःप्रागात्स्वपितुर्मंदिरंमहत् ३३ तस्मैसंकथयामासहयंनीतंरघोःपतेः वाजिमेधायनिर्मुक्तंस्वच्छंदगतिमद्भुत-
म् ३४ रक्षितंशत्रुसूदनमहाबलसमेतिना तच्छ्रुत्वावचनंतस्यनृपोवीरमणिर्महान् ३५ नातिप्रशंसयामासतत्कर्मसुमहामतिः नी-
त्वापुनःसमायातचौरस्येवविचेष्टितम् ३६ कथयामासजामात्रेशिवायाद्भुतकर्मणे अर्धांगनाधरायांगभूषायैचंद्रधारिणे ३७ ते-
नसंमंत्रयामासनृपोवीरमणिर्महान् पुत्रसृष्टंमहत्कर्मनिबद्धोमहतांहयः ३८ शिवउवाच राजन्पुत्रेणभवतःकृतंकर्ममहाद्भु-
तम् योजहारमहावाहंरामचंद्रस्यधीमतः ३९ अद्ययुद्धंमहद्भातिसुरासुरविमोहनम् शत्रुघ्नेनमहाराज्ञावीरकोट्यभिरक्षितो
४० मयायोध्रियतस्त्वातेजिह्वयाप्रोच्यतेह्रियः तस्यरामस्ययज्ञांगंजहारतवपुत्रकः ४१ परमत्रमहांल्लाभोभविष्यतिरणांगणे यद्रा
मचरणांभोजंद्रक्ष्यामःस्वीयसेवितम् ४२ अत्रयत्नोमहान्कार्योहयस्यपरिरक्षणे नयिष्यतिबलाद्वाहमयारक्षितमप्ययम् ४३ तस्मा
दिमंमहाराजराज्येनसहसंमतम् वाजिनंभोजनंदत्वाप्रेक्षस्वांघ्रियुगंततः ४४ इतिवाक्यंसमाकर्ण्यशिवस्यसनृपोत्तमः उवाचतंसुरें
द्रादिवंद्यपादांबुजद्वयम् ४५ वीरमणिरुवाच क्षत्रियाणामयंधर्मोयत्स्वतापस्यरक्षणम् तदसौकांतुमुद्युक्तःक्रतुनाहयसंज्ञिना

४६ तस्माद्रुद्रस्य प्रतापो मे येन केनापि मानिना यावच्छक्यं कर्म कर्तुं शरीरव्ययकारिणा ४७ सर्वं कृतं तु तेनेदं गृहीतोऽश्वः पुनर्महान् कोपितो रामभूपालः समयाहं कुरु प्रभो ४८ क्षत्रियाणामिदं कर्म कर्तव्यो हि भवेन्नहि यदकस्माद्रिपोः पादौ प्रणमेद्भयविह्वलः ४९ रिपवो वि हसंत्यनं कातरो यं नृपाधमः क्षुद्रः प्राकृतवन्नीचो नतवान् भयविह्वलः ५० तस्माद्भवान्यथा योग्यं योधव्ये समुपस्थिते यद्विधेयं विचार्यैव कर्तव्यं भक्तरक्षणम् ५१ शेष उवाच इति वाक्यं समाकर्ण्य चंद्रचूडो वदद्वचः प्रहसन्मेघगंभीरवाण्या संमोहयन्मनः ५२ यदि देवास्त्रयस्त्रिंशत्कोटयः समुपस्थिताः तथापि त्वन्तः केनाश्वो गृह्यते मम रक्षितुः ५३ यदि रामः स्वमागत्य स्वात्मानं दर्शयिष्यति तदाहं चरणौ तस्य प्रणमामि सुकोमलौ ५४ स्वामिना नहि योद्धव्यं महाननयउच्यते अन्ये वीरास्तृणप्रायाः किंचित्कर्तुं न वै क्षमाः ५५ तस्मायुद्धस्व राजेंद्र रक्षके मयि सुस्थिते को गृण्हाति बलाद्धयं त्रिलोकी यदि संगता ५६ शेष उवाच एतद्वचः परं श्रुत्वा चंद्रचूडस्य भूमिपः जहर्ष मनसेत्यं न युद्धकर्मणि कौतुकी ५७ इति श्रीपद्मपुराणे पातालखंडे शेषवात्स्यायनसंवादे रामाश्वमेधे वीरमणेर्देवपुरगमनं नाम एकोनचत्वारिंशत्तमोऽध्यायः ३९ शेष उवाच सेनाचरा महाराज्ञो महाबलसमन्विताः समागतास्त पश्यंतो हयं रामस्य भूपतेः १ क्वासौ वश्वः केन नीतः कथं वा दृश्यते न सः को गंता यमपुर्यां वै वाहं हृत्वा स्कमंदधीः २ विलोकयंति तन्मार्गं यावत्सेनाचरा रघोः तावत्प्राप्तो महाराजो महासैन्यपरीवृतः ३ पप्रच्छ सेवकान्सर्वान् कुत्राश्वो मम सांप्रतम् न दृश्यते कथं वाहः स्वर्णपत्रसुशोभितः ४ इति तद्वचनं श्रुत्वा सेवकास्ते हयानुगाः प्रोचुर्नाथ मनोवेगो वाहः केनापि कानने ५ हृतो न लक्ष्यते तस्मादस्माभिर्मार्गकोविदैः तदत्र यत्नः कर्तव्यो हयप्राप्तिं प्रति प्रभो ६ तेषां वचनमाकर्ण्य पप्रच्छ सुमतिं नृपः शत्रुघ्नः शत्रुसंहारकारी मोहनरूपधृक् ७ शत्रुघ्न उवाच कोऽत्र राजा निवसति कथं वाहस्य संगमः कियद्बलं भूमिपतेर्येन मे घ्यत्हृतो हयः ८ सुमतिरुवाच राजन्देवपुरं ह्येतद्दैवेनैव विनिर्मितम् कैलासमिव दुर्गम्यं वैरिसंघैः सुसंहतैः ९ अस्मिन्वीरमणी राजा महाशूरः प्रतापवान् राज्यं करोति धर्मेण शिवेन परिरक्षितः १० योऽसौ प्रलयकारी स आस्ते भक्त्या वशीकृतः चंद्रचूडः स्वभक्तस्य पक्षपातं स्वजनसदा ११ तस्मादत्र महद्युद्धं गृहीतश्चेद्भविष्यति यत्नाः संतः प्रकुर्वंतु रक्षणं कटकस्य

हि १२ एवंश्रुत्वासशत्रुघ्नःसर्वभूपशिरोमणिः सैन्यव्यूहंरचित्वासौनितिष्ठतिस्ममहायशाः १३ अथतंसुखमासीनंमंत्रयंतंसुमंत्रिणा
आजगामसदेवर्षिर्युद्धकौतुकसंयुतः १४ तमागतंमुनिंदृष्ट्वाशत्रुघ्नस्तपसांनिधिम् अभ्युत्थायासनेस्थाप्यमधुपर्कमथार्पयत्
१५ स्वागतेनचसंतुष्टंनारदमुनिसत्तमम् उवाचप्रीणयन्वाचावाक्यवादविशारदः १६ शत्रुघ्नउवाच मदीयाश्वःकुत्रविप्रक-
थयस्वमहामते नलक्ष्यतेगतिस्तस्यसेवकैर्ममकोविदैः १७ शंसतंयेनवानीतंक्षत्रियेणचमानिना कथमत्रहयप्राप्तिर्भविष्यतिनिन
पोधन १८ इतिवाक्यंसमाकर्ण्यशत्रुघ्नस्यसनारदः उवाचवीणांरणयन्गायन्रामकथांमुहुः १९ नारदउवाच एतद्देवपुरंराज
न्भूपोवीरमणिर्महान् तत्सुतेनवनस्थेनगृहीतस्तववाजिराट् २० तत्रयुद्धंमहत्तेद्यभविष्यतिसुदारुणम् अत्रवीराःप्रतिष्ठं
तिबलशौर्यसमन्विताः २१ तस्मादत्रमहायत्नात्स्थातव्यंतमहाबल रचयव्यूहरचनांदुर्गमांपरसैनिकैः २२ जयस्तेभविताराजन्कृच्छ्र
णास्मान्नृपोत्तमात् रामंकोनुपरोजीयाद्भुवनेसकलेष्वपि २३ इत्युक्त्वांतर्दधेविप्रोनभसिस्थितवांस्ततः युद्धंसुदारुणंद्रष्टुंयन्नदेवदानव
योरिव २४ शेषउवाच अथराजावीरमणिःसर्वशूरशिरोमणिः पटहंघोषयन्स्वीयेपुरमध्येमहारवम् २५ आहूयामाससेनान्यंरिपु
वारंमहोन्नतम् कथयामासचक्षिप्रंमेघगंभीरयागिरा २६ सेनानीःपटहस्याज्ञांदेहिमेशोभनेपुरे तच्छ्रुत्वामेसुसंनद्धाःशत्रुघ्नंप्रति
यांतुते २७ इतिवाक्यंसमाकर्ण्यराज्ञोवीरमणेस्तदा कारयामासपटहंमहारवनिनादितम् २८ गेहेगेहेचरथ्यायांश्रूयतेपटहध्व-
निः शत्रुघ्नंयांतुतेसर्वेवीराराजपुरेस्थिताः २९ येवैराज्ञःसमुल्लंघ्यशासनंवीरमानिनः पुत्रावाभ्रातरोवापितेवध्याःस्युर्नृपाज्ञया ३०
शृण्वंतुवीराःपुनरप्याहतंपटहंवरं श्रुत्वाविधीयतामाशुकर्तव्यंमाविलंबितम् ३१ शेषउवाच इतिपटहरवस्वकर्णगान्वरंनरवर-
वीरवरायसुर्नृपंते कनककवचविभूषितस्वदेहाःसमरमहोत्सवहृष्टचित्तकोशाः ३२ केचिद्ययुःशिरस्त्राणंधृत्वाशिरसिशोभनम्
कवचेनसुशोभाढ्याःशतकोटिसुशोभिताः ३३ रथेनहययुग्मेनमणिकांचनशोभिना ययुस्तेराजसंदेशान्नृवरालयमुन्मदाः ३४
केचिन्मतंगजैर्मत्तैःकेचिद्वाहैःसुशोभिनैः ययुर्नृपगृहंसर्वेराजसंदेशकारकाः ३५ विचित्रस्वर्णकवचशिरस्त्राणसुशोभिताः रु-

रुक्मांगदोपिचनिर्जेरथेतिष्ठन्मनोजवे ३६ शुभांगदोनुजस्तस्यमहारत्नमयंदधत् कवचंवपुषिश्रेष्ठंनिजंशायाद्रणोत्सवे ३७ राजभ्रा-
तावीरसिंहःसर्वशस्त्रास्त्रकोविदः ययौनृपाज्ञयातत्रशासनभूमिपस्यहि ३८ जामेयस्तस्यराज्ञोहिबलमित्रइतिस्मृतः सन्नद्धःकवचीरत्न-
द्वीजगामनृपमंदिरम् ३९ सेनानीरिपुवारोपिसेनांतांचतुरंगिणीम् सज्जांविधायभूपायन्यवेदयदसौमहान् ४० अथराजावीरमणिः
सर्वशस्त्रास्त्रपूरितम् मणिसृष्टोच्चचक्रंस्वमारुह्यस्यंदनोत्तमम् ४१ ततोवीणारवःशंखनिनादश्चसमंततः श्रूयतेकातरान्वीरान्प्रेरय-
न्निवसंगरे ४२ भेर्यःसमंततोजघ्नुःशक्रभवादकवादिताः अनेकान्यभवंस्तस्यसंग्रामायप्रतस्थुषः ४३ सर्वेकृतस्वस्त्ययनाःसर्वाभर-
णभूषिताः सर्वशस्त्रास्त्रसंपूर्णाययुःसमरमंडलम् ४४ भेरीशंखनिनादेनपूजिताश्चनगागुहाः आकारितुंगतःकिंतुतद्रवःस्वर्गसंस्थि-
तान् ४५ तस्मिन्कोलाहलेकृत्तेराजावीरमणिर्महान् रणोत्साहेनसंयुक्तोययौप्रधनमंडले ४६ आगत्यसंस्थितस्तावद्रथपत्तिसमाकुले स-
मुद्रइवतत्स्थानात्प्लाविनुपुरुषान्रयात् ४७ तदागतंबलंदृष्ट्वारायिभिःशस्त्रकोविदैः कोलाहलीकृतंसर्वमुवाचसुमतिंनृपः ४८ श-
त्रुघ्नउवाच समागतोवीरमणिर्ममवाजिधरोबली योद्धुमामागतोवीरःसैन्येनचतुरंगिणा ४९ कथंयुद्धंप्रकर्तव्यंकेयोत्स्यंतिबलोत्क-
टाः तान्सर्वान्दिशमेवीरायथास्याज्जयईप्सितः ५० सुमतिरुवाच स्वामिन्नसौमहाराजामहासैन्यपरीवृतः समागतःसयुद्धार्थंशिव-
भक्तिसमन्वितः ५१ सांप्रतंयुध्यतांवीरःपुष्कलःपरमास्त्रवित् अन्येपिनीलरत्नाद्यायोद्धारोयुद्धकोविदाः ५२ शिवेनसहयोद्धव्यंराज्ञावा
भवतानघ द्वंद्वयुद्धेनजेतव्योमहाबलपराक्रमः ५३ अनेनविधिनाराजन्जयस्तत्रभविष्यति पश्चाद्यद्रोचतेस्वामिंस्तत्कुरुष्वमहाम-
ते ५४ शेषउवाच इतिवाक्यंसमाकर्ण्यशत्रुघ्नःपरवीरहा सुभटानादिदेशाथयुद्धायकृतनिश्चयः ५५ सर्वैःससैन्यैर्युद्धार्थंराजभिः
शस्त्रकोविदैः यथास्यान्मेजयःक्षिप्रंयतितव्यंतथापुनः ५६ जयार्थंराघवस्यैवश्रुत्वातेरणकोविदाः महोत्साहेनसंयुक्तायुयुर्योद्धुं
समुत्सुकाः ५७ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेवीरमणेःसहयुद्धंनामचत्वारिंशततमोऽध्यायः
४० शेषउवाच युद्धायतेसुसंनद्धाःशत्रुघ्नस्यमहाबलाः ययुर्वीरमणेःसैन्यमध्येशौर्यसमन्विताः १ शरान्विमुञ्चमानास्तेभ-

दिनःसैनिकाबहून् व्यदृश्यंतेरणांतस्थाःशरासनधरानराः २ अनेकेनिहतास्तत्रगजामणिमयारथाः भग्नावाहसमेताश्च दृश्यंतेर-
णमंडले ३ विहितंकदनंतेषांश्रुत्वारुक्मांगदोबली रथेमणिमयेतिष्ठन्ययौयोद्धुंससैनिकान् ४ शरासनेशरान्धास्यन्निषुधीअ-
क्षयौदधत् शोणनेत्रांतराभीमोमहाकोपसमन्वितः ५ अनेकबाणसंविध्यान्कुर्वन्शूरान्सहस्रशः हाहाकारंकारयंस्तद्ययौरुक्मांग
दोबली ६ राजपुत्रःस्वसदृशंबलेनयशसाश्रिया आव्हयामासशत्रुघ्नभारतिपुष्कलंबली ७ रुक्मांगदउवाच आगच्छवीरकर्मातंमहा
बलपराक्रम मयायोद्धुंतुबलिनाराजपुत्रेणभास्वता ८ किमन्यैस्त्रासितैर्वीरनिहतैःकोटिभिर्नरैः मयासमंमहायुद्धंविधायजयमा-
प्नुहि ९ इत्युक्तवंततरसाप्रहसन्पुष्कलोबली जघानविपुलंमध्यंवक्षसस्तीक्ष्णपर्वभिः १० तदमृष्यन्राजपुत्रोमहाचापेदधच्छरान्
जघानदशभिर्वीरंपुष्कलंवक्षसोंतरे ११ उभौसमरसंरब्धावुभावपिजयैषिणौ रेजातेसमरेतौहिकुमारतारकौयथा १२ बाणान्धनुषि
संधायदशसंख्यान्महाशितान् अकरोत्पुष्कलोवीरोविरथंराजपुत्रकम् १३ चतुर्भिश्चतुरोवाहान्द्वाभ्यांसूतमपातयत् एकेनध्वजमे
तस्याद्वाभ्यांस्यंदनरक्षकौ १४ एकेनहृदिविव्याधराजपुत्रस्यवेगवान् तदद्भुतकर्मदृष्ट्वासर्वेवीराःप्रतोषिताः १५ तच्छिन्नधन्वावि
रथोहताश्वोहतसारथिः अत्यंतंकोपमापन्नःस्यंदनंपरमाविशत् १६ सचान्यस्यंदनवरेहयरत्नेनभूषिते शरासनंमहत्कृत्वासुदृढगुणपूरितम्
१७ उवाचपुष्कलंवीरंरुक्मांगदइदंवचः भवान्पराक्रमंकृत्वाक्वयास्यसिपरंतप १८ पश्यमेद्यपराक्रांतिंमद्बलेनविनिर्मिताम् येनत्वा
न्निष्ठस्वभोवीरनयामित्वद्भुयंनभः १९ इत्युक्त्वाशरमत्युग्रंदधारस्वशरासने मंत्रयित्वाततश्चास्त्रंभ्रामकंपौष्कलेरथे २० मुमोचनिशितं
बाणंस्वर्णपुंखैकशोभितम् तेनबाणेननीतोस्यरथोयोजनमात्रकम् २१ धृतःकृच्छ्रेणसूतेनरथोबभ्रामभूतले कृच्छ्रेणप्राप्यस्वस्था
नंपुष्कलःपरमास्त्रवित् २२ जगादवचनंतंवैशरान्बिभ्रच्छरासने स्वर्गंप्रापुहिवीराग्र्यसर्वदेवैश्चसेवितम् २३ त्वादृशाःपृथिवीयो-
ग्यानभवंतिनृपोत्तमाः शतक्रतुसमायोग्यास्तद्गच्छस्वसुरालयम् २४ इत्युक्त्वासमुमोचास्त्रमाकाशप्रापकंमहत् तेनबाणेनसरथो
ययौरवमनुलोमतः २५ सर्वलोकानतिक्रामन्ययौसूर्यस्यमंडले तज्ज्वालयारथोदग्धोहयसूतसमन्वितः २६ तत्करैर्दग्धभूयिष्ठक

लेवरसुदुःखितः पपातचंद्रचूडंसधृत्वाहृद्यसुरवार्दनम् २७ भूमौनिपतितस्तत्रकरदग्धकलेवरः अत्यंतंदुःखमापन्नोमुमूर्च्छरणमंडले २८ तस्मिन्निपतितेभूमौमूर्छितेराजपुत्रके हाहाकारोमहानासीत्तत्रसंग्राममूर्द्धनि २९ वैरिणोजयलक्ष्मींतेप्रापुःपुष्कलमुख्यकाः पलायनपराजातावैरिणोहयरक्षकाः ३० तदापुत्रस्यवैमूर्च्छांदृष्ट्वावीरमणिर्नृपः प्रायात्स्वरथमध्यस्थःपुष्कलंकोपपूरितः ३१ तदाभूमिश्चचालेयंसपर्वतवनोत्तमा शूरावैहर्षमापन्नाःकातराभयपीडिताः ३२ चापमहद्दधानःसइषुधीअक्षयावपि रोषान्निःश्वासमामुंचन्नाह्वयामासवैरिणम् ३३ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेरुक्मांगदपराजयोनामएकचत्वारिंशत्तितमोऽध्यायः ४१ शेषउवाच आह्वयंतंमहासैन्यवारिधौपुष्कलंनृपम् समालक्ष्यकपींद्रोपिहनूमांस्तमुपाह्वयत् १ लांगूलमुद्यम्यविशालदेहंसंगम्यसंमान्यपयोदघोषं रणस्थितान्वीरवरान्कपींद्राजगामतंवीरमणिंनृपेंद्रम् २ आयांतंतंहनूमंतंवीक्ष्यपुष्कलउद्भटः विलोकयामासदृशावैरीक्रोधसुशोणया ३ जगादतंहनूमंतंपुष्कलःपरमास्त्रवित् मेघगंभीरयावाचानादयन्रणमंडलम् ४ पुष्कलउवाच कथंत्वंसमरेयोद्धुमागतोसिमहाकपे कियद्बलंस्वल्पमेतद्राज्ञोवीरमणेर्महान् ५ यत्रत्रिजगतीसर्वासासुरवंसमुपागता तत्रत्वंलीलयायोद्धुंयातुमिच्छसिवानवा ६ कोयंराजावीरमणिःकियद्बलमयाल्पकम् अत्रागमनमत्युग्रंतवर्वीरनभाव्यते ७ रघुनाथकृपापांगादहंनिस्तीर्यदुस्तरम् क्षणान्निर्यामिकीशेंद्रयाचितंकुरुसंगरे ८ त्वयाराक्षसपाथोधिस्तीर्णोरामकृपाप्लवजात् तथारामंसुसंस्मृत्यनिस्तरिष्यामिदुस्तरम् ९ येकेचिद्दुस्तरंप्राप्यरघुनाथंस्मरंतिच तेषांदुःखोदधिःशुष्कोभविष्यतिनसंशयः १० तस्माद्धेजभद्महावीरशत्रुभसन्निधिंबलिन् एषआयामिनिर्जित्यभूपंवीरमणिंक्षणात् ११ शेषउवाच इतिधीरांसमाकर्ण्यवाणींपुष्कलभाषिताम् जगादवचनंभूयःपुष्कलंपरवीरहा १२ हनुमानुवाच पुत्रमासाहसंकार्षीर्भूपंवीरमणिंप्रति एषदाताशरण्यश्चबलशौर्यसमन्वितः १३ त्वंबालःस्थविरोभूपोरिविलाख्यशस्त्रवित्तमः अनेकेविजिताःसंख्येवीराःशौर्ययशोभिनः १४ जानीहिपार्श्वेतस्यत्वंरक्षितारंसदाशिवम् भक्त्यावशीकृतंस्थानंसंमुच्येनतुरिस्थितम् १५ तस्मादहमनेनैवयोत्स्येभूपेनपुष्कल अन्यान्वीरान्विजित्याशुकी-

र्तिमाप्नुहि पुष्कल १६ पुष्कल उवाच शिवो भक्त्या वशीकृत्य स्वपुरे स्थापितोमुना परमस्याशु हृदये न तिष्ठति महेश्वरः १७ सदाशि
वोयमाराध्यः परमं स्थानमागतः सरामो मन्मनस्त्यक्त्वा न क्वापि परिगच्छति १८ यत्र रामस्तत्र विश्वं सर्वं स्थाष्णु चरिष्णु च तस्मादहं जयि
ष्यामि रणे वीरमणिं नृपम् १९ व्रज त्वं समरे योद्धुमन्यान्मानिवरान्नृपान् वीरसिंहमुखान् कीशमचिंतां माकुरु प्रभो २० वाचमित्थं समा
कर्ण्य हनूमान्धीरसेविताम् जगाम समरे योद्धुं वीरसिंहं नृपानुजम् २१ लक्ष्मीनिधिः सुतेनास्य शुभांगदसुसंज्ञिना द्वैरथेन प्रयुयुधे महा
शस्त्रास्त्रवेदिना २२ बलपुत्रेण सुमदः स्वप्रतापबलोर्जितः योद्धुं सशस्त्रः संग्रामं विचचार नृपात्मजः २३ आव्हयं तं नृप दृष्ट्वा द्वैरथे यु
द्धकोविदः पुष्कलः स्वर्णरचिते रथे तिष्ठन्नयोधि तम् २४ राजा तमागतं दृष्ट्वा पुष्कलं युद्धकोविदम् उवाच निर्भयं वाण्या रणमध्ये सुभा-
षितः २५ वीरमणिरुवाच बालमायाहि मां क्रुद्धं संग्रामे चंडकोपनम् गच्छ प्राणपरीप्सायै मा युद्धं कुरु मे सह २६ त्वादृशान्बा
लकान्भूपा मादृशाः कृपयंति हि प्रहरंति न चैतान्वै तस्माद्गच्छ रणाद्बहिः २७ यावत्त्वं न मया दृष्टश्चक्षुर्भ्यां तावदुन्मनाः सांप्रतं त्वां
प्रहर्तुं न मनः समभिकांक्षति २८ यस्त्वया मत्सुतो बाणैर्भिन्नो मूर्च्छीकृतः पुनः सर्वं मयाक्षांतमद्य तव बालधियो महत् २९ इति वाक्यं स
माकर्ण्य पुष्कलो निजगाद तम् बालोहं त्वं मया वृद्धः सर्वशस्त्रास्त्रकोविदः ३० क्षत्रियाणां मतं चैव वयो बलाधिक्यसंयुताः त एव वृद्धा भूपाग्र्य न
वयो वृद्धतां गताः ३१ मया ते मूर्च्छितः पुत्रः स शौर्यबलदर्पितः इदानीं त्वामहं तीक्ष्णैः पातयिष्यामि संगरे ३२ तस्मात्त्वं यत्नमास्तिष्ठ राजन्
संग्राममूर्धनि रामभक्तं न मां कश्चिज्जयती द्रुपदे स्थितः ३३ इत्थं भाषितमाश्रुत्य पुष्कलस्य नृपाग्रणीः जहास बालं संवीक्ष्य कोपं चव्यद
धात्पुनः ३४ तं वै कुपितमालक्ष्य भरतात्मज उन्मदः जघान शरविंशत्या राजानं हृदि तीक्ष्णया ३५ राजा तानागतान्दृष्ट्वा बाणान्निज-
विमोचितान् चुकोप हृदये त्वं तं जघान च त्रिभिः शरैः ३६ विव्याध भाले भूपालपुत्रः पुष्कलसंज्ञकः तत्र लग्ना विरेजुस्ते त्रिकूटशिरव-
राणि किम् ३७ हृदये पुष्कलं वीरं महाकोपसमन्वितः ते बाणा नतपर्वाणस्तीक्ष्णा रामानुजांगिनः ३८ सर्पा आशीविषा यद्वत्कुद्धास्त
द्वद्दृपुस्थिताः परमं कोपमापन्नः पुष्कलो भूमिपं पुनः ३९ बाणानां शतकेनाशु बिभेद नतपर्वणा तैर्बाणैः कवचं भिन्नं किरीटः सशिर

स्वकः ४० रथोधनुर्महत्तज्ज्यंछिन्नंकोपपरीप्सितवान् सजूतेनपरिप्लुष्टोबाणभिन्नकलेवरः ४१ अन्यंस्यंदनमारुह्यजगामभरतात्मजम्
धन्योसिवीररामास्यचरणाब्जमधुव्रत ४२ महत्कृतंकर्मतेद्यथदहंविरथीकृतः प्राणानुरक्षस्त्वभावीरसांप्रतंमयियुद्धयति ४३ सुलभा
नतवप्राणाःकालरूपेमयिस्थिते इत्युक्त्वाव्यहनद्बाणैरसंख्यैःशस्त्रकोविदः ४४ धूमोदिशिचतद्बाणानान्यदृश्यंततत्रह अनेकेराज-
साहस्त्राभिन्नाअश्वाःसमंततः ४५ रथारथियुतास्तेनछिन्नाभिन्नाद्विधाकृताः शोणितोघासरित्तत्रप्रसुस्त्रावरणांगणे ४६ यत्रोन्मादा-
हिमातंगादृश्यंतेशैलशृंगवत् केशाःशैवाललक्ष्म्यास्तेमुहुःप्राणिशिरःस्थिताः ४७ अनेकेपाणयश्छिन्नावीराणांमुद्रिकाश्रियः दृश्यंतेअ-
हिवत्तत्रचंदनादिकरूषिताः ४८ शिरांसिचभटाग्र्याणांकच्छपाभावहंतिवै मांसानिपंकायत्रासंन्वीराणांमहतांततः ४९ एवंव्यतिकरे
वृत्तेयोगिन्यःशतशोरणे पपुःपात्रेणरुधिरंप्राणिनांरणपातिनाम् ५० मांसानिबुभुजुस्तावैहर्षकौतुकसंयुताः पीत्वातुशोणितंतत्रभक्षि
त्वामांसमुन्मदाः ५१ ननृतुर्जहसुःप्रोच्चैरुज्जगुःप्रधनांगणे पिशाचास्तत्रसमरेप्राणिनांमस्तकानिवै ५२ धृत्वाकराभ्यांमत्तांगास्तालवद्वा
दनोद्यताः शिवास्तत्रमहामांसंपतितानांरणांगणे ५३ भक्षित्वाव्यनदन्मत्ताःकातराणांभयप्रदम् कातरास्त्रासमापन्नागताःकुंजरको
दरे ५४ भक्षितायोगिनीभिस्तेपापिनांकापिनस्थितिः एतत्कदनमालक्ष्यस्वसैन्यस्यरथाग्रणीः ५५ पुष्कलोपिचकारात्रकदनंरणमंड
ले भिद्यंतेगजशीर्षाणिपतंतिमौक्तिकानितत् ५६ दृश्यंतेलोभिभिर्वीरैःस्वनेत्रैस्तत्रतत्रहि पुष्कलप्रहिताबाणानृणामंगेषुसर्वतः कु
र्वंतिप्राणविच्छेदंवीराणामपिसर्वतः ५७ सर्वेरुधिरसिक्तांगाःसर्वेछिन्ननिजांगकाः दृश्यंतेकिंशुकायद्वत्सुभटाःप्रधनांगणे ५८ एतस्मि
न्समयेक्रुद्धःसमाभाष्यमहीपतिः जघानबाहुबाणैस्तंरोषपूरपरिप्लुतः ५९ तद्बाणवेधभिन्नांगोविशीर्णकवचोनृपः महाबलंतंमन्वा
नःप्राहरच्छरकोटिभिः ६० तैर्बाणैःकवचान्मुक्तैःस्रवद्बहुसृक्शोणितम् वपुर्बभूवरुचिरंशरपंजरगोचरम् ६१ शरपंजरमध्यस्थोवि
ह्वलीकृतमानसः शरासनामुच्यसंधातुनक्षमःसचभारतिः ६२ रामंस्मृत्वाधनुर्धृत्वाकरेसज्जंमहद्दृढम् मुमोचबाणान्निशितान्वैरिवृं
दनिवारणान् ६३ तैर्बाणैःशरजालंनद्विधूयमुनिपुंगव शंखप्रध्मायसमरेजगादगतभीर्नृपम् ६४ पुष्कलउवाच त्वयाकृतमहत्कर्मय

न्मांबाणसुपंजरे गोचरंकृतवान्वीरवीरतापससुद्भवम् ६५ दृष्ट्वात्वान्ममसमान्योसिसांप्रतंरणमंडले पश्यमेद्यपराक्रांतंराजन्वीर-
मणेमहत् ६६ बाणत्रयेणभोवीरमूर्च्छितंकरवैनहि तर्हिप्रतिज्ञांशृणुवैसर्ववीरविमोहिनीम् ६७ गंगांप्राप्यापियोवैतांनिंदित्वापा
पहारिणीम् नमज्जतिमहापापोमहामूढविचेष्टितः ६८ तस्यपापंममैवास्तुचेन्नत्वांरणमंडले पातयेमूर्च्छयावीरसन्नद्धोभवभूप-
ते ६९ इतिवाक्यंसमाकर्ण्यपुष्कलस्यनृपोत्तमः चुकोपभृशमुद्विग्नःसंदधेनिशितान्शरान् ७० तेशराहृदयंभित्वागतास्तेभारतेमह
त् पेतुःक्षितावधोयद्वद्रामभक्तिपराङ्मुखाः ७१ ततःशरमुमोचास्मैनिशितंवह्निसुप्रभम् लक्ष्मीकृत्यमहद्वक्षःकपाटतटविस्तृत
म् ७२ सबाणोभूमिपतिनाद्विधाछिन्नःशरेणहि पपातरथमध्येसरविमंडलवज्ज्वलन् ७३ अपरंबाणमाधत्तमातृभक्तिभवंततः
निधायपुण्यंसोप्येषचिच्छेदमहतासुनः ७४ ततःखिन्नःसहृदयेकिंकर्तव्यमितिस्मरन् रामंहृदिनिजातिंमुमुमोचपरमास्त्रवित्
७५ सबाणस्तस्यहृदयेलग्नआशीविषोपमः मूर्च्छामप्रापयत्तंवैज्वलत्सूर्यसमप्रभः ७६ ततोहाहाकृतंसर्वंपलायनपरायणम्
राज्ञिसंमूर्च्छितेजातेपुष्कलोजयमासवान् ७७ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेवीरमणेःपराभवोना
मद्विचत्वारिंशत्तमोऽध्यायः ४२ शेषउवाच हनूमान्वीरसिंहंतुसमागत्याब्रवीद्वचः तिष्ठयासिकुतोवीरजेष्यामित्वांक्षणादि-
ह १ एवमुक्तंसमाकर्ण्यप्लवगस्यवचोमहत् कोपपूरपरिप्लुष्टःकार्मुकंजलदस्वनम् २ टंकारयित्वानिशितान्बाणान्मुंचन्रणां
गणे आषाढेजलदस्येवत्यासारःसुमनोहरः ३ तान्दृष्ट्वानिशितान्बाणान्स्वदेहेसुविलग्नकान् चुकोपहृदयेत्यंतहनूमानंजनी
सुतः ४ मुष्टिनाताडयामासहृदयेवज्रसारिणा समुष्टिनाहतोवीरःपपातधरणीतले ५ मूर्च्छितंतंसमालोक्यपितृव्यंसशुभां-
गदः रुक्मांगदोपिसंमूर्च्छांत्यक्त्वागाद्रणमंडले ६ बाणान्सर्वाभिवर्षंतोमृधाविवमहास्वनौ कुर्वंतौकदनंघोरंप्लवगंप्रतिज-
ग्मतुः ७ तौदृष्ट्वासमरेयोद्धुमायातौवीक्ष्यवानरः लांगूलेनचसंवेष्ट्यसरथौचापधारकौ ८ स्फोटयामासभूदेशेतत्क्षणान्मू
र्छितावुभौ निश्चेष्टौसमभूतांतौरुधिरारक्तदेहकौ ९ बलमित्रश्चिरंयुद्धंविधायसुदमेनहि मूर्च्छामप्रापयत्तंवैबाणैःशितसुप

र्बभिः १० पुष्कलेनक्षणान्नीतोमूर्च्छांचैतन्यवर्जिताम् जयमासंतुकटकंशत्रुघ्नस्यप्रभदार्दनम् ११ एतस्मिन्समयेसांबःस्यंदनंवर
मास्थितः विस्फारयन्धनुर्दिव्यमुपेधावृद्धदानिमान् १२ जटाजूटांतरगताचंद्ररेखावहन्महान् सर्पभूषांमनस्पर्शादधदाजगवंध
नुः १३ मूर्च्छितान्स्वजनान्दृष्ट्वाभक्तार्तिघ्नोमहेश्वरः योद्धुंप्रायान्महत्सैन्यंशत्रुघ्नस्यार्जितमहत् १४ सगणःसपरीवारःकंपयन्पृ
थिवीतलम् भक्तरक्षार्थमागच्छत्त्रिपुरंतुपुरायथा १५ कोपाच्छोणतरैर्नेत्रैर्बहुप्रलयकारकः पश्यन्वीराबहुमृतान्पिनाकीदेव
वंदितः १६ तमागतंमहेशानंवीक्ष्यरामानुजोबली जगामसमरेयोद्धुंसर्वदेवशिरोमणिं १७ अथागतंतुशत्रुघ्नंरुद्रोवीक्ष्यपिनाकधृक् उ
वाचपरमापन्नःकोपसंगुणचापधृक् १८ पुष्कलेनमहत्कर्मकृतंरामाप्रियेसोविना मद्भक्तंयोरणेहत्वागतवातेसमरमंडलं १९ अथकाश्चि
परोवीरःपुष्कलःपरमास्त्रवित् तद्धत्वासुखमाप्स्यामिसमरेभक्तपीडनम् २० शेषउवाच इत्युक्त्वावीरभद्रंसप्रेषयामासपुष्कलं याहित्वंस
मरेयोद्धुंपुष्कलंसेवकार्दनं २१ नंदिनंप्रेषयामासहनूमंतंमहाबलम् कुशध्वजंप्रचंडंतुभृंगिणंचसुबाहुकम् २२ दमनंचंद्रनामानंगणं
स्वीयंसमादिशत् पुष्कलस्तुसमायांतंवीरभद्रंमहागणम् २३ महारुद्रस्यसंवीक्ष्ययोद्धुंप्राणान्महामनाः पुष्कलःपंचभिर्बाणैस्ताडया
मासंसंयुगे २४ तैर्बाणैःक्षतगात्रस्तुत्रिशूलंससमादिशत् सत्रिशूलंक्षणाच्छित्वाव्यगर्जतमहाबलः २५ छिन्नंस्वीयंत्रिशूलंवेवीक्ष्य
रुद्रानुगोबली खट्वांगेनजघानाशुमस्तकेभारतिद्विज २६ खट्वांगाभिहतःसोथसुमूर्च्छक्षणमुद्धतः विहायमूर्च्छांसद्वीरःपुष्कलः
परमास्त्रवित् २७ शरैश्चिच्छेदखट्वांगंकरस्थंतस्यतत्क्षणात् वीरभद्रःस्वकेच्छिन्नेखट्वांगेकरसंस्थिते २८ परमक्रोधमापन्नोबभं
जरथिनोरथम् भंक्त्वारथंतुवीरस्यपदातिंचविधायसः २९ बाहुयुद्धेनयुयुधेपुष्कलेनमहात्मना सपुष्कलोरथंत्यक्त्वाचूर्णिततेनवेग
तः ३० मुष्टिनाताडयामासवीरभद्रंमहाबलः अन्योन्यंमुष्टिभिर्भग्नौऊरुभिजानुभिस्तथा ३१ परस्परवधोद्युक्तौपरस्परजयैषि
णौ एवंचतुर्दिनमभूद्रात्रिंदिनमपीशयोः ३२ नकोपिनत्रहीयेतनजीयेतमहाबलः पंचमेतुदिनेवृत्तेवीरभद्रोमहाबलः ३३ गृ
हीत्वानभउड्डीनोमहावीरंतुपुष्कलम् तत्रयुद्धंतयोरासीद्देवासुरविमोहनम् ३४ मुष्टिनाचरणाघातैर्बाहुभिःसुकरैर्महत् तदास्यतंभ

कुपितःपुष्कलोवीरभद्रकम् ३५ गृहीत्वाकंठदेशेतु ताडयामासभूतले तेनघातेनव्यथितोवीरभद्रोमहाबलः ३६ गृहीत्वापुष्कलंपा-
देजघानास्फालयन्मुहुः ताडयित्वामहीदेशेपुष्कलंसुमहाबलः ३७ त्रिशूलेनचकर्ताशुशिरोज्वलितकुंडलम् जगर्जपुष्कलंहत्वावीरभ
द्रोमहाबलः ३८ गर्जनातेनशर्वेण प्रापितास्त्वरःसमुद्भवः हाहाकारोमहानासीत्पुष्कलेपतितेरणे ३९ त्रासंप्रापुर्जनाःसर्वेरणमध्येस
र्वविदाः तेशशंसुश्चशत्रुघ्नंपुष्कलंपतितंरणे ४० निहतंवीरभद्रेणमहेश्वरगणेनवै इत्याश्रुत्यमहावीरःपुष्कलस्यवधंतदा ४१ दुःखं
प्राप्तोरणेत्यंतकंपमानःशुचामहत् तदुःखितंचशत्रुघ्नंज्ञात्वारुद्रोब्रवीद्वचः ४२ शत्रुघ्नंसमरेवीरंशोचंतंपुष्कलेहते रेशत्रुघ्नरणेशोकं
माकृथाःसुमहाबल ४३ वीराणांरणमध्येतुपातनंकीर्तयेस्मृतम् धन्योवीरःपुष्कलाख्योयश्चवैदिनपंचकं ५५ युयुधेवीरभद्रेण-
महाप्रलयकारिणा येनक्षणाद्धिनिहतोदक्षोमदपमानकृत् ४५ क्षणाद्धिनिहतायेनदैत्यास्त्रिपुरसैनिकाः तस्माद्युध्यस्वराजेंद्रशोकंत्य-
क्त्वामहाबल ४६ यत्वात्तिष्ठस्ववीराग्र्यमयियोद्धरिसंस्थिते शोकंसंत्यज्यशत्रुघ्नोवीरश्चक्रोधकंधरम् ४७ आत्तसज्जधनुर्बाणैःप्रच्छ-
च्छादमहेश्वरम् तेबाणाःसुरशीर्षण्यवपुषंक्षतविक्षतं ४८ अकुर्वन्महच्चित्रंभक्तरक्षार्थमागतम् तेबाणाःशंकरस्याथबाणान्भसि
संस्थिताः ४९ व्याप्येतत्सकलंविश्वचित्रकारिमुनेरपि तद्बाणयोर्युद्धबलंवीक्ष्यसर्वेचमेनिरे ५० प्रलयंलोकसंहारकारकंसर्वमोहकं
म् आकाशेतुविमानानिसंस्थितिस्यस्यपुरस्थिताः ५१ विलोकयितुमागत्यप्रशंसंतितयोर्भृशम् अयंलोकत्रयस्यास्यप्रलयोत्पत्तिकार-
कः ५२ असावपिमहाराजरामचंद्रस्यचानुजः किमिदंभविताकावाजेष्यतिक्षितिमंडले ५३ पराजयंवाकोवीरःप्राप्स्यतेरणमू
र्धनि एवमेकादशाहानिकृतंयुद्धंपरस्परम् ५४ द्वादशेदिवसेप्रासेमुमोचास्त्रंनराधिपः ब्रह्मसंज्ञंमहादेवंहंतुंक्रोधसमन्वितः ५५
सविज्ञायमहास्त्रंतन्मुक्तंशत्रुघ्नवैरिणा हसन्नपिचतत्तेनमुक्तंब्रह्मशिरोमहत् ५६ अत्यंतविस्मयंप्राप्तःकिंकर्तव्यमतःपरम् एवं-
विचारयुक्तस्यहृदयेज्वलनोपमम् ५७ शरंवैनिचखानाशुदेवदेवशिरोमणिः तेनबाणेनशत्रुघ्नोमूर्च्छितोरणमंडले ५८ हाहाः
भूतंजगत्सर्वंकटकंभटसेवितम् वीराःसर्वेरुद्रगणैःपातिताःपृथिवीतले ५९ सुबाहुदमनाद्याख्याःस्वबाहुबलदर्पिताः पतितमूर्च्छ

यावीक्ष्यशत्रुघ्नंशरपीडितम् ६० पुष्कलंतुरथेस्थाप्यसेवकैःपरिरक्षितम् हनूमानागतोयोद्धुंशिवंसंहारकारकम् ६१ प्रकुर्वन्नोषि
तस्तीव्रंलांगूलंचप्रकल्पयत् ६२ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेपुष्कलपराजयोनामत्रिचत्वारिंशति
तमोऽध्यायः ४३ शेषउवाच आगत्यसविधेरुद्रंसमरांगणमूर्द्धनि जगादहनुमान्वीरःसंजिहीर्षुःसुराधिपम् १ हनूमानुवाच
यदाचरसिरुद्रास्यधर्मस्यप्रतिकूलनम् तस्मात्त्वांशास्तुमिच्छामिरामभक्तवधोद्यतम् २ मयापुराश्रुतंदेवऋषिभिर्बहुधोदितम् रघुनाथ
पदस्मारिनित्यंरुद्रःपिनाकधृक् ३ तत्सर्वंतुमृषाजातंशत्रुघ्नमभियुध्यता पुष्कलोपिहतःशूरःशत्रुघ्नोपिविमूर्च्छितः ४ तस्मात्त्वांपात-
याम्यद्यत्रैलोक्यप्रलयोद्यतम् यत्नात्तिष्ठस्वभोशर्वरामभक्तिपराङ्मुख ५ इत्युक्तवंतंप्लवगंप्रोवाचसमहेश्वरः धन्योसिवीरवर्यत्वंभ-
वान्वदतिनोमृषा ६ मत्स्वामीरामचंद्रोयंसुरासुरनमस्कृतः तदश्वमानयामासतद्रक्षार्थंमयागतं निवसामिपुरेनित्यंतद्भक्त्यानुव-
शीकृतः यथाकथंचिद्भक्तोऽसौरक्ष्यःस्वात्माइतिस्थितिः ८ रघुनाथःकृपांकृत्वाविलोकयतुनिरूपम् मांस्वभक्तंसुदुःखेनकिंचिल्लो
पधरमहान् ९ शेषउवाच एवंवदतिचंडीशेहनूमान्कुपितोभृशम् शिलामादायकोपेनताडयामासतद्रथम् १० शिलयाताडित
स्तस्यरथःशकलतांगतः ससूतःसहयःकेतुपताकाभिःसमन्वितः ११ नभस्थादेवताःसर्वाःप्रशशंसुःकपीश्वरम् धन्योसिप्लवगाधी
शमहत्कर्मत्वयाकृतम् १२ श्रीशिवंविरथंदृष्ट्वानंदीतंसमुपाद्रवत् उवाचश्रीमहादेवमत्पृष्ठंगम्यतामिति १३ वृषस्थितंतुभूतेशंहनू-
मान्कुपितोभृशम् जघानपर्वताग्रेणमूर्ध्नितस्यमहाकपिः १४ तदाहतोभूतपतिःशूलंतीक्ष्णंसमाददे जाज्वल्यमानंत्रिशिखंवह्निज्वा
लासमप्रभम् १५ आयांतंतन्महद्दृष्ट्वाशूलंप्रज्वलनप्रभम् हस्तेगृहीत्वातरसाबभंजतिलशःक्षणात् १६ भग्नेत्रिशूलेतरसाकपींद्रेण
क्षणाच्छिवः शक्तिंकरेसमासाद्यसर्वलोकविनिर्मिताम् १७ साशक्तिःशिवनिर्मुक्ताहृदयेतस्यधीमतः लग्नाबलाद्धनस्तत्रक्लीब्य-
त्वंप्लवगाधिपः १८ तत्क्षणात्तद्व्यथांतीर्त्वागृहीत्वावृक्षमुल्बणम् ताडयामासहृदयेमहाव्यालविभूषिते १९ ताडितस्तेनवीरेणफ-
णींद्रास्त्रासमागताः इतस्ततस्तेतंमुक्त्वागताःपातालसंभवाः २० शिवस्तस्मिन्नगेमुक्तेवक्षसिस्वेनिरीक्ष्यच कुपितोऽभ्यद्याद्धीरंमुस

लंकरयुग्मके २१ हतोसिगच्छसंग्रामात्पलाय्यप्लवगाधम एषतेप्राणहंताहंमुसलेनक्षणादिह २२ मुसलंवीक्ष्यनिर्मुक्तंशिवेनकपितं-
नवै कीशस्तंवंचयामासमहावेगाद्धरिस्मरन् २३ मुसलंतत्पपाताधःशिवमुक्तंमहायसम् विदार्यपृथिवींसर्वांजगामचरसातले
२४ तदाप्रकुपितोत्यंतंहनूमान्रामसेवकः गृहीत्वापर्वतंहस्तेताडयामासवक्षसि २५ सयावत्पर्वतंछेत्तुंमतिंचक्रेसतीपतिः ताव-
द्भूतःकर्णींद्रेणशालेनबहुशाखिना २६ तमपिछेत्तुमुद्युक्तोयावत्तावच्छिलाहतः शिलास्ताभेदितुंप्राप्तामृडस्तच्छेदनोद्यतः २७ तावद्वृ-
ष्टिंचकारायंशिलाभिर्नगपर्वतैः लांगूलेनविशालेनताडयत्सोषभूतपम् २८ शिलाभिःपर्वतैर्वृक्षैःपुच्छास्फोटनभूरिशः नंदीप्राप्तोमहा
त्रासंचंद्रोपिशकलीकृतः २९ अत्यंतंविव्हलोजातोमहेशानःप्रकोपनः क्षणेक्षणेप्रहारेणविव्हलंकुर्वतंभृशम् ३० जगादप्लवगाधीशंधृ-
न्योसिरघुपानुग महत्कर्मकृतंतेद्ययत्त्वयाहंप्रतोषितः ३१ नदानेननयज्ञेननाल्पेनतपसाप्यहम् सुलभोस्मिमहावेगतस्मात्प्रार्थय
मेवरम् ३२ शेषउवाच एवंब्रुवंतंतंदृष्ट्वाहनूमान्निजगादतम् प्रहसन्निर्भयंवाण्यामहेशानंसुतोषितम् ३३ हनूमानुवाच रघु
नाथप्रसादेनसर्वमेस्तिमहेश्वर तथापियाचेहवरंत्वत्तःसमरतोषितात् ३४ एषपुष्कलसंज्ञोवैसमरेपतितोहतः तथैवरामावर-
जःशत्रुघ्नोमूर्च्छितोरणे ३५ अन्येचवीराबहवःपतिताःशरविक्षताः मूर्च्छिताःपतिताःकेचित्तान्रक्षस्वगणैःसह ३६ तथानेता
न्महाभूतावेतालाश्चपिशाचकाः नहरंतिनरवादंतिश्वश्च्शृगालादयस्तथा ३७ एतेषांवपुषोभेदोनभवेत्त्वंतथाचर यावदिंद्ररणेजित्वा
नयामिद्रोणपर्वतम् ३८ तत्रस्थामोषधींवापिनीत्वासंस्थापितान्भटान् जीवयामिबलात्सर्वांस्तावत्त्वंरक्षसर्वशः ३९ एषगच्छामितं
नेतुंद्रोणपर्वतसत्तमम् यस्मिन्वसंत्योषधयःप्राणिसंजीवनंकराः ४० एतद्वचःसमाकर्ण्यतथेतिनिजगादतम् याहिशीघ्रंनगंनेतुं
रक्षामित्वद्गदान्मृतान् ४१ तच्छ्रुत्वावाक्यमीशस्यजगामद्रोणपर्वतम् द्वीपान्सर्वानतिक्रम्यजगामक्षीरसागरम् ४२ अत्रतुस्व-
गणश्चायंरक्षतिस्मशिवोमहान् स्मशानंतद्गणैःस्वीयैर्महाबलपराक्रमैः ४३ हनूमान्द्रोणमासाद्यद्रोणींनांसुमहद्गिरिम् लांगूलेनं
विधायाशुप्रतस्थेरणमंडलम् ४४ तंनेतुमुद्यतेविप्रचकंपेसचपर्वतः कंपमानंतुतंदृष्ट्वातत्पालादेवतागणाः ४५ होहेतिकल्ता

प्रोचुस्तेकिमिदंभवितागिरौ कोद्येनंनीयतेवीरोमहाबलपराक्रमः ४६ एवंकृत्वासुराःसर्वेसंहताददृशुःकपिम् मुंचैनमजितंप्रोच्यजघ्नुः
शस्त्रास्त्रकोटिभिः ४७ तान्सर्वान्निघ्नतोदृष्ट्वाहनूमान्कुपितोभृशम् जघानतान्क्षणाद्वीरःशक्रःसर्वासुरान्यथा ४८ केचित्पदाहता
स्तत्रकेचित्करविमर्दिताः लांगूलेनहताःकेचित्केचिच्छृंगेणचाहताः ४९ सर्वेतेनाशमापन्नाःक्षणात्कीशेशताडिताः केचिन्निपतिता
भूमौरुधिरेणपरिप्लुताः ५० केचित्कीशभयात्त्रस्ताजग्मुःशक्रंसुराधिपम् क्षतेनचपरिप्लुष्टारुधिरस्रुतदेहिनः ५१ तान्दृष्ट्वाभयसंवि
ग्नान्रुधिरेणपरिप्लुतान् सुरान्जगादविमनाःशक्रःसर्वसुरोत्तमः ५२ कथंयूयंभयत्रस्ताःकथंरुधिरविप्लुताः केनदैत्येननिहतान्राक्ष
सेनाधमेनच ५३ सर्वंशंसतमेतथ्यंयथाज्ञात्वाव्रजामितम् निहत्यबध्वाचायामियुष्मद्घातकमुन्मदम् ५४ इतिवाक्यंसमाकर्ण्यतुराषा
हंसुरोत्तमम् जगदुर्दीनयावाचासुरासुरनमस्कृतम् ५५ देवाऊचुः इहागत्यनजानीमःकश्चिद्वानररूपधृक् नेतुंद्रोणंसमुद्युक्तोलां
गूलेस्थाप्यतंगिरिम् ५६ गंतुंकृतमतिस्तावद्यूयंसर्वेसुसंहिताः युद्धंकृत्वासुसंनद्धाःसर्वशस्त्रास्त्रवर्षिणः ५७ तेनसर्वेवयंयुद्धे
निर्जिताबलशालिना अनेकेनिहतास्तत्रभूमौपेतुःसुरोत्तमाः ५८ वयंतुबहुभिःपुण्यैर्जीविताइहचागताः शोणितेनसुसिक्तां
गाःक्षतपीडासमन्विताः ५९ एतद्वाक्यंसमाकर्ण्यसुराणांसपुरंदरः आदिदेशसुरान्सर्वान्महाबलसमन्वितान् यातंमहाद्रोणगि
रिंकपिंबद्धुमहाबलम् बध्वानयतयूयंवैसुराणांरणपातकम् ६१ इत्याज्ञप्ताययुस्तेवैद्रोणंपर्वतसत्तमम् यत्रास्तेबलवान्वीरोह
नूमान्कपिसत्तमः ६२ गत्वातेप्राहरन्सर्वेहनूमंतंमहाबलम् हनूमतातेनिहतामुष्टिभिःकरताडनैः पतितास्तेक्षणात्तत्ररुधिर
क्षतविग्रहाः अन्येपलायन्पराजग्मुस्तेत्रिदिवेश्वरम् ६४ तच्छ्रुत्वाकुपितःशक्रःसर्वानमरसत्तमान् आदिदेशमहावीरंवानरेंद्रंसुरो
त्तमः ६५ नदाज्ञयातेतत्रैवयत्रकीशेश्वरोबली तान्सर्वानागतान्दृष्ट्वाजगादकपिसत्तमः ६६ मायातवीराःसमरेसंहर्तारिंहिमा
भटाः प्रेष्यामियुष्मानधुनारायमिन्याःपुरोंतिके ६७ इत्युक्ताअपितेसर्वेसन्नद्धाःप्राहरन्कपिम् शस्त्रास्त्रैर्बहुधामुक्तैर्महाबलसम
न्विताः ६८ केचिच्छूलैःपरशुभिःकेचित्खड्गैश्चपट्टिशैः मुसलैःशक्तिभिःकेचित्क्रोधेनकलुषीकृताः ६९ सआहतोवीरवरैर्विवि

धैरायुधैर्बली शिलाभिस्तान्जघानाशुसर्वानमरसत्तमान् ७० केचित्पलाय्यनिहतागताःशक्रसमीपकम् तदुक्तंवाक्यमाकर्ण्यप्र
यप्रापसुराधिपः ७१ बृहस्पतिंसुराध्यक्षंमन्त्रिणंस्वर्गवासिनाम् पप्रच्छसविधिर्गत्वानत्वासुरगुरुंवरम् ७२ इंद्रउवाच कोसौयोवा
नरोद्रोणनेतुंस्वामिन्समागतः येनमेनिहतावीराअमराःशस्त्रधारिणः ७३ शेषउवाच एतच्छ्रुत्वातुतद्वाक्यमुक्तमांगिरसोमहा-
न् जगादभयसंविग्नंतुराषाहंसुराधिपम् ७४ बृहस्पतिरुवाच योरावणंमहत्संख्येकुंभकर्णमपोथयत् येनतेवैरिणःसर्वे
हतास्तस्यैवसेवकाः ७५ येनलंकासत्रिकूटानिर्दग्धापुच्छवह्निना अक्षोयोनिहतोयेनहनूमंतमवेहितम् ७६ तेनसर्वविहिता
द्रोणार्थमयमुद्यमः हयमेधंमहाराजःकरोतिबलिसत्तमः ७७ तस्याश्वंशिवभक्तस्तुनृपोवीरमणिर्महान् जहारतत्रसमभूद्द्र-
णसुरविमोहनम् ७८ शिवेननिहताःसंख्येवीरारामस्यभूरिशः तान्वैजीवयितुंद्रोणंनेष्यतेचमहाबलः ७९ नायंवर्षशतैर्जेय्यो
भवताबलसंयुतः तस्मात्प्रसादयकपिंदेहितत्रत्यमौषधम् ८० इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे-
द्रोणगिरौदेवानांपराजयोनामचतुश्चत्वारिंशत्तमोऽध्यायः ४४ शेषउवाच गुरुभाषितमाकर्ण्यवृषपर्वरिपुःस्वराट् ज्ञात्वाराम-
स्यकार्यार्थमागतंपवनात्मजम् १ भयंतत्याजमनसिवानरात्समुपस्थितम् जहर्षचित्तेचभृशंवाचस्पतिमुवाचह २ इंद्रउवाच
कथंकार्यंसुराधारोद्रोणोयंनेष्यतेयदि देवानांजीवनंभूयःकथंस्यादितिमेवद ३ इदानींपवनोद्भूतप्रसादययथातथम् रामःप्रीतिं
परांयातिदेवानांचसुखंभवेत् ४ देवाधिपस्यवचनंश्रुत्वावाचस्पतिस्तदा शक्रंतुपुरतःकृत्वासर्वदेवैःपरीवृतम् ५ जगामत-
त्रयत्रास्तेहनूमान्निर्भयःकपिः गर्जतिप्रसभंजित्वासुरान्सर्वान्स्फुरवासनः ६ तेगत्वासन्निधौतस्यबृहस्पतिपुरोगमाः पेतुस्तेचर-
णौनत्वासमीरतनुजस्यहि ७ बृहस्पतिश्चतंवीरंजगादप्रेरितोमुनिः सुराधीशेनलोकस्यगुरुणावदतांवरः ८ बृहस्पतिरुवाच अ-
जानद्भिःकृतंकर्मदेवैस्तवपराक्रमम् श्रीरामचरणस्यत्वंसेवकोसिमहामते ९ किमर्थमयमारंभःकथमत्रसमागतः तत्करिष्या
महेसर्वेसन्नतास्तवभाषितम् १० रोषंत्यक्त्वाकृपांकृत्वादेवाधीशंविलोकय पवनात्मजदेवानांभयकरवपुर्दधत् ११ शेषउवा०

इत्थंभाषितमाकर्ण्यदेवानांसद्गुरोर्वचः उवाचदेवान्सकलान्गुरुश्चैवमहायशाः राज्ञोवीरमणेःसंख्येहताःशर्वेणभूरिशः भटास्तान्वै
जीवयितुंद्रोणंनेष्यामिपर्वतम् १३ तंयेनिवारयिष्यंतिस्ववीर्यबलदर्पिताः तान्नेष्यामिक्षणादेवयमस्यसदनंप्रति १४ तस्माद्दत्त
मेयूयंद्रोणंवाथतदौषधम् येनसंजीवयिष्यामिमृतान्वीरान्रणांगणे १५ शेषउवाच इतिवाक्यंसमाकर्ण्यवायुसूनोर्महात्मनः ते-
सर्वेप्रणतिंगत्वाददुःसंजीवनौषधम् १६ तेप्रहृष्टाभयंत्यक्त्वासुराःस्वर्गौकसस्तथा ययुःसुरपतिंकृत्वापुरःसौख्यसमन्विताः १७
हनूमान्भेषजंतत्तुसमादायगतोरणम् स्तुतःसर्वैःसुरगणैर्महाकर्मसमुत्सुकैः १८ तमागतंहनूमंतंवीक्ष्यसर्वेपिवैरिणः साधुसा
धुप्रशंसंतअद्भुतंमेनिरेकपिम् १९ कपिःसमागत्यमहामुदायुतःपुरोभटंपुष्कलमागतांतकम् शिवेनसंरक्षितमुग्रमंडलेश्रीराम
चिंतत्वरितंजगामह २० सुमतिंचसमाहूयमंत्रिणंमहतांमतम् उवाचजीवयाम्यद्यसर्वान्वीरान्गणेस्थितान् २१ एवमुक्त्वाभेष
जंचतत्पुष्कलमहोरसि शिरःकायेनसंधायजगादवचनंशुभम् २२ यद्यहंमनसावाचाकर्मणाराघवंप्रति जानामितर्हिएन
तेनभेषजेनाशुजीवतु २३ इतिवाक्यंवक्तियावत्तावत्पुष्कलउत्थितः रणांगणेदशन्रोषाद्दंतान्वीरशिरोमणिः २४ क्वगतोवी
रभद्रोसौमांसमूर्च्छ्यरणांगणे सद्योहंपातयाम्येनंक्वास्तिमेधनुरुत्तमम् २५ इतिसंभाषमाणंतंप्राहवीरंकपीश्वरः धन्यो
सिवीरयुद्धयोवदस्यैवंरणांगणे २६ त्वंहतोवीरभद्रेणरघुनाथप्रसादतः पुनःसंजीवितोस्यद्यहिशत्रुघ्नयाममूर्च्छितम् २७ इत्यु
क्त्वाप्रययौतत्रसंग्रामवरमूर्द्धनि श्वसन्नास्तेसशत्रुघ्नःशिवबाणप्रपीडितः २८ तत्रगत्वासमीपंतुशत्रुघ्नस्यमहात्मनः निधाय-
भेषजंतस्यवक्षसिप्रश्वासमागते २९ उवाचहनुमांस्त्वंवैजीवशत्रुघ्नसत्तम मूर्च्छितोसिरणेकस्मान्महाबलपराक्रम ३० यद्यहंब्रह्म
चर्यंचजन्मपर्यंतमुद्यतः पालयामितदावीरःशत्रुघ्नोजीवतुक्षणात् ३१ उक्तमात्रेणतेनेत्थंजीवितःक्षणमात्रतः क्वशिवःक्वशि-
वोयातोविहायरणमंडलम् ३२ अनेकेनिहताःसंख्येश्रीरुद्रेणपिनाकिना तेसर्वेजीवितास्तेनकपींद्रेणमहात्मनः ३३ तदास-
र्वेसुसंनद्धारोषपूरितमानसः स्वेस्वेरथेस्थिताःशत्रून्प्रययुःक्षतविग्रहाः ३४ पुष्कलोवीरभद्रंतुचंडश्चैवकपिध्वजः नंदिनंह-

नुमान्वीरोशत्रुघ्नःसंगरेशिवम् ३५ धनुर्विस्फारयंतंतंशत्रुघ्नंबलिनांवरम् संग्रामेशिवमाहूयतिष्ठंतंप्रययौनृपः ३६ राजावीरमणि-
र्वीरःशत्रुघ्नःसमरेबली अन्योन्यंचक्रतुर्युद्धंमुनिविस्मयकारकम् ३७ राजावीरमणिर्नागान्रथानश्वान्शताधिकान् शत्रुघ्नस्यन
रेंद्रस्यतिलशश्चाकरोद्द्विज ३८ तदाप्रकुपितोत्यंतंशत्रुघ्नोरणमंडले आग्नेयास्त्रमुमोचास्मैदग्धुंसैन्यसमन्वितम् ३९ दाहकतन्म
हद्दृष्ट्वामहास्त्रंशत्रुमोचितम् अत्यंतकुपितोराजावारुणास्त्रंसमाददे ४० वारुणास्त्रेणशीतांतंवीक्ष्यरामानुजोबली वायव्या
स्त्रंमुमोचास्मैतेनवायुर्महानभूत् ४१ वायुनासंहतामेघाययुस्तेसर्वतोदिशम् इतस्ततोगताःसर्वेसैन्यंतत्सुस्थितंबभौ ४२ सैन्ये
पवनपीडार्तेनृपोवीरमणिर्महान् पर्वतास्त्रंसुसन्नद्धोजग्राहचशरासने ४३ पर्वतैर्वंचितोवायुर्नृपेणसर्वसंगरे तद्वीक्ष्यरामाव-
रजोवज्रास्त्रंतुसमाददे ४४ वज्रास्त्रेणहताःसर्वेनगास्तुतिलशःकृताः चूर्णतांप्रापुरेतस्मिन्रणेशूरविराजिते ४५ वज्रास्त्रेण
विदीर्णांगाःवीराःशोणितशोभिताः बभूवुःसमरप्रांतेतच्चित्रंसमभूद्रणे ४६ तदाप्रकुपितोत्यंतंराजावीरमणिर्महान् ब्रह्मास्त्रं
चापआधत्तवैरिदाहकमद्भुतम् ४७ ब्रह्मास्त्रेचापमाधत्तसस्मारसुमनोहरम् शरंतद्योगिनीदत्तंसर्ववैरिविमोहनम् ४८ ब्रह्मास्त्रं
तत्करात्भ्रष्टमागतंवैरिणंप्रति तावच्छत्रुघ्ननाम्नातुतन्मुक्तंमोहनास्त्रकम् ४९ मोहनास्त्रेणतद्ब्राह्मंद्विधाच्छिन्नंक्षयादिह
लग्नोराज्ञोहृदिक्षिप्रंमूर्च्छामप्रापयन्नृपम् ५० तेबाणाःशतशोमुक्ताःशत्रुघ्नेनमहीभृता सर्वेपिमूर्च्छितावीरागणारुद्रस्यये
पुनः ५१ शिवंविनारणेभूदानराःपेतुर्महीतले तदाशिवःप्रकुपितोरथेतिष्ठन्ययौनृपम् ५२ शिवेनसहसायोद्धुंसमा-
यातोरणांगणे शत्रुघ्नःसज्जमत्युग्रंधनुःकृत्वाव्ययुध्यत ५३ तयोःसमभवद्युद्धंघोरंवीरविदारणम् शस्त्रास्त्रैर्बहुधा
मुक्तैरादीपितदिगंतरम् ५४ अस्त्रप्रत्यस्त्रसंघातैस्ताडनप्रतिताडनैः देवानामपिदैत्यानांनेतादृग्रणमंडलम् ५५ तदा
व्याकुलितोत्यंतंशत्रुघ्नःशिवसंगरे सस्मारस्वामिनंतत्रपावनेरूपदेशतः ५६ हानाथभ्रातरत्युग्रःशिवःप्राणापहारकम्
करोतिधनुरुद्यम्यत्रायस्वरणमंडले ५७ अनेकदुःखपाथोधितीर्णोरामतवाख्यया मामप्युद्धरदुःखस्थरामराम-

कृपानिधे ५८ इत्थंवक्तियदातत्रवीक्षितोरणमंडले नीलोत्पलदलश्यामोरामोराजीवलोचनः ५९ मृगशृंगंकरेधृत्वादीक्षितंवपुरुद्वहन् तंदृष्ट्वाविस्मयंप्रापशत्रुघ्नःसमरांगणे ६० इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेश्रीरामदर्शननामपंचचत्वारिंशत्तितमोऽध्यायः ४५ शेषउवाच आगतंवीक्ष्यश्रीरामंशत्रुघ्नःप्रणतार्तिहम् भ्रातरंसकलादुःखान्मुक्तोभूद्द्विजसत्तम १ हनूमान् वीक्ष्यविश्रांतोरामस्यचरणौमुदा ववंदेभक्तरक्षार्थमागतंनिजगादच २ स्वामिंस्त्वैतद्युक्तंतुस्वभक्तपरिपालनम् यत्संग्रामेजितंसर्वंपाशबद्धंमुमोचयत् ३ वयंत्विदानींधन्यावैयद्दृष्टोभवत्पदे जेष्यामोरीन्क्षणादेवत्वत्कृपातोरघूद्वह ४ शेषउवाच स्थाणुस्तदागतंरामंयोगिनांध्यानगोचरम् पतित्वापादयोर्विप्रजगादप्रणताभयम् ५ एकस्त्वंपुरुषःसाक्षात्प्रकृतेःपरईर्यते यस्त्वंस्वकलयाविश्वंसृजस्यवसिहंसिच ६ अरूपस्त्वमशेषस्यजगतःकारणंपरम् एकएवत्रिधारूपंगृण्हासिकुहकान्वितः ७ सृष्टौविधातृरूपेणपालनेस्वयमासच प्रलयेजगतःसाक्षादहंशर्वाख्यतांगतः ८ तवयत्परमेशस्यहयमेधक्रतुक्रिया ब्रह्महत्यापनोदायतद्विडंबनमद्भुतम् ९ यत्पादशौचममलंगंगाख्यंशिरसोत्तरा वहामिपापशांत्यर्थंतस्यतेपातकंकुतः १० मयाबह्वपकारायकृतंकर्मैतदस्फुटम् क्षम्यतांतत्कृपालोहिभवतोप्यविधायकम् ११ किंकरामिमयासत्यपालनार्थमिदंकृतम् राजन्प्रभावाद्भवतोभक्तरक्षार्थमागतः १२ असौपुराउज्जयिन्यांमहाकालनिकेतने स्नात्वाक्षिप्रांसरसितपस्तेपेमहाद्भुतम् १३ ततःप्रसन्नोजातोहंजगादभूमिपंप्रति याचस्वेतिमहाराजसयाचेराज्यमद्भुतम् १४ मयाप्रोक्तंदेवपुरेतवराज्यंभविष्यति यावद्रामहयःपुर्यामागमिष्यतियाज्ञिकः १५ तावत्प्रभृत्यहंस्थास्येतवरक्षार्थमुद्यतः एतद्दत्तवरोरामकिंकरोमिस्वसत्यतः १६ घूर्णितोस्म्यधुनाराजासपुत्रपशुबांधवः हयंसमर्प्यभवतेसेवांवैविदधास्यति १७ शेषउवाच इतिवाक्यंसमाकर्ण्यमहेशस्यरघूत्तमः उवाचधीरयावाचाकृपयापूर्णलोचनः १८ रामउवाच देवानामयमेवास्तिधर्मोभक्तस्यपालनम् त्वयासाधुकृतंकर्मयद्भक्तोरक्षितोधुना १९ मयास्तिहृदयेशर्वभवतोहृदयेत्वहम् आवयोरंतरंनास्तिमूढाःपश्यंतिदुर्धियः २० येभेदंविदधत्यद्धाआवयोरेकरूपयोः कुं-

भीपाकेषुपच्यंतेनराःकल्पसहस्रकम् २१ येवद्भक्तएवासन्मद्भक्ताधर्मसंयुताः मद्भक्ताअपिभूयःस्यात्भक्त्यातवनंतिंकराः २२
शेषउवाच इत्थंभाषितमाकर्ण्यशर्वोवीरमणिंनृपम् मूर्च्छितंजीवयामासकरस्पर्शादिनाप्रभुः २३ अन्यानपिसुतानस्यमूर्च्छिता
न्शरपीडितान् जीवयामाससमृडःसमर्थःप्रभुरीश्वरः २४ सज्जंविधायतंभूपंश्रीरामपदयोर्नतिम् कारयामासभूतेजःपुत्रपौत्रैः
परीवृतम् २५ धन्योराजावीरमणिर्योददर्शरघूत्तमम् योगिभिर्योगनिष्ठाभिर्दुष्प्रापंयुनायुतैः २६ तेनतारघुनाथंतंकृतार्थीकृत-
विग्रहाः ब्रह्मादिभिःपूज्यतमाअभूवन्द्विजसत्तम २७ शत्रुघ्नहनुमद्भ्यांचपुष्कलादिभिरुद्भटैः परीहृतंसमादायददौराजाहयो
त्तमम् २८ राज्येनसहितंसर्वंसपुत्रःसहबांधवः शर्वेणप्रेरितःप्रादाद्भूपोवीरमणिस्ततः २९ ततोरामानुजैःसर्वैर्वैरिभिर्निजसेवकैः श-
त्रुघ्नादिभिरत्यंतमुत्सुकैश्चविशेषतः ३० रथेमणिमयेतिष्ठन्बभूवसतिरोहितः अंतर्हितेरामभद्रेसर्वेप्रापुःसुविस्मयम् ३१ माजानीहिम
नुष्यंतंरामंलोकैकवंदितम् जलेस्थलेचसर्वत्रवर्ततेसंस्थितःसदा ३२ ततोवीराःपरहृष्टाअन्योन्यंपरिरेभिरे तूर्यमंगलवादित्रैःसुमहा
नुत्सवोभवत् ३३ ततोमुक्तोहयःसर्वैर्वीरैःशस्त्रास्त्रकोविदैः सर्वैरनुगतःप्रीतैर्विस्मयेनसमन्वितैः ३४ शर्वःसत्यप्रतिज्ञश्चतमनुज्ञाप्य
सेवकम् श्रीरामंशरणंप्रोच्ययाहिलोकैकदुर्लभम् ३५ स्वयमंतर्हितस्तत्रभलयोतातिकारकः कैलासमगमच्छर्वःसेवकैःपरिशो-
भितः ३६ भूपोवीरमणिर्ध्यायन्श्रीरामचरणौद्विज शत्रुघ्नेनययौसाकंबलिनाबलसंयुतः ३७ एतद्रामस्यचरितंयेशृण्वंतिनरोत्तमाः
तेषांसंसारजंदुःखंनभविष्यतिकर्हिचित् ३८ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेहयप्रस्थाननामषट्चत्वा
रिंशतितमोऽध्यायः ४६ शेषउवाच हयोगतोहेमकूटंभारतांतेततोद्विज अनेकभटसाहस्रैरक्षितोबद्धचामरः १ योवैविस्तरतोदे
ध्यायोजनानांसमंततः अयुतेनसुशृंगैश्चराजतैःकांचनादिभिः २ तत्रोद्यानंमहच्छ्रेष्ठंपादपैःपरिशोभितम् शालैस्तालैस्तमालैश्च
कर्णिकारैःसमंततः ३ हिंतालैर्नागपुन्नागैःकोविदारैसबिल्वकैः चंपकैर्बकुलैर्मधैर्मदनैःकुटजादिभिः ४ जातिकाभिर्यूथिका
भिर्नवमल्लिकयातथा आम्रैर्माधवद्राक्षाभिर्दाडिमैःशोभितंवनम् ५ अनेकपक्षिसंघुष्टंभ्रमरैर्निनदीकृतम् मयूरकेकारचितंस-

र्वर्तुसुखदंहयः ६ प्रविवेशसशत्रुघ्नोमनोवेगसमन्वितः स्वर्णपत्रंविशालेस्वेभालेबिभ्रन्मनोहरम् ७ गच्छतस्तस्यवाहस्यहयमेधक्र
तोस्तथा अकस्मादेवनिर्विघ्नयत्तच्छृणुष्वद्विजोत्तम ८ गात्रस्तंभोभवेत्तस्यनचचालपथिस्थितः हेमकूटइवाचाल्योबभूवहयसत्तमः
९ तदातद्रक्षकाःसर्वेकशाघातान्वितेनिरे तदाहतेपिनययौस्तब्धगात्रोहयोत्तमः १० शत्रुघ्नंसविधेगवाचुक्रुशुर्वाहरक्षकाः स्वा
मिन्वयंनजानीमोकिमभूद्धयसत्तमे ११ गच्छतोवाहवर्यस्यमनोवेगस्यभूतले आकस्मिकोभवत्तस्यगात्रस्तंभोमहामते १२
कशाभिस्ताडितोस्माभिःपरंतत्रनचाचलन् एवंविचार्ययत्कर्मतत्कुरुष्वनृपोत्तमे १३ तदाविस्मयमापन्नोभूपतिःसहसैनिकैः जगा
मसहितःसर्वैर्हयस्यसहसोंतिके १४ पुष्कलोबाहुनाधृत्वाचरणौतस्यभूतलात् तत्पाटयाम्रासतदापरंनोच्चालितस्ततः १५ ब-
लेनबलिनाक्रांतोनाकंपतहयस्तदा हनुमांस्तंसमुद्धर्तुमतिंचक्रेमहामनाः १६ लांगूलेनसमावेष्ट्यबलेनबलिनांवरः आचकर्ष
बलाद्वाहंनचचालतथापिसः १७ तदोवाचकपिश्रेष्ठोहनूमान्विस्मयान्वितः शत्रुघ्नंबलिनांश्रेष्ठंवीराणांपरिशृण्वताम् १८ मयाद्रो
णोलांगुलेनलीलयोत्पाटितोधुना परमत्रमहाश्चर्यंकंपतेनहयोल्पकः १९ दिष्टमत्रनिदानंहिवीरैर्बलिभिरुद्धृतेः आकृष्टोपिन
चस्थानाच्चचालतिलमात्रतः २० कपिभाषितमाकर्ण्यशत्रुघ्नोविस्मयान्वितः सुमतिंमंत्रिणांश्रेष्ठमुवाचवदतांवरः २१ शत्रु
घ्नउवाच मंत्रिन्किमभवद्वाहेस्तंभनंवपुषोनघ कोत्रोपायोविधेयःस्याद्येनवाहगतिर्भवेत् २२ सुमतिरुवाच स्वामिन्किमभव
द्वाहेस्तंभनंवपुषोनघ देशोद्भवमहंजानेप्रत्यक्षंनोपरोक्षजम् २३ शेषउवाच इतिवाक्यंसमाकर्ण्यसुमतेर्धर्मकोविदः अन्वेषया
मासमुनिंसेवकैःसहशोभनम् २४ तेसर्वेसर्वतोगत्वामुनिंधर्मविदंभटाः व्यालोकयंतसर्वत्रनचापश्यन्मुनीश्वरम् २५ एत-
स्त्वनुचरस्तत्रगतोयोजनमात्रतः पूर्वस्यांदिशमुद्युक्तःपश्यतिस्ममहाश्रमम् २६ यत्रनिर्वैरिणःसर्वेपशवोजनतास्तथा गंगा-
स्नानहृताशेषकिल्बिषाःसुमनोहराः २७ यत्रकेचित्तपश्श्रेष्ठंकुर्वंतिस्महुताशनैः धूमैरधोमुखाःपत्रैर्वायुभिःस्वोदरंभराः २८ यत्रा
ग्निहोत्रजाधूमःपवित्रयतिवैसदा अनेकमुनिसंसृष्टामुक्तिर्यत्रद्विजोत्तम २९ तमाश्रमंमुनेर्ज्ञात्वाशौनकस्यमनोहरम् न्यवेदयन्नृ-

पायासौविस्मयाविष्टचेतसे ३० तच्छ्रुत्वाहर्षितोत्यंतंशत्रुघ्नःसहसेवकैः हनूमत्पुष्कलाद्यैश्चसंयुतोगात्तदाश्रमम् ३१ तत्रवीक्ष्यमु
निश्रेष्ठंसम्यग्गहुतहुताशनम् प्रणम्यदंडवत्तस्यचरणौप्रपतत्यसौ ३२ तमागतंनृपंज्ञात्वाशत्रुघ्नंबलिनांवरम् अर्घ्यपाद्यादिकंचक्रे
प्रीतस्तद्दर्शनादभूत् ३३ सुखोपविष्टंविश्रांतंनृपंप्राहमुनीश्वरः किमर्थमटनंदेवमहत्यर्थटनंतव ३४ त्वादृशाःपृथिवींसर्वांनृपा-
वैनत्त्रमंतन्वित् तदादुष्टजनाःसाधूनूबाधंतेविगतज्वरान् ३५ कथयस्वमहीपालशत्रुघ्नबलिनांवर सर्वंशुभावहंभूयात्तवपर्यटनादिक
म् ३६ शेषउवाच इत्युक्तवंतंभूदेवंप्रत्युवाचमहीश्वरः गद्गदस्वरयावाण्याहर्षितस्त्वीयविग्रहः ३७ शत्रुघ्नउवाच अकस्मादभ
वच्चित्ररामाश्वस्यमनोगतेः नातिदूरेत्वादावासात्तच्छृणुष्वविदांवर ३८ उद्यानेतवशोभाढ्येयदृच्छातोहयोगतः तत्प्रांतेतस्यवाह-
स्यगात्रस्तंभोभवत्क्षणात् ३९ तदामेबलिनोवीराःपुष्कलाद्यामदोत्कटाः बलादाचकृषुर्वाहंनचचालतथाप्यसौ ४० अस्मिन्नपा-
रदुःखाब्धौमग्नानांत्वंतरिःस्मृतः दैवाद्दृष्टःसुभाग्येनकथयस्वनिदानकम् ४१ शेषउवाच एवंपृष्टोमुनिवरःक्षणंध्यौमहामतिः त-
त्कारणंसंप्रयुक्तोविचारणपरोभवत् ४२ क्षणात्तज्ज्ञानकंप्राप्यविस्मयोत्फुल्ललोचनः जगादसमहीपालंदुःखितंसंशयान्वितम् ४३
शौनकउवाच शृणुराजन्प्रवक्ष्यामिहयस्तंभस्यकारणम् यच्छ्रुत्वामुच्यतेदुःखाद्वतिचित्रकथानकम् ४४ गौडदेशेमहारण्येकावे-
रीतीरभूषिते वाडवःसात्विकोनाम्नाचचारपरमंतपः ४५ एकाहंपयसःप्राशीद्दिनैकंवायुभक्षकः दिनैकंतुनिराहारएवंत्रिदिनमुन्न
यत् ४६ एवंव्रतेप्रवृत्तस्यकालःसर्वक्षयंकरः जग्राहस्वस्यदंष्ट्रायांमृतिंप्रापमहाव्रती ४७ विमानेसर्वशोभाढ्येसर्वरत्नविभूषिते
अप्सरोभिःसहक्रीडन्ययौमेरोःशिवास्थितम् ४८ जंबूनाममहावृक्षस्तत्रसेव्यरसोभवत् नदीजांबवतीसंज्ञास्वर्णद्रवसमन्विता
४९ तस्यांमुनयइच्छाभिःक्रीडंतेकुतुकान्विताः अनेकतपसापुण्यसर्वसौख्यसमन्विताः ५० तत्रासौस्वच्छयाक्रीडन्नप्सरोभि-
र्मुदान्वितः प्रतीपमाचरत्तेषांस्वाभिमानमदान्वितः ५१ ततःशप्तःसमुनिभीराक्षसोभवदुर्मुख ततोतिदुःखितःप्राहमुनीन्विद्या
तपोधनान् ५२ अनुगृह्णंतुमांसर्वेविप्रायूयंकृपालवः तदातैरनुगृह्णीतोयदारामहयंभवान् ५३ स्तंभयिष्यतिवेगेनततोराम

कथामाश्रुतिः पश्चान्मुक्तिर्भवित्रीतेशापादस्मात्सुदारुणात् ५४ सप्रोक्तोमुनिभिर्दैवैराक्षसस्त्वमितःप्रभो स्तंभयामासरामस्त्वंयत्त्वयन्नामकीर्तनम् ५५ इतिश्रीपद्मपु॰ पाताल॰ शेषवात्स्यायनसं॰ रामाश्वमेधेशापकीर्तननामसप्तच॰ शतितमोऽध्यायः ४७ शेषउ॰ इतिप्रोक्तंतुमुनिनासश्रुत्यपरवीरहा विस्मयंप्रापपरमंत्वद्विशौनकमब्रवीत् १ शत्रुघ्नउ॰ कर्मणोगहनावार्तायथासात्विकनामधृक् दिवंप्राप्तोपिमहताकर्मणाराक्षसः कृतः २ स्वामिन्वदमहर्षेत्वंकर्मणांत्वगतिर्यथा येनकर्मविपाकेनयादृशंनरकंव्रजेत् ३ शौनकउ॰ धन्योसिराघवश्रेष्ठयत्तेमतिरियंशुभा जानन्नपिहितार्थायलोकानांत्वंब्रवीषिभो ४ कथयामिविचित्राणांकर्मणांविविधागतीः ताःशृणुष्वमहाराजयच्छ्रुत्वामोक्षमाप्नुयात् ५ परवित्तपरापत्यकलत्रंहरतेचयः तस्यपातंतुतामिस्रेकुर्वंतियमकिंकराः ६ पापभोगेनसंमुक्तस्ततोयोनिंतुसौकरीम् तत्रभुक्त्वामहादुःखंमानुषत्वंगमिष्यति ७ रोगान्वितस्तत्रदुःखंदुर्यशोज्ञापकंस्वकम् भूतद्रोहंविधायैवकेवलंस्वकुटुंबकम् ८ पुष्णातिपापनिरतःसोंधतामिस्रकेपतेत् येपुमांसोहिजंतूनांवधंकुर्वंतिवैमृषा ९ तेरौरवेनिपात्यंतेरुरुभिःखाद्यतेयतः यःस्वोदरार्थेभूतानांवधमाचरतिस्फुटम् १० महारौरवसंज्ञेतुपात्यतेसयमाज्ञया योवैनिजंतुजनकंब्राह्मणंद्वेष्टिपापकृत् ११ कालसूत्रेमहादुःखेयोजनायुतविस्तृते योवैनिपशुरोमाणिगवांद्वेषंकरोतियः १२ तावद्वर्षसहस्राणिपच्यतेयमकिंकरैः योभूमौभूपतिर्भूत्वादंडायोग्यंतुदंडयेत् १३ करोतिब्राह्मणस्यापिदेहदंडंविलोलुपः ससूकरमुखेदुष्टैःपीड्यतेयमकिंकरैः १४ दुष्टासुयोनिषुततोजायतेपापमुक्तये ब्राह्मणानांगवांयेतुद्रव्यंवित्तंनयात्यकम् १५ वृत्तिंवागृण्हनेमोहाल्लुंपंतिस्वबलान्नराः तपरेत्यांधकूपेचपतंत्येवभयार्दिताः १६ योनास्वयमुपाहृत्यमधुरंचात्तिलोलुपः नदेवायनसुहृद्भ्योददातिरसनापरः १७ सपतत्येवनरकेकृमिभोजनसंज्ञिते अनापदिनरोयस्तुहिरण्यादिव्यपाहरेत् १८ ब्रह्मस्वंवामहादुष्टेसंदंशेनरकेपतेत् यःस्वदेहंप्रपुष्णातिनान्यंजानातिमूढधीः १९ सपात्यतेतैलतप्तेकुंभीपाकेतिदारुणे योवागम्यांस्त्रियंमोहाद्योषिद्वावाञ्चकामयेत् २० तंतथाकिंकराःसूर्म्यापरिरंभंचकुर्वते येबलाद्वेदमर्यादांलुंपंतिस्वबलोद्यताः २१ तेवैतरिण्यांपतितामांसशोणितभक्षकाः वृषलींयःस्त्रियंकृत्वातयागार्हस्थ्यमाचरेत् २२ पूयोदेनिपतत्येवमहादुःखसम

न्वितः येदंभमाश्रयंतेवैधूर्तालोकस्यवंचने २३ वैशसेनरकेमूढाः पतंतियमताडिताः सवर्णायांस्त्रियांमूढारेतः स्वंपातयंतिच
२४ रेतःकुल्यासुतेपापारेतःपानेषुतत्पराः येचौरावन्हिदादुष्टागरदाग्रामलुंपकाः २५ सारमेयादनेतेवैपात्यंतेपातकान्वि-
ताः कूटसाक्ष्यवदत्यद्धापुरुषः पापसंभृतः २६ पारकीयंतुद्रव्यंयोहरतिप्रसभंबली सोवीचिनरकेपापी अवाग्वक्त्रः पतत्य-
धः २७ तत्रदुःखंमहद्भुक्त्वापापिष्ठांयोनिमाव्रजेत् योनरोरसनास्वादात्सुरांपिबतिमूढधीः २८ तंपाययंतिलोहंस्युरसंधर्मस्य
किंकराः योगुरूनवमन्येतस्वविद्याचारदीपितान् २९ समृतःपात्यतेक्षारकर्दमेधोमुखःपुमान् विश्वासघातंकुर्वंतियेनराधर्मनि
ष्कृताः ३० शूलप्रोतेचनरकेपात्यंतेबहुयातनाः पिशुनायेनरान्सर्वानुद्धेजयंतिवाक्यतः ३१ तेदंदशूकेपतितादंदश्वूकृक्षतांग
काः एवंराजन्ननेकेवैनरकाः पापकारिणाम् ३२ पापंकृत्वाप्रयांत्येतेपीडांयांतिसुदारुणाम् येनश्रुतारामकथान्तेरेनामकृतिः
कृता ३३ तेषांसर्वाणिदुःखानिभवंतिनरकांतरे अन्नयस्यसुखंभूयात्तस्यस्वर्गइतीर्यते येदुःखिनोरोगयुतानरकस्यामहीपते ३४
शेषउवाच एतच्छ्रुत्वामहीपालःकंपमानः क्षणेक्षणे पप्रच्छभूयस्तंविप्रंसर्वसंशयनुत्तये ३५ तानिपापस्यचिन्हानिकथयस्वमहा-
मुने केनपातकचिन्हेनभूर्लोकउपजायते ३६ इतिश्रुत्वानुतद्वाक्यंमुनेःप्रोवाचभूमिपम् शृणुराजन्प्रवक्ष्यामिचिन्हानिपापकारि
णाम् ३७ शौनकउवाच सुरापःश्यामदंतश्चनरकांतेप्रजायते ३८ अभक्ष्यभक्षकारीचजायतेगुल्मिकोदरः उदक्यावीक्षितंभु-
क्त्वाजायतेकृमिलोदरः ३९ श्वमार्जारादिसंस्पृष्टंभुक्त्वादुर्गंधिमान्भवेत् अनिवेद्यसुरादिभ्योभुंजानोजायतेनरः ४० उदररोग
वान्दुःखीमहारोगप्रपीडितः परान्नभुक्तिकरणादजीर्णमभिजायते ४१ मंदोदराग्निर्भवतिद्रव्यपानेकदन्नदः विषदश्छर्दरोगी-
स्यान्मार्गहापादरोगवान् ४२ पिशुनोनरकस्यांतेजायतेश्वासकासवान् ४३ धूर्तोपस्माररोगीस्याच्छूलीचपरतापनः दावाग्निदाप
पकश्चैवरक्तातिसारवान्भवेत् ४४ सुरालयेजलेवापिशकृत्क्षेपंकरोतियः गुदरोगोभवेत्तस्यपापरूपःसुदारुणः ४५ गर्भपातन-
जारोगाःक्षयमेहजलोदराः प्रतिमाभंगकारीचअप्रतिष्ठश्चजायते ४६ दुष्टवादीखंडितःस्यात्खल्वाटःपरनिंदकः सभायांपक्षपातीच

जायतेपक्षघातकः ४७ परोक्तहासकृत्काणः कुनरवीपरहेमहृत् उदंबरीह्यायचौरीकांस्यहृत्तुंडरीकिकः ४८ पुत्रहारीचपुरुषोजाय-
तेपिंगमूर्द्धजः शिष्यहारीचपुरुषोजायतेशीर्षरोगवान् ४९ घृतचौरस्तुपुरुषोजायतेनेत्ररोगवान् लोहहारीचपुरुषोबर्बरांगःप्रजायते
५० चर्महारीचपुरुषोजायतेमेदसावृतः मधुचौरस्तुपुरुषोजायतेबस्तिगंधवान् ५१ तैलचौर्येणभवतिनरःकुंधाडुपीडितः अमान्नह-
रणाच्चैवदंतहीनःप्रजायते ५२ पक्वान्नहरणेनैवजिव्हारोगयुतोभवेत् मातृगामीचपुरुषोजायतेलिंगवर्जितः ५३ गुरुजायाभिग
मनान्मूत्रकृच्छ्रःप्रजायते स्वसृतागमनेनैवरक्तकुष्ठंप्रजायते भ्रातृभार्याभिगमनेगुल्मकुष्ठंप्रजायते ५४ स्वामिगम्यादिगमनेजा
यतेगंडमंडलम् विश्वस्तभार्यागमनेगजचर्माप्रजायते ५५ पितृष्वस्त्रभिगमनेदक्षिणांगेव्रणंभवेत् मातुलान्यास्तुगमनेवामांगेव्र
णवान्भवेत् ५६ पितृव्यपत्नीगमनेकटौकुष्ठंप्रजायते मित्रभार्याभिगमनेमृतभार्यःप्रजायते ५७ स्वगोत्रस्त्रीप्रसंगेनजायतेच-
भगंदरः तपस्विनिप्रसंगेनप्रमेहोजायतेनरे श्रोत्रियस्त्रीप्रसंगेनजायतेनासिकाव्रणी दीक्षितस्त्रीप्रसंगेनजायतेदुष्टरक्तसृक्
५९ स्वजातिजायागमनेजायतेहृदयव्रती जात्युन्नतस्त्रीगमनेजायतेमस्तकव्रणी ६० पशुयोनौचगमनान्मूत्रघातःप्रजायते
एतेदोषानराणास्युर्नरकांतेनसंशयः ६१ स्त्रीणामपिभवंत्येतेतत्तत्पुरुषसंगमात् एवंराजन्हिचिन्हानिकीर्तितानिस्वपापिनाम् ६२
दानपुण्यप्रसंगेनतीर्थादिक्रिययानथा रामस्यचरितंश्रुत्वानपसावाक्षयंव्रजेत् ६३ सर्वेषामेवपापानांहरिकीर्तिधुनिर्नृणाम् क्षालये
त्पातिनापंकंनात्रकार्याविचारणा ६४ योनावमन्येतहरिंतस्ययार्गाविधिश्रिताः तीर्थान्यपिसुपुण्यानिपावितुंनक्षमाणितम् ६५
हसतेकीर्त्यमानंयश्चरित्रंज्ञानदुर्बलः तनस्यनरकान्मुक्तिःकल्पांतेचभविष्यति ६६ याहिराजन्विमोक्षार्थंहयस्यानुचरैःसह श्रा
वयश्रीशचरितंयतोवाहगतिर्भवेत् ६७ शेषउवाच इतिश्रुत्वाप्रहृष्टोभूच्छत्रुघ्नःपरवीरहा प्रणम्यतंपरिक्रम्यययौसैवन
कसंयुतः ६८ तत्रगत्वासहनुमान्हयवर्यस्यपार्श्वतः उवाचरामचरितंमहादुर्गतिनाशकम् ६९ याहिदेवविमानस्त्वंराम
कीर्तनपुण्यतः स्वैरंचरद्युलोकेत्वंमुक्तोभवकुयोनितः ७० इतिवाक्यंसमाकर्ण्यशत्रुघ्नोयावदास्थितः तावद्ददर्शविमलंवि

मानंदैविकंवरम् ७१ सउवाचविमुक्तोहंरामकीर्तनसंश्रुते यामिस्वभवनंराजन्नाज्ञापय महामते ७२ इत्युक्त्वाप्रययौदेवोविमा
नेस्वेपरिस्थितः तदाविस्मयमापुस्तेशत्रुघ्नेनसहानुगाः ७३ ततोवाहोविनिर्मुक्तोगात्रस्तंभान्महीतलात् ययौतद्विपिनंसर्वंभ्रम-
न्यक्षिसमाकुलम् ७४ इतिश्रीपद्मपुराणेपातालखंडेरामाश्वमेधेशेषवात्स्यायनसंवादेहयनिर्मुक्तोनामाष्टाचत्वारिंशत्तमोऽध्यायः
४८ शेषउवाच मासाःसप्ताभवंस्तस्यहयवर्यस्यहेलया चरतोभारतंवर्षमनेकनृपपूरितम् १ संपूजितोभूपवरैःपरीत्यवरभा
रतिम् परीवृतोवीरवरःशत्रुघ्नादिभिरुद्भटैः २ सबभ्रामबहून्देशान्हिमालयसमीपतः नकोपितंनिजग्राहहयंरामबलंस्मरन्
३ अंगवंगकलिंगानांराजभिःसंस्तुतोहयः जगामराज्ञोनगरेसुरथस्यमनोहरे ४ कुंडलंनामनगरमदितेर्यत्रकुंडलम् कर्णे
योपतितंभूमौहतंभयसुकंपयोः ५ यत्रधर्मव्यतिक्रांतिनकरोतिकदापिवा श्रीरामस्मरणप्रेम्णाकरोतिजनतान्वहम् ६ अश्व
त्थानांतुयत्रार्चातुलस्याःप्रत्यहंनृभिः क्रियतेरघुनाथस्यसेवकैःपापवर्जितैः ७ यत्रदेवालयेरम्याराघवप्रतिमायुताः पूज्यंतेप्रत्य-
हंशुद्धचित्तैःकपटवर्जितैः ८ वाचिनामहरेर्यत्रनवैकलहसंकथा हृदिध्यानंतुतस्यैवनचकामफलस्मृतिः ९ दैवनंयत्ररामस्य
वार्ताभिस्तत्रदेवनम् नजातुचिन्नृणामस्तिसत्यव्यसनमानिनाम् १० तस्मिन्वसतिधर्मात्मासुरथःसत्यवान्बली रघुनाथपदस्मारीह
ष्टचित्तःपरोन्मदः ११ किंवर्णयामिरामस्यसेवकंसुरथंवरम् यस्याशेषागुणाभूमौविस्तृताःपावयंत्यघम् १२ सेवकास्तस्यभूपस्य
पर्यटंतःकदाचन अपश्यन्हयमेधस्यहयंचंदनचर्चितम् १३ तेदृष्ट्वाविस्मयंप्राप्ताहयपत्रमलोकयन् स्पष्टाक्षरसमायुक्तंचंदनादि
भिरर्चितम् १४ ज्ञात्वारामेणसंमुक्तंहयंनेत्रमनोहरम् हृष्टाराज्ञेसमास्थायकथयामासुरुत्सुकाः १५ स्वामिन्नयोध्यानगरीपतिस्त
स्यास्तुराघवः हयमेधक्रतोर्योग्योहयोमुक्तःपरिभ्रमन् १६ सतेपुरस्यनिकटेप्राप्तःसेवकसंयुतः गृहाणतंमहाराजहयंवसुमनोहरम्
१७ शेषउवाच इतिश्रुत्वानिजप्रोक्तंवाक्यंहर्षपरिप्लुतः उवाचवीरान्बलिनोमेघगंभीरयागिरा १८ सुरथउवाच धन्यावयंराममुखं
पश्यामःसहसेवकाः गृहीष्यामिहयंतस्यभटकोटिपरीवृतम् १९ तदामोक्ष्यामिवाहंतंयदारामःसमाव्रजेत् कृपार्थंममभक्तस्य

चिरंध्यानरतस्यैवं २० शेषउवाच इत्थमुक्त्वामहीपालःसेवकान्स्वयमादिशत् गृण्हंतुवाहंप्रसभंमोच्योनास्योक्षिगोचरः २१ अनेन
समहान्लाभोभविष्यतितुमेमतम् यद्रामचरणौप्रेक्ष्येशिवब्रह्मादिदुर्लभौ २२ सएवधन्यःस्वजनःपुत्रोवाबांधवोथवा पशुर्वावाहनंचापि
रामासिर्येनसंभवेत् २३ तस्माद्गृहीत्वाकल्यंस्वर्णपत्रेणशोभितम् बध्नंतुवाजिशालायांकामवेषमनोहरम् २४ इत्युक्तास्तेततोगत्वा
वाहंरामस्यशोभितम् गृहीत्वातरसाराज्ञेददुःसर्वशुभांगिमम् २५ राजाप्राप्यमुदाचाश्वंरामस्यदनुजार्दिनः सेवकान्प्राहबुलिनोध-
र्मकृत्यविचक्षणान् २६ वात्स्यायनमहाबुद्धेशृणुष्वैकाग्रमानसः नतस्यविषयेकश्चित्परदाररतोनरः २७ नपरद्रव्यनिरतोनचकामे
षुलंपटः नजिह्वाभिरतोन्यार्गेकीर्तयेद्रामकीर्तनात् २८ यःसेवकान्नृपोवाचयूयंसेवार्थमागताः कथयंतुभवच्चेष्टांधर्मकर्मविशारदाः
२९ एकपत्नीव्रतधरानपरद्रव्यलोलुपाः परापवादनिरतानचवेदोत्पथंगताः ३० श्रीरामस्मरणादीनिकुर्वंतिप्रत्यहंमुदाः तानहंममसेवा-
र्थंरक्षाम्यंतिसुशोभनान् ३१ एतद्विरुद्धधर्माणोयेनराःपापसंयुताः तानहंविषयेमह्यंवासयामिनदुर्मतीन् ३२ तस्यदेशेनपापिष्ठाः
पापंकुर्वंतिमानसम् हरिध्यानहताशेषपातकामोदसंयुताः ३३ यदैवंतस्यवैदेशोराज्ञाधर्मेणसंयुतः तदातत्स्थानराःसर्वेमृतागच्छ-
तिनिर्वृतिम् ३४ यमानुचरानिर्वेशोनाभवत्सुरथ्येपुरे तदायमोमुनेरूपंधृत्वाप्रागान्महीश्वरम् ३५ वल्कलांबरधारीचजटाशोभित
शीर्षकः सरथंतुसभामध्येददर्शहरिसेवकम् ३६ तुलसीमस्तकेयस्यवाचिनामहरेःपरम् धर्मकर्मरतांवार्तांश्रावयत्सुनिजा-
न्जनान् ३७ तदामुनिंनृपोदृष्ट्वातपोमूर्तिमिवस्थितम् ववंदेचरणौतस्यपाद्यादिकमथाकरोत् ३८ सुखोपविष्टंविश्रांतंमुनिं
प्राहनृपाग्रणीः धन्यमद्यजनुर्मेद्यधन्यमद्यगृहंमम ३९ कथासंकथ्यतामद्यरामस्यविविधावराः याःशृण्वतांपापहानिर्भविष्य
तिपदेपदे इत्थमुक्तंसमाकर्ण्यजहाससमुनिर्भृशम् दंतान्प्रदर्शयन्सर्वांस्तालास्फालितपाणिकः ४१ हसंतंतंमुनिंप्राहहसनेका-
रणंकिमु कथयस्वप्रसादेनयथास्यान्मेमनसःसुखम् ४२ ततोमुनिर्नृपंप्राहशृणुराजन्सुधियायुतः यदिदंतेभिधास्यामिस्मितेका-
रणमुत्तमम् ४३ त्वयाप्रोक्तंहरेःकीर्तिकथयस्वममाग्रतः कोहरिःकस्यवाकीर्तिःसर्वेकर्मवशानराः ४४ कर्मणाप्राप्यतेस्वर्गः

कर्मणानरकंव्रजेत् कर्मणैवभवेत्सर्वंपुत्रपौत्रादिकंबहु ४५ शक्रःशतंक्रतूनांतुकृत्वागात्परमंपदम् ब्रह्मापिकर्मणालोकंप्राप्य
सत्याख्यामद्भुतम् ४६ अनेकेकर्मणासिद्धामरुदादयईशिनः कुर्वंतिभोगसौख्यंचअप्सरोगणसेविताः ४७ तस्मात्कुरुष्वयज्ञा
दीन्यजस्वकिलदेवताः यथातेविमलाकीर्तिर्भविष्यतिमहीतले ४८ इतिश्रुत्वातुतद्वाक्यंकोपक्षुभितमानसः उवाचरामैकमनावि
प्रंकर्मविशारदम् ४९ माब्रूहिकर्मणोवार्तांक्षयिष्णुफलदायिनीम् गच्छमन्नगरोपांताद्धिलोकविगर्हितः ५० इंद्रःपतिष्यतिक्षिप्रंप
तिष्यत्यपिपद्मजः नपतिष्यंतिमनुजारामस्यभजनोत्सुकाः ५१ पश्यध्रुवंचप्रह्लादंबिभीषणमथाद्भुतम् येन्येरामस्यभक्तावैकदापिनप-
तंतिते ५२ येरामनिंदकादुष्टास्तानिमेयमकिंकराः ताडयिष्यंतिलोहस्यमुद्गरैःपाशबंधनैः ५३ ब्राह्मणत्वाद्देहदंडंनकुर्यांतेद्विजाध-
म गच्छगच्छममालोकात्ताडयिष्यंतिचान्यथा ५४ इत्थंमुक्तवतिश्रेष्ठेभूपेसुरथसंज्ञिते सेवकाबाहुनाधृत्वानिष्काशयतुमुद्यताः ५५
तदायमोनिजंरूपंधृत्वालोकैश्चवंदितम् प्राहभूपंप्रतुष्टोस्मियाचस्वहरिसेवक ५६ मयाप्रलोभितोवाग्भिर्बह्वीभिरपिसुव्रत चलितो-
नासिरामस्यसेवायाःसाधुसेवित ५७ तदाप्रोवाचभूमीशोयमंदृष्ट्वासुतोषितम् उवाचयदितुष्टोसिदेहिमेवरमुत्तमम् ५८ तावन्म-
मनवैमृत्युर्यावद्रामसमागतः नभयंमेभवत्तोहिकदाचनहिधर्मराट् ५९ तदोवाचयमोभूपमिदंतवभविष्यति सर्वंतदीप्सितंतत्र्यंक
रिष्यतिरमापतिः ६० इत्युक्त्वांतर्हितोधर्मोजगामस्वपुरंप्रति प्रशंसंस्तस्यचरितंहरिभक्तिपरात्मनः ६१ सराजाधार्मिकोरामसेवकः
परयामुदा गृहीत्वाश्वंचरामस्यप्रत्युवाचस्वसेवकान् ६२ मयागृहीतोवाहोसौराघवस्यमहीपतेः सज्जीभवंतुसर्वत्रयूयंरणविशार
दाः ६३ इतिप्रोक्तास्तुतेसर्वेभटाराज्ञोमहाबलाः सज्जीभूताःक्षणादेवसभायांजग्मुरुत्सुकाः ६४ राज्ञोवीरादशसुताश्चंपकोमोह-
कस्तथा रिपुंजयस्तुदुर्वारःप्रतापीबलमोदकः ६५ हर्यक्षःसहदेवश्चभूरिदेवःसुतापनः इतिराज्ञोदशसुताःसज्जीभूतारणांगणे
६६ यांतुमिच्छामकुर्वंस्तेमहोत्साहसमन्विताः राजापिस्वरथंचित्रंहेमशोभाविनिर्मितम् ६७ आरुह्यामाससुजवैर्वाजिभिःसम-
लंकृतम् रणोत्साहेनसंयुक्तःसर्वसैन्यपरीवृतः ६८ सभायांसेवकान्सर्वान्दिशन्नास्तेमहीपतिः ६९ इतिश्रीपद्मपुराणेपातालखं-

डे शेषवात्स्यायनसंवादे रामाश्वमेधे हयग्रहणं नाम एकोनपंचाशत्तमोऽध्यायः ४९ शेष उवाच अथ रामानुजो वेगात्समागत्य स्वसेवकान् पप्रच्छ कुत्र वाहोऽसौ याज्ञिकः सुमनोहरः १ तदा ते वचनं प्रोचुः शत्रुघ्नं सुमहाबलम् न जानीमो भटाः केचिद्धयं नीत्वा गताः पुरे २ वयं न धिक्कृताः सर्वे बलिभी राजसेवकैः अत्र प्रमाणं भगवानिति कर्तव्यता प्रति ३ तच्छ्रुत्वा वचनं तेषां शत्रुघ्नः कुपितो भृशम् दशद्भोष्ठात्स्वदशनान्जिह्वयालेलिहन्मुहुः ४ उवाच वीरो मद्वाहं हृत्वा कुत्र गमिष्यसि इदानीं पातये बाणैः पुरं जनसमन्वितम् ५ इत्युक्त्वा सुमतिं प्राह कस्येदं पुटभेदनम् को वात्र तस्याधिपतिर्यो मे वाहमजीहरत् ६ शेष उवाच इति वाक्यं समाकर्ण्य भूपतेः कोपसंयुतम् जगाद सुमतिर्वाचं स्फुटाक्षरसमन्विताम् ७ इदं च कुंडलं नाम नगरं सुमनोहरम् अस्मिन्वसति धर्मात्मा सुरथः क्षत्रियाबली ८ नित्यं धर्मपरो रामचरणाद्वसेवकः मनसा कर्मणा वाचा हनूमानिव सेवकः ९ चरितान्यस्य शतशो वर्तंते धर्मकारिणः महाबलपरीवारः सुरथः सर्वशोभनः १० महद्युद्धं भवेत्तत्र हृतश्चेद्धाह सत्तमः अनेके प्रपतिष्यंति वीरा रणविशारदाः ११ एवमुक्तं समाश्रुत्य शत्रुघ्नः सचिवं प्रति उवाच पुनरप्येवं वचनं वदतां वरः १२ शत्रुघ्न उवाच कथमत्र प्रकर्तव्यं रामश्वाऽनेन चाहृतः नायाति योद्धुं प्रबलकटकं वीरसेवितम् १३ सुमतिरुवाच दूतं प्रेष्यो महाराज राजानं प्रति वाग्मिकः यद्वाक्येन समायाति बलेन बलिनां वरः १४ नो चेदज्ञानतो वाहो धृतः केनापि मानिना अर्पयिष्यति नः साधु वाहं क्रतुवरं शुभम् १५ इति श्रुत्वा तु तद्वाक्यं शत्रुघ्नो बुद्धिमान्बली अंगदं प्रत्युवाचेदं वचनं विनयान्वितम् १६ शत्रुघ्न उवाच याहि त्वं निकटस्थं वै सुरथस्य महापुरम् दूतत्वेन ततो गत्वा मा ब्रूहि नृपतिं प्रति १७ त्वया धृतो रामहयो ज्ञानतो ज्ञानतोऽपि वा अर्पयास्वथवा याहि प्रधनं वीरसंयुतः १८ रामस्येदो त्वं लंकायां रावणं प्रति यत्कृतम् तथैव कुरु भूयिष्ठबलसंयुत बुद्धिमन् १९ शेष उवाच एतच्छ्रुत्वांगदो वीर ओमिति प्रोच्य भूमिपम् जगाम संसदो मध्ये वीरश्रेणिसमन्विते २० ददर्श सुरथं भूपं तुलसीमंजरीधरम् रामभद्रं रसनया ब्रुवंतं सेवकान्जनान् २१ राजापि दृष्ट्वा प्लवगं मनोहरवपुर्धरम् शत्रुघ्नदूतं मत्वापि वाचं संप्रत्यभाषत २२ सुरथ उवाच प्लवगाधिप कस्मात्त्वमागतोऽत्र कथं भवान् ब्रूहि मे कारणं सर्वं यया ज्ञात्वा करोमि तत् २३ शेष उवाच

इतिसंभाषमाणंतंप्रत्युवाचकपीश्वरः विस्मयन्चेनसिभृशंरामसेवाकरंनृपम् २४ जानीहिमांनृपश्रेष्ठवालिपुत्रंहरिप्रियम् श
त्रुघ्नेनचदूतत्वेप्रेषितोभवतोऽतिकम् २५ सेवकैःकश्चिदागत्यध्वनोऽस्योममसांप्रतम् अज्ञानतोमहान्याप्यकुर्वद्भिःसहसानृप २६
तदश्वंतस्वराजेनसहपुत्रैर्मुदान्वितः शत्रुघ्नंयाहिचरणेपतित्वाशुसमर्पय २७ नाचेच्छत्रुघ्ननिर्मुक्तनाराचैःक्षतविग्रहः पृथ्वीतलमलं
कुर्वन्शयिष्यसिविसार्थिकः २८ येनलोकपतिर्नाशियाषितोलीलयाक्षणात् तस्याश्वयागयोग्यंतुहृत्वाकुत्रगमिष्यसि २९
शेषउवाच इत्यादिभाषमाणंतुप्रत्युवाचमहीश्वरः सर्वंतथ्यंब्रवीषित्वंनानृतंतवभाषितम् ३० परंशृणुष्वमद्वाक्यंशत्रुघ्नपदसे
वक मयाधृतोमहानश्वोरामचंद्रस्यधीमतः ३१ नमोक्षेसर्वथावाहंशत्रुघ्नादिभियात्वहम् चेद्रामःस्वयमागत्यदर्शनंदा
स्यतेमम ३२ तदाहंचरणौनत्वादास्यामिसुतसंयुतः सर्वराज्यंकुटुंबचधनंधान्यंबलंबहु ३३ क्षत्रियाणामयंधर्मोनयेनापि
विरुध्यते धर्मेणयुद्धंतत्रापिकर्तव्यंराममिच्छता ३४ शत्रुघ्नादीन्प्रवीरांस्तानधुनाहंक्षणादपि जित्वाबध्नामिमद्देहेनोचेद्रा
मसमाव्रजेत् ३५ शेषउवाच इतिश्रुत्वांगदोधीमान्जहासनृपतिंतदा उवाचचमहद्वाक्यंमहाधैर्यसमन्वितम् ३६ अंगद
उवाच बुद्धिहीनःप्रवदसिवृद्धत्वात्सागतातव यत्त्वंशत्रुघ्ननृपतिंधिःकरिष्यन्धियाबली ३७ यस्तुधृत्वारिपुंदैत्यंलवणंलीलया
वधीत् येनानेकेजिताःसंख्येवैरिणःप्रबलोद्धताः ३८ विद्युन्मालीहतोयेनराक्षसःकामवेगवान् त्वंतंबभाषिसिवीरेंद्रमतिहीं
नःप्रभासिमे ३९ भ्रातृजोयस्यसुबलीपुष्कलःपरमास्त्रवित् येनरुद्रगणःसंख्येवीरभद्रःसुतोषितः ४० वर्णयामिकिमेतस्य
पराक्रांतिबलोर्जिताम् येननास्तिसमःपृथ्व्यांबलेनयशसःश्रिया ४१ हनूमान्यस्यनिकटेरघुनाथपदाब्जधीः तस्यानेकानिक
र्माणिभविष्यंतिश्रुतानिते ४२ त्रिकूटोराक्षसैःपूर्णोदग्धोयेनक्षणाद्बलात् अक्षोयेनहतःपुत्रोराक्षसेंद्रस्यदुर्मतिः ४३ द्रो
णोनामगिरिर्येनपुच्छाग्रेणसुवेष्टितः आनीतोजीवनार्थंतुसैनिकानांमुहुर्मुहुः ४४ जानातिरामचरितंनान्यज्जानातिमूढधीः (यं
कपींद्रमनाकाशाद्धिस्मारयतिसेवकाम्) ४५ सुग्रीवाद्याःकपींद्रायेपृथ्व्यांसर्वाग्रसंतिये तेशत्रुघ्ननृपंसर्वेसेवंतेप्रेक्षणोत्सुकाः

४६ कुशध्वजोनीलरत्नोरिपुतापोमहास्त्रवित् प्रतापाग्र्यःसुबाहुश्चविमलःसमुदस्तथा ४७ राजावीरमणिःसत्ययुतोरामस्यसेव
कः एतेन्येपिनृपाभूमेःपतयःपर्युपासते ४८ तत्रत्वंक्षीरजलधौमशकःकोभवानिति तज्ज्ञात्वागच्छशत्रुघ्नंकृपालपुत्रकैर्युतः ४९
वाहंसमर्प्यगंतासिरामंराजीवलोचनम् इत्थंकृतार्थीकुरुषेस्वागानिजनुषासह ५० शेषउवाच राजाप्रोवाचतंदूतंप्रब्रुवंतमनेकधा
एतान्दर्शयसिक्षिप्रंसर्वेनममभोनराः ५१ यादृशंमद्बलंदूततादृशंनहनूमतः योरामंपृष्ठतःकृत्वाप्रागाद्रामस्यपालने ५२ यद्यहं
मनसावाचाकर्मणाकुहकान्यतः भजामिरामंतर्ह्याशुदर्शयिष्यतिस्वांतनुम् ५३ अन्यथाहनुमन्मुख्यावीराबध्नंतुमांबलात् गृ
ण्हंतुवाहंतरसारामभक्तिसमन्विताः ५४ गच्छत्वंनृपशत्रुघ्नंकथयस्वममोदितम् सज्जीभवतुसुभटाएषयामिरणेबली ५५
सविचार्ययथायुक्तंकरिष्यतिरणांगणे मोचयंतुमहावाहनवामासादयंतुते ५६ शेषउवाच इतिश्रुत्वास्मितंकृत्वाययौवीरोयतोनृपः
गत्वानिवेदयामासयथोक्तंसुरथेनवै ५७ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेअंगदस्यदूतत्ववाक्यं
नामपंचाशत्तमोऽध्यायः ५० शेषउवाच तच्छ्रुत्वाभाषितंतस्यसुरथस्यांगदाननात् सज्जीभूतारणेसर्वेरथस्थारणकोविदाः १
पटहानांनिनादोभूद्भेरीनादस्तथैवच वीराणांगर्जनानादःप्रादुर्भूतोरणांगणे २ रथाश्वीत्कारशब्देनगजानांबृंहितेनच व्याप्तंत-
त्सकलंविश्वंदिवंयातोमहारवः ३ रणोत्साहेनसंयुक्तावीरारणविशारदाः कुर्वंतिविविधान्नादान्कातरस्यभयंकरान् ४ एवंको
लाहलेवृत्तेसुरथोनामभूमिपः स्वसुतैःसैनिकैश्चायवृतःप्रायाद्रणांगणे ५ गजैरथैर्हयैःपत्तिव्रजैःपूर्णांतुमेदिनीम् कुर्वन्समुद्रइव
तांप्लावयन्ददृशोभटैः ६ शंखनादेनसंघुष्टंजयनादैस्तथैवच वीक्ष्यतंप्रधनोद्युक्तंसुमतिंप्राहभूमिपः ७ शत्रुघ्नउवाच एषराजा-
समायातोमहासैन्यपरीवृतः अत्रयत्कृत्यमस्माकंतद्वदस्वमहामते ८ सुमतिरुवाच योद्धव्यमत्रबहुभिर्वीरैरणविशारदैः पु-
ष्कलादिभिरत्युग्रैःसर्वशस्त्रास्त्रकोविदैः ९ राज्ञासहसमीरस्यपुत्रःपरमशौर्यवान् युद्धंकरोतुसुबलःपरयुद्धविशारदः १० शेष
उवाच ब्रुवत्येवमहामात्येयावत्तावन्नृपात्मजाः रणांगणेधनूंष्युच्चैःस्फारयामासरुद्धताः ११ तान्वीक्ष्ययोधाःसुबलाःपुष्कला

घोरणोत्कटाः अभिजग्मुःस्यंदनैःस्वैर्धनुर्बाणकरामताः १२ चंपकेनमहावीरःपुष्कलपरमास्त्रवित् द्वैरथेनैवंयुयुधेमहावीरेण-
शालिना १३ मोहकंयोधयामासजानकिःसकुशध्वजः रिपुंजयेनविमलोदुर्वारेणसुबाहुकः १४ प्रतापिनाप्रतापाग्र्योबलमोदे
नचांगदः हर्यक्षेणनीलरत्नःसहदेवेनसत्यवान् १५ राजावीरमणिर्भूरिदेवेनयुयुधेबली असुतापेनचोग्राश्वोयुयुधेबलसंयु-
तः १६ द्वैरथंतुमहद्युद्धमकुर्वन्युद्धकोविदाः सर्वेशस्त्रास्त्रकुशलाःसर्वेयुद्धविशारदाः १७ एवंप्रवृत्तेसंग्रामेसुरथस्यसुते
स्तदा अत्यंतकदनंतत्रबभूवमुनिसत्तम १८ पुष्कलश्चंपकंप्राहकिन्नामासिनृपात्मज धन्योसियोमयासार्धंरणमध्यमुपे
यिवान् १९ इदानींतिष्ठकिंयासिकथंतेजीवितंभवेत् एहियुद्धंमयासार्धंसर्वशस्त्रास्त्रकोविद २० इत्यभिव्याहृतंतस्यश्रु
त्वाराजात्मजोबली जगादपुष्कलंवीरोमेघगंभीरयागिरा २१ चंपकउवाच ननाम्नानकुलेनेदंयुद्धमत्रभविष्यति तथापित
ववक्ष्येहंस्वनामबलपूर्वकम् २२ ममम्माताराघवेशोमत्पिताराघवःस्मृतः ममबंधूरामचंद्रःस्वजनोममराघवः २३ मन्नाम-
रामदासश्चसदारामस्यसेवकः तारयिष्यतिमांयुद्धेरामोभक्तकृपाकरः २४ लोकानामितमास्थायप्रब्रवीमितवाधुना सुरथस्य
सुतश्चाहंमातावीरमतीमम २५ मन्नामायामयोसवान्सुशोभान्विदधातियः मधुपायद्रसावासं त्यजंतिमधुमोहिताः २६ व-
र्णेनस्वर्णसदृशोमध्येलिंगवपुर्धरः तदाख्यायाभिधावीरजानीहिमममोहिनीम् २७ युध्यस्वबाणैःप्रधनेनकोजेतुंहिमांक्षमः इ-
दानींदर्शयिष्यामिस्वपराक्रममद्भुतम् २८ शेषउवाच इतिश्रुत्वामहद्वाक्यंपुष्कलोहृदितोषितः तंदुर्जयंमन्यमानःशरान्मुंचन्र
णेभवत् २९ शरसंघप्रमुंचंतंकादिशःपुष्कलोरथी चंपकःकोपसंयुक्तोधनुःसज्यमथाकरोत् ३० मुमोचनिशितान्बाणान्वैरिहृ
द्विदारणान् स्वनामचिन्हितान्स्वर्णपुंखनालसमन्वितान् ३१ तान्चिच्छेदमहावीरःपुष्कलःप्रधनांगणे शरांधकारंसर्वत्रमुंचन्न-
बाणान्शिलाशितान् ३२ स्वबाणच्छेदनंदृष्ट्वाकृतंवीरेणचंपकः आव्हयामासबलिनंपुष्कलंकोपपूरितम् ३३ मात्रयाहिरणंत्य
क्त्वेतिब्रुवन्समरेपुनः पुष्कलंहृदयेबाणैर्विव्याधदशभिःपरैः ३४ तेबाणाःपुष्कलस्यास्यहृदयेतीव्रवेगिनः आगत्यसुभृशंलग्नाः-

शोणितंपपुरूर्जिताः ३५ तैर्बाणैर्व्यथितोवीरः शरान्पंचसमाददे सुतीक्ष्णान्समहासत्वाद्दारयन्पर्वतानिव ३६ तेबाणास्तस्यबाणा
श्चपरस्परमयोर्जिताः आकाशेरचितारिछन्नाःशतधाराजसूनुना ३७ छित्वाबाणान्सुतीक्ष्णाग्रान्सुरथांगोद्भवोबली बाणान्शतंसमा
धत्तपुष्कलस्ताडितोबली ३८ तेबाणाःशतधाछिन्नाःपुष्कलेनमहात्मना अपतन्समरोपांतेशरवेगप्रपीडिताः ३९ तदातत्सुमहत्क-
र्मदृष्ट्वाराज्ञःसुतोबली सहस्रेणशराणांचताडयन्वक्षसिस्फुटम् ४० तानप्याशुप्रचिच्छेदपुष्कलःपरमास्त्रवित् पुनरप्याशुस्वेचापेस
माधत्तायुतशरान् ४१ तानप्याशुप्रचिच्छेदपुष्कलःपरमास्त्रवित् ततोस्यंतंप्रकुपितःशरवृष्टिमथाकरोत् ४२ शरवृष्टिसमाघातंम-
त्वाचंपकवीरहा साधुसाधुप्रशंसंस्तंपुष्कलंसमताडयत् ४३ पुष्कलश्चंपकंदृष्ट्वामहावीर्यसमन्वितम् ब्रह्मास्त्रंसमधत्ताशुस्वेचा
पेसर्वशरास्त्रवित् ४४ तेनमुक्तमहास्त्रंचप्रजज्वालदिशोदश खंरोदसीव्याप्यविश्वंप्रलयंकर्तुमुद्यतम् ४५ चंपकोमुक्तमस्त्रंत
दृष्ट्वासर्वास्त्रकोविदः तत्संहर्तुंतदेवास्त्रंमुमोचरिपुमुद्यतम् ४६ एकीभूतंतद्द्वयोस्तेजः प्रलयंमेनिरेजनाः संजहारतदास्त्रास्त्र
मेकीभूतंपरास्त्रकम् ४७ तत्कर्मचाद्भुतंदृष्ट्वापुष्कलस्तमथासृजत् शरानमोघास्तुतदाचंपकंसक्रुधाहनत् ४८ चंपकस्तान्
शरान्मुक्तान्नगणय्यमहामनाः रामास्त्रंप्रमुमोचाथपुष्कलंप्रतिदारुणम् ४९ तन्मुक्तमस्त्रमालोक्यचंपकेनमहात्मना छेत्तुंयावन्म
नश्चक्रेतावद्धिद्धःशरेणसः ५० बद्धश्चंपकवीरेणरथस्थेस्थापितःपुनः पुरंप्रेषयितुंतावन्मनश्चक्रेमहामनाः ५१ हाहाकारोम-
हानासीद्युद्धेपुष्कलसंहृते शत्रुघ्नंप्रययुर्योधाःपलायनपरायणाः ५२ भग्नांस्तान्वीक्ष्यशत्रुघ्नोहनूमंतमुवाचह केनवीरेणमेभ्र
ग्नंबलंवीरैरलंकृतम् ५३ तदोवाचमहीनाथपुष्कलंपरवीरहा बध्वानयतिवीरोसौचंपकश्चमदोद्धतः ५४ तस्यतद्वाक्यमा
कर्ण्यशत्रुघ्नःकोपसंयुतः उवाचपवनोद्भूतमाश्वाशुनृपात्मजात् ५५ महाबलसुतस्यास्यबध्वाद्यःपुष्कलंमदम् तस्मान्मोचयवीराग्र्य
कथंतिष्ठसिचाहवे ५६ एतद्वाक्यंसमाकर्ण्यहनूमानोमितिब्रुवन् जगामतंमोचयितुंपुष्कलंचंपकाद्भटात् ५७ हनूमंतमथालो-
क्यतंमोचयितुमागतम् बाणैःशतैश्चसाहस्रैर्जघानपरकोपनः ५८ बाणांस्तान्संबभंजाशुमुक्तांस्तेनमहात्मना पुनरप्येनमेवाशुबाणा

मुंचन्महाबलः ५९ तान्सर्वांश्चूर्णयामासनाराचान्वैरिमोचितान् शालंकरेणचोद्धृत्यजघाननृपनंदनम् ६० शालंतेनविनिर्मुक्तंतिलशः
कृतवान्बली गजोहनूमतामुक्तोनृपनंदनमस्तके ६१ सोप्याहतश्चंपकेनमृतोभूमौपपातसः शिलाःसंमोचयामासहनूमान्पुरमारुतवि
त् ६२ चंपकस्ताःशिलाःसर्वाःक्षणाच्चूर्णितवान्भृशम् बाणयंत्रिकयाब्रह्मन्महच्चित्रमभूदिदम् ६३ स्वमुक्तास्ताःशिलाःसर्वाश्चूर्णितावी
क्ष्यमारुतिः चुकोपहृदयेस्वंतंबाहुवीर्यमतिस्मरन् ६४ आगत्यचकरेधृत्वानभस्युत्पत्तितःकपिः तावद्धयोनेत्रपथादुपरिक्षिप्रवेग
वान् ६५ चंपकस्तंहनूमंतंयुयुधेनभसिस्थितः बाहुयुद्धेनमहताताडितःकपिपुंगवः ६६ चुकोपमानसेवीरोगर्वपर्वतदारुणः पदा
धृत्वाचंपकंनताडयामासभूतले ६७ ताडितोसौकपींद्रेणक्षणादुत्थायवेगवान् हनूमंतंतुलांगूलेधृत्वाबभ्रामसर्वतः ६८ कपींद्रस्त-
द्बलंवीक्ष्यहसन्पादेगृहीत्वातुनः भ्रामयित्वाशतगुणंधरापृष्ठेव्यपातयत् ६९ पपातभूमौसुबलोराजसूनुःसचंपकः मूर्छितोवीरभूपोभू
त्तस्मिन्युद्धेसुदारुणे ७० तदाहाहेतिवैलोकाश्चक्रुशुश्चंपकानुगाः पुष्कलंमोचयामासबद्धंचंपकपाशतः ७१ इतिश्रीपद्मपुराणे
पातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेएकपंचाशत्तमोऽध्यायः ५१ शेषउवाच चंपकंपतितंदृष्ट्वासुरथःक्षत्रियोबली पुत्रदुःखप
रीतांगोजगामस्यंदनेस्थितः १ कपींद्रमाजुहावाथसुरथःकोपसंयुतः निश्वासवेगान्मुंचन्सन्महाबलसमन्वितः २ अह्वयंतंनृपेंद्र-
स्त्वानिर्जरवीरःकपीश्वरः सजगामभहावीरोमहावेगसमन्वितः ३ तमागतंहनूमंतंतूर्णीकुर्वंतमुद्भटान् उवाचसुरथोराजामेघगंभीर-
सुस्वरः ४ सुरथउवाच धन्योसिकपिवर्यत्वंमहाबलपराक्रमः येनराममहत्कृत्यंकृतंराक्षसकेपुरे ५ त्वरामचरणस्यासिसेवको
भक्तिसंयुतः त्वयावीरेणमत्पुत्रःपातितश्चंपकोबली ६ इदानींत्वांतुसंबध्यगंतास्मिनगरेमम यत्वात्तिष्ठस्वकीशेशसत्यमुक्तमिदंस्फु-
तम् ७ इतिभाषितमाकर्ण्यसुरथस्यकपीश्वरः उवाचधीरयावाण्यारणवीरैकशोभितः ८ हनुमानुवाच त्वंरामचरणस्मारीवयंराम-
स्यसेवकाः बध्नासिचेन्मांप्रसभंमोचयिष्यतिमत्प्रभुः ९ कुरुवीरभवत्स्वांतस्थितंसत्यप्रतिश्रुतम् रामंस्मरन्नैवदुःखंयातिवेदावदंत्य
तः १० शेषउवाच इतिब्रुवंतंसुरथःप्रशंस्यपवनात्मजम् विव्याधबाणैर्बहुभिःशाणाश्लीढैःसुतेजितैः ११ तान्मुक्तानगणय्याथ

बाणान्शोणितपानिनः करेजग्राहकोदंडंसज्जंशरसमन्वितं १२ गृहीतंकरयोश्चापंबभंजकुपितःकपिः चीत्कुर्वन्त्रासयन्वीरान्नरैर्वेदीर्णा
न्सृजन्भटान् १३ तेनभग्नंधनुर्दृष्ट्वास्वकीयंगुणसंयुतम् अपरंधनुरादत्तमहद्गुणविशोभितम् १४ तच्चापिजगृहेदोषात्कश्चिच्चापंब-
भंजच अन्यच्चापंसमादत्ततद्बभंजमहाबलः १५ तस्मिंश्चापेप्रभग्नेपिसोन्यद्धनुरुपाददत् तच्चापंसबभंजाशुमहावेगसमन्वितः १६ एवं
राज्ञस्तुचापानामशीतिर्विदलीकृता क्षणेक्षणेमहारोषात्कुर्वन्नादाननेकधा १७ तदात्यंतप्रकुपितःशक्तिमुग्रामथाददे शक्त्यासताडितो-
वीरःपपातक्षणमुत्सुकः १८ उत्थाप्यस्यंदनंराज्ञोजग्राहकुपितोभृशम् उड्डीनस्तंगृहीत्वातुसमुद्रंप्रतिवेगतः १९ तमुड्डीनंसमालक्ष्यसुरथःपरवी
रहा ताडयामासपरिघैर्हृदिमारुतिमुद्धतम् २० मुक्तस्तेनरथोदूराच्चूर्णीभूतोभवत्क्षणात् अन्यंरथंसमारुह्ययौवेगात्समीरजम् २१
रथपुच्छेनहनुमान्संवेष्ट्यप्रधनांगणे हयसारथिसंयुक्तंबभंजसपताकिनम् २२ अन्यंरथंसमास्थाययौराजामहाबलः बभंजतंरथंवेगान्
मारुतिःकुपितांगकः २३ भग्नंतंस्यंदनंवीक्ष्यसुरथोन्यंसमाश्रितः भग्नःसतेनसहयोरथःसारथिसंयुतः २४ एवमेकोनपंचाशद्रथाभग्ना
हनूमता तत्कर्मवीक्ष्यराजापिविसस्मायससैनिकः २५ कुपितःप्राहकीशेंद्रंधन्योसिपवनात्मज पराक्रमात्त्विदंकर्मनकर्तानकरिष्यति
२६ क्षणमेकंप्रतीक्षस्वयावत्सज्यंधनुस्त्वहम् करोमिपवनोद्भूतरामपादाब्जषट्पदः २७ इत्युक्त्वाचापमासज्यंकृत्वारोषपरिप्लुतः
अस्त्रंपाशुपतंनामसंदधेशरउल्बणे २८ ततोभूताश्चवेतालाःपिशाचायोगिनीमुखाः प्रादुर्बभूवुःसहसाभीषयंतःसमीरजम् २९ कपिः
पाशुपतेरस्त्रैर्बद्धोलोकैरवीक्षितः हाहेतिचवदंत्येतेयावद्बद्धःसमीरजः ३० स्मृत्वारामंस्वमनसात्रोदयामासतत्क्षणात् समुक्तमात्रःसहसा-
युयुधेसुरथंनृपम् ३१ तंमुक्तगात्रंसंवीक्ष्यसुरथःपरमास्त्रवित् महाबलंमन्यमानोब्राह्ममस्त्रंसमाददे ३२ मारुतिर्ब्राह्ममस्त्रंतुनिर्जगालहस-
न्बली तन्निगीर्णंनृपोदृष्ट्वारामंसस्मारभूमिपः ३३ स्मृत्वादाशरथिंरामंरामास्त्रंस्वशरासने संधायतंजगादेदंबद्धोसिकपिपुंगव ३४ श्रुत्वा
तत्प्रक्रमोयावत्तावद्बद्धोरणांगणे राज्ञारामास्त्रतोवीरोहनुमान्रामसेवकः ३५ उवाचभूपंहनुमान्किंकरोमिमहीभुज मत्स्वाम्यस्त्रे
णसंबद्धोनान्येनप्राकृतेनवै ३६ तन्मानयामिभूपालनयस्वस्वपुरंप्रति मोचयिष्यतिमत्स्वामीआगत्यसदयानिधिः ३७ बद्धंसमी-

रजेक्रुद्धःपुष्कलोभूमिपंययौ तंपुष्कलंसमायांतंविव्याधवसुभिःशरैः ३८ अनेकबाणसाहस्रैर्निजघाननृपोबली राजानं
चतथावीरःपुष्कलःसमरेबली ३९ ववर्षानेकसाहस्रैर्बाणैरामंहृदिस्मरन् राज्ञानेकेशरास्तस्यछिन्नाःप्रधनमंडले ४० एवं
समरसंक्रुद्धेसुरथेपुष्कलेतथा बाणैर्व्याप्तंजगत्सर्वंस्थाणुभूयश्चरिष्णुच ४१ तेषांरणोद्यमंदृष्ट्वामुमुहुःसर्वसैनिकाः मान
वानांतुकावार्ताक्षीणाआसन्समायुषः ४२ अस्त्रप्रत्यस्त्रविगमैर्महामंत्रपरिष्कृतैः बभूवतुमुलंयुद्धंवीराणांरोमहर्षणम्
४३ तदाप्रकुपितोराजानाराचंतुसमाददे छिन्नःसतुक्रुधामुक्तैर्वत्सदंतैःसभाजितैः ४४ छिन्नेतस्मिन्शरेराजाकोपाद-
न्यंसमाददे छिनत्तियावत्सशरंतावल्लग्नःशरोहृदि ४५ मूर्च्छांप्रापमहातेजापुष्कलोमहदुद्भटः युद्धंविधायसुमहद्राज्ञास-
हमहामतिः ४६ पुष्कलेपतितेराजाशत्रुघ्नःशत्रुतापनः सुरथंप्रतिसंक्रुद्धोजगामस्यंदनस्थितः ४७ उवाचसुरथंभूपंरामभक्त
तामहाबलः त्वयामहत्कृतंकर्मयद्धृतःपवनात्मजः ४८ पुष्कलोपिमहावीरस्तथान्येममसैनिकाः पातिताःप्रधनेघोरेमहाबल-
पराक्रमाः ४९ इदानींतिष्ठमद्वीरान्पातयित्वारणांगणे कुत्रयास्यसिभूमीशसहस्वममसायकान् ५० इत्थमाश्रुत्यवीरस्यभाषि-
तंसुरथोबली जगादसमपादाब्जंदधच्चेतसिशोभनं ५१ मयातेपातिताःसंख्येवीरामरुतजोन्मुखाः इदानींपातयिष्यामित्वा-
मपिप्रधनांगणे ५२ स्मरस्वरामंयोवीरःस्त्वामागत्यप्ररक्षति अन्यथाजीवितंनास्तिमत्पुरःशत्रुतापनः ५३ इत्युक्त्वाबाणसाह-
स्रैस्तंजघानमहीपतिः शत्रुघ्नःशरसंघातंमुंचंतंवन्हिदैवतम् ५४ अस्त्रंमुमोचदाहायशरणानतपर्वणाम् तदस्त्रंमुक्तमालो-
क्यराजावैसुरथोमहान् ५५ वारुणास्त्रेणशमयन्विव्याधशरकोटिभिः तदात्वद्योगिनीदत्तमस्त्रंधनुषिसंदधे ५६ मोहनंसर्ववीरा-
णांनिद्राप्रापकमद्भुतम् तन्मोहनंमहास्त्रंसवीक्ष्यराजाहरिंस्मरन् ५७ जगादशत्रुघ्नमयंसर्वशस्त्रास्त्रकोविदः मोहितस्यमममंत्री
मद्रामस्यस्मरणेनहि ५८ नान्यन्मोहनमाभातिममापिभयतापदम् इत्युक्तवतिवीरेतुमुमोचसमहास्त्रकम् ५९ तेनबाणेन-
संछिन्नंपपातरणमंडले तन्मोहनंमहास्त्रंतुनिःफलंवीक्ष्यभूमिपे ६० अत्यंतविस्मयंप्राप्यबाणंधनुषिसंदधे लवणोयेननि-

रा०मे०
७०

हतोमहासुरविमर्दनम् ६१ तंबाणंचापआधत्तघोरंकालानलप्रभम् तंवीक्ष्यराजाप्रोवाचबाणोयमसुतांहृदि ६२ लग्नतेरामभ्र
तृस्यसंमुखेपिनभात्यसौ इत्येवंभाषमाणेतुबाणेनानेनशत्रुहा ६३ विव्याधहृदयेक्षिप्रंवन्हिज्वालायुतेनच ६४ तेनबाणेनदुःखि
तोमहापीडासमन्वितः रथोपस्थेक्षणंमूर्छामवापपरतापनः ६५ लक्ष्मणांतांव्यथांतीत्वाजगामरिपुमग्रतः सहस्वैकंप्रहारंमेकुत्र
यासिममाग्रतः ६६ एवमुक्त्वामहासंख्येबाणमाधत्तसायके ज्वालामालापरीतांगंस्वर्णपुंखसमन्वितम् ६७ सबाणोधनुषोन्मु
क्तःशत्रुघ्नेनपथिस्थितः छिन्नोप्यग्रफलेनाशुहृदयंचसमाविशत ६८ तेनबाणेनसंमूर्छ्यपपातस्यंदनोपरि ततोहाहाकृतंसैन्यंभ
ग्नंसर्वंपराद्रवत् ६९ सुरथोजयमापेदेसंग्रामेरामसेवकः दशवीराद्दशसुतेर्मूर्छिताःपतिताःक्वचित् ७० इतिश्रीपद्मपुराणेपा
तालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेचारनिरीक्षणनामद्विपंचाशत्तमोऽध्यायः ५२ शेषउवाच सुग्रीवस्तुतुकटकंभग्नंवीक्ष्यर
णांगणे स्वामिनंमूर्छितंचापिययौयोद्धुंनृपंप्रति १ आगच्छभूपसर्वान्नोमूर्छयित्वाकुतोभवान् क्षिप्रंगच्छसिमादेहियुद्धंरण
विशारद २ एवमुक्त्वानगंकंचिद्विशालंशिखयायुतम् उत्पाट्यप्राहरत्तस्यमस्तकेबलसंयुतः ३ तेनप्रहारेणमहाबलोनृपःस
वीक्ष्यसुग्रीवमथोस्वचापे बाणान्समाधायशितान्सरोषोजघानवक्षस्यतिपौरुषोबली ४ तान्बाणान्व्यधमत्सर्वान्सुग्रीवःसहसा
हसन् ताडयामासहृदयेसुरथंसुमहाबलम् ५ पर्वतैःशिखरैश्चैववनगैर्द्विरदवर्ष्मभिः वेगात्संताडयामासदारयन्सुरथंन
रैः ६ तमप्याशुबबंधास्त्राद्रामसंज्ञात्सुदारुणात् बद्धःकपिवरस्तेनरणेरामस्यसेवकः ७ गजोयथायसमयींशृंखलांपाद
लंघितुम् प्राप्यकिंचिन्नवैकर्तुंशक्नोतिसतथाह्यभूत् ८ जितंतेनमहाराज्ञासुरथेनसुपुत्रिणा सर्वान्वीरान्रथेस्थाप्यययौस्व
नगरंप्रति ९ गत्वासभायांसुमहान्बद्धंमारुतिमब्रवीत् स्मरस्वीरघुनाथंत्वंदयालुंभक्तपालकम् १० यथात्वांबंधनात्सद्यो
मोचयिष्यतिसुष्ठुधीः नान्यथायुतवर्षेणमोचयिष्यतिबंधनात् ११ इत्युक्तमाकर्ण्यसमीरजस्तदासुबद्धमात्मानमवेक्ष्यवीरान्
संमूर्छितान्शत्रुशराभिघातपीडायुतान्बंधनमुक्तयेस्मरत् १२ श्रीरामचंद्रंरघुवंशजातंसीतापतिंकंजपलाशनेत्रम् स्वमुक्तयेबं-

अ०
५२

७०

धनतःकृपालुंसस्मारसर्वैःकरणैर्विशोकैः १३ हनूमानुवाच हानाथहानरवरोत्तमहादयालोसीतापतेरुचिरकुंतलशोभिवक्त्र भक्ता

र्तिदाहकमनोहररूपधारिन्मांबंधनात्सपदिमोचयमाविलंबः १४ संमोचितास्तुभवतोगजपुंगवाद्यादेवाश्चदानवकुलैरभिद्रुत्यमानाः

तत्सुंदरीशिरसिसंस्थितकेशबंधःसंमोचितोतिकरुणालयमांस्मरस्व १५ त्वंयागकर्मनिरतोसिमुनीश्वरेंद्रैर्धर्मंविचारयसिभूमिपती-

ड्यपाद अत्राहमद्यसुरथेनविगाढपाशबद्धोस्मिमोचयमहापुरुषाशुदेव १६ नोमोचयस्यथयदिस्मरपातितंमांत्वंसर्वदेववरपूजि

तपादपद्म लोकोभवंतमिदमुल्लसिताहसिष्यत्तस्मादिलंबमिहमाचरमोचयाशु १७ इतिश्रुत्वाजगन्नाथोरघुवीरःकृपानिधिः भ-

क्तंमोचयितुंप्रागात्पुष्पकेणाशुवेगिना १८ लक्ष्मणेनानुगेनाथभरतेनसुशोभितम् मुनिवृंदैर्व्यासमुख्यैःसमेतंददृशेकपिः १९ तमा-

गतंनिजंनाथंवीक्ष्यभूपसमब्रवीत् पश्यराजन्निजंमोक्तुमायातःकृपयाहरिः २० अनेकेमोचितास्तेनपूर्वंस्मरणात्सेवकानिजाः तथा-

मांपाशतोबद्धंसंमोचयितुमागतः २१ श्रीरामभद्रमायांतंवीक्ष्यासौसुरथःक्षणात् ननतयःशतशश्चक्रेभक्तिपूरपरिप्लुतः २२ श्री

रामस्तंनिजैर्दोर्भिःपरिरेभेचतुर्भुजः मूर्ध्निसिंचन्नश्रुजलैर्हर्षाद्धर्षस्वकंमुहुः २३ उवाचधन्यदेहोसिमहत्कर्मकृतंत्वया कपीश्वर

रुत्वयाबद्धोहनूमान्सर्वतोबलः २४ श्रीरामःकपिवर्यंतंमोचयामासबंधनात् मूर्च्छितांस्तान्भटान्सर्वान्वीक्ष्यदृष्ट्वासंजीवयत् २५

तेमूर्च्छांतत्यजुर्दृष्ट्वारामेणसुरसेविना उत्थितादददृशःश्रीमद्रामचंद्रंमनोहरमम् २६ तेप्रणम्यरघुपतिंतेनपृष्टाअनामयम् सुखी

भूतान्नृपंप्रोचुःसर्वस्वकुशलंनृपाः २७ सुरथोवीक्ष्यरामंचकृतार्थंसेवकात्मना आगतंसकलंराज्यंसहयंसमदात्स्वयम् २८ अ-

नेकवरिवस्याभिःश्रीरामंसमतोषयत् श्रीरामस्तमुवाचाथकृतंतेवाहरक्षणम् २९ क्षत्रियाणामयंधर्मःस्वामिनासहयोत्स्यते त्व-

यासाधुकृतंकर्मरणेवीराःप्रतोषिताः ३० इत्युक्तवंतंनृहरिंपूजयन्ससुतोनृपः श्रीरामस्त्रिदिनंस्थित्वाययौतमनुमन्य्च ३१ का

मगेनविमानेनमुनिभिःसहितोमहान् तंदृष्ट्वाविस्मितास्तस्यकथाश्चक्रुर्मनोहराः ३२ चंपकंस्वपुरेस्थाप्यसुरथःक्षत्रियोबली श

त्रुघ्नेनसमंयातुमनश्चक्रेमहाबलः ३३ शत्रुघ्नःसहयंप्राप्यभेरीनादमकारयत् शंखनादंबहुविधंसर्वत्रसमवादयन् ३४ सुर-

पा॰मे॰ ७१

धेनस्तमंवीरोयज्ञवाहममूमुचत् सबभ्रामापरान्देशान्नकोपिजगृहेबली ३५ यत्रयत्रगतोवाहस्तत्रतत्रपरिभ्रमन् सैन्येनमहताधातः
शत्रुघ्नःसुरथेनच ३६ कदाचिज्जान्हवीतीरेवाल्मिकेराश्रमंवरं गतोमुनिवरैर्जुष्टंप्रातर्धूमेनचिन्हितम् ३७ इतिश्रीपद्मपुराणेपा
तालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेरघुनाथसमागमोनामत्रिपंचाशत्तमोऽध्यायः ५३ शेषउवाच गतःप्रातःक्रियांकर्तुंसमि
धत्स्नक्रियार्हकाः आनेतुंजानकीसूनुर्वृतोमुनिसुतैर्लवः १ ददर्शतत्रयज्ञाश्वंस्वर्णपत्रेणचिन्हितम् कुंकुमागरुकस्तूरीदिव्यगंधेन
वासितम् २ विलोक्यजातकुतुकोमुनिपुत्रानुवाचसः अर्वाकस्यमनोवेगःप्राप्तोदेवान्मदाश्रमम् ३ आगच्छतुमयासार्धंभ्र
क्षंतांमाभयंक्रथा इत्युक्त्वासलवस्तूर्णंवाहस्यनिकटेगतः ४ सरराजसमीपस्थोवाहस्यरघुवंशजः धनुर्बाणधरस्कंधेजयं
तइवदुर्जयः ५ गत्वामुनिसुतैःसार्धंवाचयामासपत्रकम् भालस्थितंस्पष्टवर्णराजिराजितमुत्तमम् ६ विवस्वतोमहान्वंशःसर्वलो
केषुविश्रुतः यत्रकोपिपराबाधीनपरद्रव्यलंपटः ७ सूर्यवंशध्वजोधन्वीधनुर्दीक्षागुरुर्गुरुः यंदेवाःसासुराःसर्वेनमंतिमणिमौलिभिः
८ यस्यात्मजोवीरबलदर्पहारीरघूद्वहः रामचंद्रोमहाभागःसर्वशूरशिरोमणिः ९ तन्माताकोसलनृपपुत्रीरत्नसमुद्भवा तस्याःकु
क्षिभवंरत्नंरामःशत्रुक्षयंकरः १० करोतिहयमेधंवैब्राह्मणेनसुशिक्षितः रावणाभिधविप्रेंद्रवधपापापनुत्तये ११ मोचितस्तेनवा
हानांमुख्योसौयाज्ञिकोहयः महाबलपरीवारोमहाबलस्फुरक्षितः १२ तद्रक्षकोस्तिमद्भ्राताशत्रुघ्नोलवणांतकः हस्त्यश्वरथपादा
तिसंघेनसुसमन्वितः १३ यस्यराज्ञोभवेन्मानःशूरत्वादिभिरुन्मदात् धनुर्धराश्चशूराश्चश्रेष्ठावयमिहोत्कटाः ५४ तेगृण्हंतुब
लाद्वाहंरत्नमालाविभूषितम् मनोवेगंकामजवंसर्वगत्यभिभास्वरम् १५ ततोमोचयिताभ्राताशत्रुघ्नोलीलयाभवात् शरासन
विनिर्मुक्तवत्सदंतक्षतव्यथैः १६ येक्षत्रियाःक्षत्रियकन्यकायांजाताश्चसत्क्षेत्रकुलेषुसत्सु गृण्हंतुतेतद्विपरीतदेहानमंतुराज्यंर
घुवेनिवेद्य १७ इतिसंवाच्यकुपितोलवःशत्रुनिबर्हणः उवाचमुनिपुत्रांस्तान्रोषगद्गदभाषितः १८ पश्यताहोप्रमेतस्यधृष्ट
त्वंक्षत्रियस्यवै लिलेखयोभालपत्रेस्वप्रतापबलंनृपः १९ कोसौरामश्चशत्रुघ्नःकीटःस्वल्पबलाश्रयः क्षत्रियाणांकुलेजाताएतेन

अ॰ ५३

७१

वयमुत्तमाः २० एतस्य वीरसूर्माता जानकी न कुशप्रसूः यारत्नं कुशसंज्ञं तु दधाराग्निमिवारणिः २१ इदानीं क्षत्रियत्वादि दर्शयिष्या
मि सर्वतः यदि क्षत्रियशूरेषु भविष्यति च शत्रुहा २२ गृहीष्यति मया बद्धं वाहं यज्ञक्रियोचितम् नोचेत्तस्मात्त्वमुन्मुच्य कुशस्य चरणा
र्चकः २३ अधुना मद्धनुर्मुक्तैः शरैः सुप्तो भविष्यति अन्ये ये च महावीरा रणमंडलभूषणाः २४ इत्यादि वाक्यमुच्चार्य लवो जग्राह तं
हयम् तृणीकृत्य नृपान्सर्वान् चापबाणधरो वरः २५ तदा मुनिसुताः प्रोचुर्लवं हयजिहीर्षकम् अयोध्यायां नृपती रामो महाबल
पराक्रमः २६ तस्य वाहं न गृण्हाति शक्रोपि स्वबलोद्धतः मा गृहाण शृणुष्वेदमस्माद्वाक्यं हितसंयुतम् २७ इत्युक्तं संश्रुतो धृत्वा
जगाद सर्वान्द्विजात्मजाम् यूयं बलं न जानीत क्षत्रियाणां द्विजोत्तमाः २८ क्षत्रिया वीर्यशौंडीर्या द्विजा भोजनशालिनः तस्माद्यूयं गृ
हे गत्वा भुंजंतु जननीहृतम् २९ इत्युक्तास्ते भवंस्तूष्णीं प्रेक्षंतस्तत्पराक्रमम् लवस्य मुनिपुत्रास्ते संतस्थुर्दूरतो बहिः ३० ए-
वं व्यतिकरे वृत्ते सेवकास्तस्य भूपतेः आयातास्तं हयं बद्धं दृष्ट्वा प्रोचुस्तदा लवम् ३१ बबंध को हयं मत्तो रुष्टः कस्य च धर्मराट्
को बाणव्रजमध्यस्थः प्राप्स्यते परमां व्यथाम् ३२ तदा लवो जगादाशु मया बद्धोश्व उत्तमः यो मोचयति तस्याशु रुष्टो भ्राता कुशो
महान् ३३ यमः करिष्यति किंनु त्यागतोपि स्वयं प्रभुः न त्वागमिष्यति क्षिप्रं शरवृष्ट्यासुतोषितः ३४ शेष उवाच इति वाक्यं समाकर्ण्य बा-
लोयमिति ब्रुवन् समागता मोचयितुं हयं बद्धं तु वैलवात् ३५ तान्वै मोचयितुं प्राप्तान् शत्रुघ्नस्य च सेवकान् कोदंडकरयोर्धृत्वा क्षुरप्रास्ता
न्समम् मुमुचत् ३६ ते छिन्नबाहवः शोकाच्छत्रुघ्नं प्रति संगताः पृष्टास्ते जगदुः सर्वे लवात्स्वभुजकृंतनम् ३७ इति श्रीपद्मपुराणे
पातालखंडे शेषवात्स्यायनसंवादे रामाश्वमेधे चतुःपंचाशत्तमोऽध्यायः ५४ सूत उवाच एतां श्रुत्वा कथां रम्यां लवस्य पलितो मुनिः संश
यानः पर्यपृच्छन्नागं दशशताननम् १ श्रीवात्स्यायन उवाच त्वयोक्तं तु पुरा रामः सीतामेकाकिनीं वनम् रजकस्य दुरुक्त्यासौ तत्याज
महिलां नृपः २ जानक्यां क सुतौ जातौ क धनुर्धरतां गतौ कथं च शिक्षिता विद्या यो राम हयमाहरत् ३ व्यास उवाच इति श्रुत्वा मु
नेर्वाक्यं शेषनागो महामतिः प्रशस्य विप्रं जगदे रामचारित्रमद्भुतम् ४ शेष उवाच रामो राज्यमयोध्यायां भ्रातृभिः सहितोऽकरोत्

धर्मेण पालयन्सर्वं क्षितिरवंड त्वयास्त्रिया ५ सतीदधारतद्गीर्यं मासाः पंचाभवंस्तदा अत्यंतं शुशुभे देवी त्रयीवपुरुषंधरा ६ क-
दाचित्समये रामः पप्रच्छ च विदेहजाम् कीदृशो दोहदः साध्वि मया ते साध्यते हि सः ७ रहस्येव तु सा पृष्टा त्रपमाना पतिं सती लज्जागद्गदवा-
ग्रामं निजगाद वचोमृतम् ८ सीतोवाच त्वत्कृपातो मया सर्वं भुक्तं भोक्ष्यामि शोभनम् न कश्चिन्मानसे कांत विषयो ह्यतिरिच्यते ९
यस्या भवादृशः स्वामी देवसंस्तुतसत्पदः तस्याः सर्वं वशीवर्ति न किंचिदवशिष्यते १० त्वमायहात्पृच्छसि मां दोहदं मनसि स्थितम् ११
प्रब्रवीमि पुरः सत्यं तव स्वामिन्मनोहर चिरं जातं मया सत्यो लोपामुद्रादिकास्त्रियः १२ दृष्ट्वा स्वामिन्मनो द्रष्टुं ताउत्सुकं ति सुंदरीः
राज्यं प्रासात्वया सार्द्धं मनेकसुखमास्थिता कृतं प्राहं कदापीह तान्नमस्कर्तुमानसा १३ तत्र गत्वा मनः कोशान्वस्त्राद्यैः परिपूजये रत्ना-
नि चैव भास्वंति भूषा अपि समर्पये १४ यथा मे तोषिताः सत्यो ददत्याशीर्मनोहराः एष मे दोहदः कांत परिपूरय मानसः १५ इत्थमाकर्ण्य
वचनं सीतायाः सुमनोहरम् जगाद परमप्रीतो रामचंद्रः प्रसन्नधीः १६ धन्यासि जानकी प्रातर्गमिष्यसि तपोधनान् प्रेक्ष्यतांस्त्वं कृ-
तार्थत्वमागमिष्यसि मे मतिकम् १७ इति रामवचः श्रुत्वा परमप्रीतिमापसा भविताद्य मम प्रातस्तापसीनां समीक्षणम् १८ अथ ते-
निशि रामेण चाराः कीर्तिं निजां श्रुताम् प्रेक्षितुं प्रेषितास्ते तु निशीथे ह्यगमन्शनैः १९ ते प्रत्यहं रामकथाः शृण्वतः सुमनोहराः तद्दिने
गतवंतस्तु धनाढ्यस्य गृहं महत् २० दीपं वीक्ष्य प्रज्वलं तं वचनं वीक्ष्य मानुषम् स्थितास्तत्रक्षणं चाराः समशृण्वन्यशोमृतम् २१ तत्र-
कांचनवामाक्षी बालकं प्रति हर्षिता स्तनं पिबर्तनिजगौ वाक्यं तु सुमनोहरम् २२ पीतं पुत्रयथेष्टं ते स्तनं मम मनोहरम् पश्चात्तवसुदु-
र्लभ्यं भविष्यति ममात्मज २३ एतत्पुर्याः पती रामो नीलोत्पलदलप्रभः तत्पुरस्थजनानां तु न भविष्यति वै जनुः २४ जन्माभावात्कथं
पानं स्तन्यस्य भुवि जायते तस्मात्पिब मुहुः स्तन्यं दुर्लभं हृदि मन्य च २५ ये रामं संस्मरिष्यंति ध्यायंति च वदंति ये तेषामपि पयःपानन-
भविष्यति जानु चित् २६ इत्यादि वाक्यं संश्रुत्य श्रीरामयशसोमृतम् हर्षिताः प्रययुर्गेहमन्यद्भाग्यवतो महत् २७ तावदन्यच्च-
रास्तत्र मनोरममिदं गृहम् मतातिष्ठन्हि रामस्य क्षणं शुश्रूषवो यशः २८ तत्र काचिन्निजकांतं पर्यंकोपरि सुस्थितम् तांबूलं चर्वतीत्ह-

त्वंभर्त्रासिमोहनसुंदरी २९ कंकणस्वरशोभाढ्याकर्पूरागरुधूपिना कांतंवीक्ष्यचलन्नेत्राकामरूपमवोचत ३० नाथत्वंतादृशोमत्स्य-
भासिह्यधोःपतिः अत्यंतंसुंदरवरंवपुर्बिभ्रत्सुकोमलं ३१ पद्मप्रांतंनेत्रयुग्मंवक्षोमोहनविस्तृतम् भुजौचसांगदौबिभ्रत्साक्षाद्रा-
मइवासिमे ३२ इतिवाक्यंसमाकर्ण्यकांतायाःसुमनोहरम् उवाचनेत्रयोःप्रांतंनर्तयन्कामसुंदरः ३३ शृणुकांतेत्वयाप्रोक्तंसाध्व्या
त्सुमनोहरम् पतिव्रतानांत्वद्योग्यंस्वकांतोरामएवहि ३४ परंक्वाहंमंदभाग्यःक्वरामोभाग्यवान्महान् क्वचाहंकीटवत्तुच्छःक्व ब्र-
ह्मादिसुरार्चितः ३५ खद्योतःक्वनभोरत्नंशलभःक्वनुपामरः गजारिःक्वमृगेंद्रोसौशृगालःक्वनुमंदधीः ३६ क्वचसाजान्हवीदे-
वीक्वरथ्याजलमुत्पथम् क्वमेरुःसुरसंवासःक्वगुंजापुंजकोल्पकः ३७ तथाहुक्वकरामोसौयत्पादरजसांगना शिलाभूताक्षणाज्ज्ञा
ताब्रह्ममोहनरूपधृक् ३८ इतिवाक्यंप्रब्रुवाणंपरिरेभेनिजंपतिम् संजातहृच्छयाप्रेम्णानर्तितभ्रूधनुर्धरा ३९ इत्यादिवाक्य-
सश्रुत्यगतश्चारोन्यवेशनम् तावदन्यचरावाक्यंशुश्रावयशसान्वितम् ४० क्वचित्पुष्पमयीशय्याचंदनंसहचंद्रकम् सर्वंविधायकृका
माहंजगादवचनंपतिम् ४१ पतेकुरुष्वभोगार्हंशयनंपुष्पमंचके चंदनादिकलेपंचतथाभोगमनेकधा ४२ त्वादृशाएवभोगार्हान्
चरामपराङ्मुखाः सर्वंरामकृपाप्राप्तमुपभुंक्ष्वयथातथम् ४३ मत्सदृशीकामिनीतेचंदनंतापहारकम् पर्यंकःपुष्परचितःसर्वं
रामकृपाभवम् ४४ येरामंनभजिष्यंतितेनराजठरस्वयम् नभर्तुंशक्नुवंत्येववरस्त्रभोगादिवर्जिताः ४५ इतिब्रुवंतीमहिलां-
हर्षितःपतिरब्रवीत् सर्वंतथ्यंत्वयोक्तंवैप्रियेममरामकृपाभवम् ४६ इत्येवरामभद्रस्ययशःश्रुत्वागतश्चरः तावदन्यत्रवेश्मस्थश्चरो-
न्यःशुश्रुवेवचः ४७ काचित्कांचनपर्यंकेवीणावादनतत्परा कांतेनरामसत्कीर्तिंगायमानापतिंजगौ ४८ स्वामिन्वयंधन्यतमायेषां
पुर्याःपतिःप्रभुः श्रीरामःस्वप्रजाःपुत्रानिवपातिवरक्षति ४९ यःकर्मैतच्चदुःसाध्यंकृतवान्सुलभंनतत् समुद्रंयोनिजग्राहसेतुंतत्र-
बबंधच ५० रावणंयोरिपुंहत्वालंकांसंभज्यवानरैः जानकीमाजहारात्रमहदाचारमाचरत् ५१ इतिप्रोक्तंसमाकर्ण्यवचःसम-
धुराक्षरम् पतिःस्मितंचकारमावाक्यंपुनरथाब्रवीत् ५२ मुग्धेनेदंमहत्कर्मरामचंद्रस्यभामिनी दशाननवधादीनिसमुद्रदम-

नानिच ५३ लीलयायोवनिंभ्रामोब्रह्मादिप्रार्थितोमहान् करोतिसचरित्राणिमहापापहराणिच ५४ माजानीहिनरंरामंकौसल्या
नंददायकम् सृजत्यवतिहंत्येवविश्वंलीलातिमानुषः ५५ धन्यावयंयेरामस्यपश्यामोमुखपंकजम् ब्रह्मादिसुरदुर्दर्शमह-
त्पुण्यकृतावयम् ५६ शृणोतिरामचंद्रस्यचरित्रंश्रुतिसौख्यदम् तत्रापिरामभद्रस्ययशःशुभ्रावशोभनम् ५७ खेलतिस्वामिना
सार्धंद्यूतेनसुमनोहरा उवाचवाक्यंमधुरंनर्तयंतीवकंकणे ५८ जितंमयाकांतजवेनसर्वंकरिष्यसित्वंकिमुहारिमानसः इत्यादि
वाक्यंपरिहासपूर्वंकृत्वास्वकांतंपरिषस्वजेमुदा ५९ उवाचकांतश्चार्वंगिजितमेवसुशोभनम् राममेस्मरतोनित्यंनकुत्रापिपराजयः
६० इदानींतांतुजेष्यामिरामस्मृत्यामनोहरम् देवायथापुरास्मृत्वादितिजानजयन्क्षणात् ६१ एवमुक्त्वापाशकानांपरिवर्तनमा-
करोत् तावज्जयंप्रपेदेसौहर्षितोवाक्यमब्रवीत् ६२ ममप्राप्तमृतंजातंजितालंनवयौवना रामस्मारीकदाप्येवंनभवेद्रिपुतोभया
६३ इत्येवंतौवदंतौचपरस्परमथोत्सुकौ परिरभ्यदृढंप्रेम्णाततःशय्यांप्रपेदतुः ६४ एवंपंचमहाचाराराघवःसंश्रुत्यवैयशः परस्परं
प्रशंसंतोगेहंस्वंस्वंययुर्मुदा ६५ एकःषष्ठश्चरःकारुगेहान्नालोक्यनत्रह जगामश्रोतुकामोसौयशोराज्ञोमहीपतेः ६६ रजकःक्रो
धसंस्पृष्टोभार्यामन्यगृहोषिताम् पदासंताडयामासधिक्कुर्वन्शोणनेत्रवान् ६७ गच्छत्वंमद्गृहात्तस्यगेहंयत्रोषितादिनम् नाहं
गृण्हामिभवतींदुष्टांवचनलंघिनीम् ६८ तदास्यमातावोवाचमात्यजैनांगृहागताम् अपराधेनरहितांदुष्टकर्मविवर्जिताम् ६९ मा
तरंप्रत्युवाचाथरजकःक्रोधसंयुतः नाहंरामइवप्रेष्ठांगृण्हाम्यन्यगृहोषिताम् ७० सराजायत्करोत्येवतत्सर्वंनीतिमद्भवेत् अहंगृ-
ण्हामिनोभार्यांपरवेश्मनिसंस्थिताम् ७१ पुनःपुनरुवाचेदंनाहंरामोमहीश्वरः यःपरस्यगृहस्थांतांजानकींवैररक्षसः ७२ इतिवा
क्यंससंश्रुत्यचारःक्रोधपरिप्लुतः खड्गंगृहीत्वास्वकरेतंहंतुंविदधेमनः ७३ सरामोक्तंचसस्मारनवध्यःकोमहाजनः इतिज्ञात्वा
स्वरोषंतुसंजहारमहामनाः ७४ तदाश्रुत्वासुदुःखार्तःपंचचारायतःस्थिताः ततोगतःप्रकुपितोनिःश्वसन्मुहुरुच्छ्वसन् ७५ तेवैप-
रस्परंतत्रमिलितास्तुसमब्रुवन् स्वश्रुतंरामचरितंसर्वलोकैकपूजितम् ७६ तेतद्भाषितमाकर्ण्यपरस्परममंत्रयन् नत्वाच्चैरघुनाथा

यवाच्यंदुष्टजनोचितम् ७७ इतिसंमंत्र्यतेगेहंश्रुत्वासुषुपुरुत्सुकाः प्रातराज्ञेप्रशंसामइतिबुद्ध्याव्यवस्थिताः ७८ इतिश्रीपद्म
पुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेपंचपंचाशत्तमोऽध्यायः ५५ शेषउवाच प्रातर्नित्यंविधायासौब्राह्मणान्वेदवित्त
मान् हिरण्यदानैःसंतर्प्यविधिवत्ससदंययौ १ लोकाःसर्वेनमस्कर्तुंरघुनाथंमहीपतिम् पुत्रवत्त्वप्रजाःसर्वाःपालयंतंययुःस-
भाम् २ लक्ष्मणेनातपत्रंतुधृतंमूर्धनिभूपते तदाभरतशत्रुघ्नौचामरद्वंद्वधारिणौ ३ वसिष्ठप्रमुखास्तत्रमुनयःपर्युपासते सु
मंत्रप्रमुखास्तत्रमंत्रिणोन्यायकर्तृकाः ४ एवंप्रवृत्तसमयेषट्चारास्तेस्वलंकृताः समाजग्मुर्नरपतिंनमस्कर्तुंसुभाषितुम् ५ ता
न्वकुकामान्संवीक्ष्यचारान्नृपतिसत्तमः सभायाअंतरावेश्मरहःप्राविशदुत्सुकः ६ एकांतेतान्चरान्सर्वान्पप्रच्छसुमतीन्नृपः क-
थयंतुचरामत्त्वंयथातथ्यमरिंदमाः ७ लोकाब्रुवंतिमांकीदृग्भार्यायाममकीदृशम् मंत्रिणांकीदृशंलोकावदंतिचरितंकथम् ८
इतिवाक्यंसमाकर्ण्यचारारामममथाब्रुवन् मेघगंभीरयावाचापृच्छंतंरघुनायकम् ९ चाराऊचुः नाथकीर्तिर्जनान्सर्वान्पावयंत्यधु-
नाभुवि गृहेगृहेश्रुतास्माभिःपुरुषैःस्त्रीभिरीडिता १० विवस्वतोमहान्वंशोभवतापरमेष्ठिना अलंकर्तुंगतंभूमौकीर्तिविस्तारितु
नथा ११ अनेकेसगराद्याश्चकीर्तिमंतोमहाबलाः अभवंस्तादृशीकीर्तिस्तेषांनाभूद्यथातव १२ त्वयानीयेनसकलाकृता-
र्थाश्चप्रजाःकृताः यासांनाकालमरणंनचरोगाद्युपद्रुतिः १३ यादृशश्चंद्रकोलोकेयादृशीजान्हवीसरित् तादृक्त्वच्चसत्की-
र्तिःप्रकाशयतिभूतलम् १४ ब्रह्मादिकाभवत्कीर्तिमाकर्ण्यत्त्रपिताभृशम् नाथसर्वत्रतेकीर्तिःपावयत्यधुनाजनान् १५ वयंधन्यत-
माःसर्वेयेचारास्तवभूपतेः क्षणेक्षणेतवमुखंलोकयाममनोहरम् १६ वाक्यंश्रुत्वासच्चाराणांपंचानांचैवमाधवः षष्ठंपप्रच्छचारंतंविल-
क्षणमुखांकितम् १७ रामउवाच सत्यंवदमहाबुद्धेयच्छ्रुतंलोकसंकरे तादृक्प्रशंसमेसर्वमन्यथापातकादिकृत् १८ पु-
नःपुनश्चतंरामःपप्रच्छाशुसविस्तरम् तथापिनब्रवीत्येवरामलौकिकभाषितं १९ तदारामःप्रत्यवोचच्चारंमुखविलक्षितम् शपा-
मित्वांतुसत्येनशंससर्वंयथातथम् २० तदारामप्रत्युवाचचारोवाक्यंशनैःशनैः अकथ्यमपितेवाच्यंवाक्यंकरुजनोदितम् २१

चारउवाच स्वामिन्सर्वत्रतेकीर्तिर्दशाननवधादिका अन्यत्रराक्षसगृहेस्थितायास्तेस्त्रियामहन् २२ कारुरेकस्तुरजकोनिशीथेमहि-
लांस्वकाम् अन्यगेहोषितांदृष्ट्वाधिःकुर्वन्समताडयत् २३ तन्मातापत्युवाचेमांकथंताडयसेनधाम् गृहाणमाकुथानिंदांस्त्रियंम
ह्यास्यमाचर २४ तदावोचत्सरजकोनाहंरामोमहीपतिः यद्राक्षसगृहेध्युष्टांसीतामंगीचकारसः २५ सर्वराजकृतंकर्मनीति
मद्भवतिप्रभो अन्येषांपुण्यकर्तृणामपिकृत्यमनीतिमत् २६ पुनःपुनरुवाचासौनाहंरामोमहीपतिः तत्क्रोधसमयेराजन्मया-
वाक्यंतवस्मृतम् २७ तदानींशिरआच्छिद्यपातयामिमहीतले कृतःपुनर्विचारोमेकरामोरजकःक्वनु २८ अयंदुष्टोनृतंवक्ति
नहीदंतथ्यमुच्यते आज्ञापयसिचेद्रामसांप्रतमारयामितम् २९ अवाच्यमपितेप्रोक्तंश्रुत्वाततिंकिकरोम्यहम् राजाप्रमाणमत्र
दंविचारयतुसंगतम् ३० शेषउवाच इतिवाक्यंसमाकर्ण्यमहावृज्जनिभाक्षरम् निःश्वसन्मुहुरुच्छ्वासमाचरन्मूर्च्छितोपतत्
३१ तंमूर्च्छितंनृपंदृष्ट्वाचारादुःखसमन्विताः जीवयामासुर्वासाद्यैर्दुःखापनयहेतवे ३२ सलब्धसंज्ञोनृपतिर्मुहूर्तेनजगादतान्
गच्छंतुभरतंशीघ्रंप्रेषयंतुचमांप्रति ३३ तेदुःखितास्त्वरास्तूर्णंभरतस्यगृहंगताः कथयामासूरामस्यसंदेशंनयहारकाः ३४ भरतोरामसं
देशंश्रुत्वाधीमान्ययौत्वरन् रामंप्रतिरहःसंस्थमत्संतंत्वरयायुतम् ३५ आगत्यतंप्रतीहारंप्रत्युवाचमहामनाः कुत्रास्तेरामभद्रोसौममभ्रा
ताकृपानिधिः ३६ तन्निर्दिष्टगृहंवीराययौरत्नमनोहरम् रामंविलोक्यविक्लांतंभयमापसमानसे ३७ किंवासौकुपितोरामोकिंवादुःख
मिदंविभोः तदाप्रोवाचनृपतिंनिःश्वसंतंमुहुर्मुहुः ३८ स्वामिन्सुखसमाराध्यंवक्त्रंतेकथमीदृशम् अश्रुभिर्लक्ष्यतेराहुग्रस्तदेहःशशी-
वते ३९ सर्वमेकारणंतथ्यंब्रूहिमांकिंकरोमिते त्यजदुःखंमहाराजकथंदुःखस्यभाजनम् ४० एवंभ्रात्राप्रोच्यमानोगद्गदस्वरयागिरा
प्रोवाचभ्रातरंवीरोरामचंद्रश्चधार्मिकः ४१ शृणुभ्रातर्वचोमह्यंममदुःखस्यकारणम् तन्मार्जनंकुरुष्वाद्यभ्रातःभ्रातर्महामते ४२
वंशेवैवस्वतेराजानकश्चिदयशःक्षतः मत्कीर्तिरघकलुषागंगायमुनयोर्गता ४३ येषांयशोनृणांभूमौतिष्ठामेवसुजीवितम् अपकीर्तिहत-
तानांतुर्जीवितंमृतकैःसमम् ४४ येषांयशोभवेद्भूमौतेपालोकाःसनातनाः अपकीर्त्युरर्गादिष्टास्तेपाप्नूयादधोगतिः ४५ अद्यमेक-

लुषाकीर्तिः स्वर्धुनीलोकविश्रुता तच्छृणुष्व वचो मे घ रजकेन यथोदितम् ४६ अस्मिन्पुरे रजकः उक्तवान् जानकीभवम् किंचिद्वाक्यं ततोऽन्ना तां किं करोमि महीतले ४७ किमात्मानं जहाम्यद्य किं मे नां जानकीं स्त्रियम् उभयोः किं मया कार्यं तत्तथ्यं ब्रूहि मे भवान् ४८ इत्युक्त्वानिर्गिल द्वाष्पो वेपथु क्षुभितांगकः पपात भूमौ विरजा धार्मिकानां शिरोमणिः ४९ भ्रातरं पतितं दृष्ट्वा भरतो दुःखसंयुतः सवीक्ष्य शनकैरामं भ्रासयांश्च चकार सः ५० संज्ञां प्राप्तं तु संवीक्ष्य रामचंद्रं सुदुःखितम् उवाच दुःखनाशाय वाक्यं तु सुमनोहरम् ५१ भरत उवाच कोऽयं वै रजकः किं तु वाच्यं वाक्यं यथाब्रवीत् जिह्वाच्छेदं करिष्यामि जानकीवाच्यकारिणः ५२ तदा रामोऽब्रवीद्वाक्यं रजकस्य मुखोद्गतम् श्रुतं चारेण तत्सर्वं भरताय महात्मने ५३ तच्छ्रुत्वा भरतः प्राह भ्रातरं दुःखशोकिनाम् जानकी वह्निशुद्धा भूल्लंकायां वीरपूजिता ५४ ब्रह्माब्रवी-दियं शुद्धा पिता दशरथस्तव कथं सा रजकोक्त्या त्याक्तव्या लोकपूजिता ५५ ब्रह्मादिसंस्तुता कीर्तिस्तव लोकान्पुनाति हि सा कथं रजकोक्त्या वै कलुषा च भविष्यति ५६ तस्मात्त्यज महादुःखं सीतावाच्यसमुद्भवम् कुरु राज्यं तया सार्द्धं मंत्र वल्यासु भाग्यया ५७ त्वं कथं स्वशरीरं च हातुमिच्छसि शोभनम् वयं हताः सर्वथा स्म त्वां विना दुःखनाशक ५८ क्षणं सीता न जीवेत त्वां विना सुमहोद्या तस्मात्त्यतिव्रता साकं भुनक्तु विपुलां श्रियम् ५९ इति वाक्यं समाकर्ण्य भरतस्य च धार्मिकः पुनरेव जगादेदं वाक्यं वाक्यविशारदः ६० यत्त्वं कथयसि भ्रातस्तत्सर्वं धर्मसंयुतम् परं यद्व्यच्यहं वाक्यं तत्कुरुष्व ममाज्ञया ६१ जानाम्येनां वह्निशुद्धां पवित्रां लोक-पूजिताम् लोकापवादाद्भीतोऽहं संत्यजामि तु जानकीम् ६२ तस्मात्करे शितं धृत्वा करवालं सुदारुणम् शिरश्छिंध्यथवा जायां जानकीं मुंच वै वने ६३ इत्युक्तं वाक्यमाकर्ण्य रामस्य भरतोऽपतत् मूर्च्छितः सन्क्षितौ देहकंपयुक्तः सबाष्पकम् ६४ इति श्री पद्मपुराणे पातालखंडे शेषवात्स्यायनसंवादे रामाश्वमेधे षट्पंचाशत्तमोऽध्यायः ५६ वात्स्यायन उवाच जगत्पवित्रसत्कीर्तेर्जान-क्या वाच्यवाचनम् कथं समकरोत्स्वामिंस्तन्मे कथय सुव्रत १ यथा मे मनसः सौख्यं भविष्यति सुशोभनम् तथा कुरुष्व शेषा द्यत्वन्मुखाब्धिःसृतामृतम् तृप्तिर्मे पिबतो नास्ति यथा सत्सूक्तिकीर्तनम् २ शेष उवाच मिथिलायां महापुर्यां जनको नाम भूपतिः त-

स्यांकरोतिसद्राज्यंधर्मेणाधारयन्प्रजाम् ३ तस्यसंकर्षतोभूमिंसीतयादीर्घयाध्वया सीरध्वजस्यनिर्गाकुमारीद्युतिसुंदरी ४ तदा
स्वतंमुदंप्राप्तःसीरकेतुर्महीपतिः सीतानामकरोत्तस्यामाहिन्याजगतःश्रियः ५ सैकदोद्यानविपिनेखेलंतीसुमनोहरा अपश्यत्स्वम
नःकांतंशुकशुक्योर्युगंवरम् ६ अत्यंतंहर्षमापन्नमत्यंतंकामलोलुपम् परस्परंभाषमाणंस्नेहेनशुभयागिरा ७ रममाणंतदायु-
ग्मंनभसिक्षिप्रवेगतः समुत्पतन्नगोपस्थोस्थितंशब्दंचकारतत् ८ रामोमहीपतिर्भूमौभविष्यतिमनोहरः तस्यसीतेतिनाम्नातुमहि
लासंभविष्यति ९ सतयासहवर्षाणांसहस्त्राणिदशैवतु राज्यंकरिष्यतेधीमानाकर्षन्भूमिपान्बली १० धन्यासाजानकीदेवी
धन्योसौरामसंज्ञिनः यौपरस्परमापन्नौपृथिव्यांसुस्थितौमुदा ११ इतिसंभाष्यमाणंतुशुकयुग्मंतुमैथिली ज्ञात्वेदंदेवतायुग्मं-
श्रुत्वातद्वाक्यमादरात् १२ मदीयातुकथारम्याःकुरुतेशुकयोर्युगम् एतद्गृहीत्वापृच्छामिसर्ववाक्यंगतार्थकम् १३ एवंवि-
चार्यसासीतासखीःप्रतिजगादह गृण्हंतुशनकैरेतत्पक्षियुग्ममनोहरम् १४ सख्यस्तास्तद्गिरंश्रुत्वागृण्हन्पक्षियुगंवरम् निवे
दयामासुरिदंस्वसख्याःप्रियकाम्यया १५ बहुधाविविधान्शब्दान्कुर्वद्वीक्ष्यमनोहरम् आश्वासयामासतद्वातमपृच्छदिदंवचः १६
सीतोवाच माभैषातांयुवांरम्यौकौवाकुत्रसमागतौ कोवारामःकाचसीताएतज्ज्ञानंकुतोहिवाम् १७ तत्सर्वंशंसमेक्षिप्रंयतस्तेवा-
क्यकौशलम् इतिपृष्टंतयापक्षियुगंसर्वमशंसत १८ पक्षियुग्ममुवाच वाल्मीकिरास्तेसुमहान्नृषिर्धर्मविदुत्तमः आवांतदाश्र
मस्थानौसर्वदासुमनोहरम् १९ सशिष्यान्पाठयामासभाविरामायणंमुनिः प्रत्यहंतत्सदस्मारीसर्वभूतहितेरतः २० तदावाम्यांश्रु-
तंसर्वंभाविरामायणंमहत् मुहुर्मुहुर्गीयमानमायातंपरिपाठतः २१ शृणुष्वतंऽभिधास्यावःकोरामःकाचजानकी यद्यद्भवि-
ष्यतेतत्तद्रामेणक्रीडितात्मना २२ ऋष्यशृंगकृतेश्यांचचतुर्धात्वंगतोहरिः प्रादुर्भविष्यतेरामःसुरस्त्रीगीतसत्कथः २३ सकौशि
केनमिथिलांप्राप्स्यतेभ्रातृसंयुतः धनुःपणंमहद्दृष्ट्वादुर्गोह्यमन्यभूभुजाम् २५ धनुर्भंगेजनकजांप्राप्स्यतेसुमनोहराम् तयास
हमहद्राज्यंकरिष्यतिश्रुतंवरे २५ एतदन्यच्चतत्रस्थैःश्रुतमस्माभिरुद्धतैः कथितंतवचार्वंगिमुंनावांगंतुकामुकौ २६ इतिवाक्यं

तयोःश्रुत्वाश्रोत्रयोःसुमनोहरम् पुनरेवजगादेदंवाक्यंपक्षियुगंप्रति २७ सरामःकुत्रवर्तेत कस्यपुत्रःकथंतुताम् परिग्रही-
ष्यतिवरःकीदृकरूपधरोनरः २८ मयापृष्टमिदंसर्वंकथयंतुयथातथम् पश्चात्सर्वंकरिष्यामिप्रियंयुष्मन्मनोगतम् २९ तच्छ्रु
त्वातंतुकामेनपीडितांवीक्ष्यसाशुकी जानक्याहृदयंज्ञात्वापपाठपुरतस्ततः ३० सूर्यवंशध्वजोधीमान्राजापंक्तिरथोबली श्री
श्रियदेवायंसर्वान्विजेष्यतिचसर्वशः ३१ तस्यभार्यात्रयंभाविशक्रमोहनरूपधृक् तस्मिन्नवश्यंचातुष्कंभविष्यतिबलोन्नतम्
३२ सर्वेषामग्रतोरामोभरतस्यदनुस्मृतः लक्ष्मणस्तदनुश्रीमान्शत्रुघ्नःसर्वतोबली ३३ रघुनाथइतिख्यातिंगमिष्यतिमहाम
नाः तस्यलनंतनामानिरामस्त्वबलिनःसखि ३४ पद्मकोशइवशोभनंमुखंपकजातनयनेसुदीर्घके उन्नतपृथुमनोहरानसंव
ल्गुसंगतमनोहरभ्रुवम् ३५ जानुलंबितमनोहरोभुजौकंबुशोभिगलकांतिन्हस्वकः सत्कपादतलविस्तृतश्रियंवक्षएतदमलं
सलक्ष्मिकम् ३६ शोभनोरुकटिशोभयायुतंजानुयुग्ममममलंस्वसेवितम् पादपद्ममरविंदैर्निजैःसदासेवितंरघुपतिंसुशोभनम्
३७ एतद्रूपंधरोरामोमयाकिंतुसवर्ण्यते शताननोनजानातिपक्षिणःकिमुमादृशाः ३८ यद्रूपंवीक्ष्यललितामनोहरवपुर्ध
रा लक्ष्मीमुमोहभुविकावर्ततेयानमुह्यति ३९ महाबलोमहावीर्योमहामोहनरूपधृक् किंवर्णयामिश्रीरामंसर्वैश्वर्यगुणान्वि
तम् ४० धन्यासाजानकीदेवीमहामोहनरूपधृक् रम्यतेयेनसहितावर्षाणामयुतंतया ४१ त्वंकासिकिंनुनामासिबतसुंद-
रिपत्तुमाम् परिपृच्छसिवेदध्याद्रामकीर्तनमादरात् ४२ एतद्वाक्यंसमाकर्ण्यजानकीपक्षिणोर्युगम् उवाचजन्मललितंहसंती
स्वस्यमोहनम् ४३ यात्वयाजानकीप्रोक्तासाहंजनकपुत्रिका सरामोमांयदाभ्येत्यप्राप्स्यतेसुमनोहरः ४४ तदावांमोचयाम्यद्धा
नान्यथावाक्यलोभिना लालयामिसुखेनास्तांमद्गृहेमधुराक्षरौ ४५ इत्युक्तंतत्समाकर्ण्यवेपितौभयतांगतौ परस्परंप्रक्षुभितौ
जानकीमित्यवोचताम् ४६ वयंवैपक्षिणःसाध्विवनस्थावृक्षगोचराः परिबभ्रामसर्वत्रनोसुखंनोभवेद्गृहे ४७ अंतर्वत्नी
स्वकेस्थानेगत्वासंसूयपुत्रकान् त्वत्स्थानमागमिष्यामिसत्यमेवोदितंवचः ४८ एवंप्रोक्तातयासातुनमुमोचशुकंस्वयम्

तदा पतिस्तां प्रोवाच विनीतवदनुत्सुकः ४९ सीते मुंच कथं भार्यां रक्षसे मे मनोहरीम् आवां गच्छाव विपिने विचरावो सुखं वने ५०
अंतर्वत्नी वर्त्तते च भार्या मम मनोरमा तस्याः प्रसूतिं कृत्वाहमागमिष्यामि शोभने ५१ इत्युक्ता निजगादाथ सुखं गच्छ मनोमतम् ए-
तां रक्षामि सुखिनीं मत्पार्श्वे प्रियकारिणीम् ५२ इत्युक्तो दुःखितः पक्षी तां प्रोवाच करुणान्वितः योगिभिः प्रोच्यते यद्वै तद्वचस्तथ्यमेव हि
५३ न वक्तव्यं न वक्तव्यं मौनमाश्रित्य तिष्ठताम् नोचेत्स वाक्यदोषेण प्राप्नोत्यालापमुन्मदः ५४ वयं चेदत्र वाक्यं न करिष्यामो न गोपरि
बंधनं कथमावां स्यात्तस्मान्मौनं समाचरेत् ५५ इत्युक्ता तां प्रत्युवाच नाहं जीवामि सुंदरि एतया भार्यया सीते तस्मान्मुंच मनोहरे ५६
अनेकविधवाक्यैः सा बोधिता नामुचत्तदा कुपिता दुःखिता भार्या शशाप जनकात्मजाम् ५७ यथा त्वं पतिना सार्द्धं वियोजयसि मा-
मितः तथा त्वमपि रामेण वियुक्ता भव गर्भिणी ५८ इत्युक्तवत्यां तस्यां तु दुःखितायां पुनः पुनः प्राणो निरगमद्दुःखाद्रतिदुःखेन पूरि-
तः ५९ रामरामस्मरंत्याश्च वदंत्याश्च पुनः पुनः विमानमागतं सुष्ठु पक्षिणौ स्वर्गतावुभौ ६० तस्यां मृतायां दुःखार्तो भर्ता तस्याः सप-
क्षिराट् परमं क्रोधमापन्नो जान्हव्यां दुःखितोपतत् ६१ तथा भवामि रामस्य नगरे जनपूरिते मद्वाक्यादियमुद्विग्ना वियोगेन सुदुःखि-
ता ६२ इत्युक्त्वा स पपातोच्चैर्जान्हव्यां भ्रमशोभिते दुःखितः कुपितो भीतस्तद्वियोगेन कंपितः ६३ क्रुद्धत्वाद्दुःखितत्वाच्च सीता-
या अपमाननात् अंत्यजत्वं परं प्राप्तो रजकः क्रोधनाभिधः ६४ यः क्रोधाच्च स्वकान्प्राणान्महतां दुष्टमाचरन् संत्यजेत्स मृतो याति अंत्य-
जत्वं द्विजोत्तम ६५ तज्जातं रजकोक्त्यासौ निंदिता च वियोगिता रजकस्य च शापेन वियुक्ता सा वनं गता ६६ एतत्ते कथितं विप्र य-
त्ते पृष्टं विदेहजान् पुनरन्यत्परं वृत्तं शृणुष्व निगदामि तत् ६७ इति श्रीपद्मपुराणे पातालखंडे शेषवात्स्यायनसंवादे रामाश्वमेधे सप्त-
पंचाशत्तमोऽध्यायः ५७ शेष उवाच भरतं मूर्छितं दृष्ट्वा रघुनाथः सुदुःखितः प्रतीहारमुवाचेदं शत्रुघ्नं प्रापयाशु माम् १ तद्वा-
क्यं प्रोक्तमाकर्ण्य क्षणाच्छत्रुघ्नमानयत् यत्र रामो निजभ्राता भरतेन सह स्थितः २ भरतं मूर्छितं दृष्ट्वा रघुनाथं च दुःखितम् प्रणम्य
दुःखितो वाच किमिदं दारुणं महत् ३ तदा रामोस्वजप्रोक्तं वाक्यं लोकविगर्हितम् शत्रुघ्नं कथयामास शोकदुःखेन दुःखितः ४

तंप्रत्युवाचरामोसौशत्रुघ्नंपदसेवकम् अधोमुखोदीनरवोगद्गदाक्षरवेपथुः ५ शृणुभ्रातर्वचोमेद्यकुरुतच्छीघ्रमादरात् यथास्यादि
मलाकीर्तिर्गंगेवपृथिवींगता ६ सीतायावाच्यमतुलंलोकेश्रुत्वात्यजोदितम् ह्यातुमिच्छामिदेहंस्वमेनांवाजानकींकिल ७ इतिवा
क्यंसमाकर्ण्यरामस्यकिलशत्रुहा सवेपथुःपपातोर्व्यांदुःखितःपरदारुणः ८ संज्ञांप्राप्यमुहूर्तेनरघुनाथमवोचत किमेतदुच्यतेस्वा
मिन्जानकींप्रतिदारुणम् ९ पापैर्यदुष्टचित्तैश्चसर्वधर्मबहिष्कृतैः निंदिताश्रुतिरग्राह्याभवतिलब्धजन्मना १० जान्हवीसर्वलोकानांपाप
भ्रीदुरितांतका नस्पृष्टापापिभिःकिंस्यात्स्पर्शेनोनार्तिदाहका ११ सूर्योजगत्प्रकाशायसमुद्युतिजगत्यहो उलूकानांरुचिकरोनभवेत्तत्रका
क्षतिः १२ तस्मात्त्वमेनांगृण्हीष्वमात्यजानिंदितांस्त्रियम् श्रीरामभद्रकृपयाकुरुष्ववचनंमम १३ एतच्छ्रुत्वावचस्तस्यशत्रुघ्नस्य
महात्मनः पुनःपुनर्जगादेदंयदुक्तंभरतंप्रति १४ तन्निशम्यवचोभ्रातुर्दुःखपूरपरिप्लुतः पपातमूर्च्छितोभूमौछिन्नमूलइवद्रुमः
१५ भ्रातरंपतितंवीक्ष्यशत्रुघ्नंदुःखितोभृशम् प्रतीहारमुवाचेदंलक्ष्मणंत्वानयांतिकम् १६ सलक्ष्मणगृहंगत्वान्यवेदयदिदंवचः
स्वामिन्रामोभवंतत्तुसमाव्हयतिवेगतः १७ तच्छ्रुत्वावचसमाव्हानरामचंद्रेणवेगतः जगामतरसातत्रयत्रसभ्रातृकोऽनघः १८ भर-
तंमूर्च्छितंदृष्ट्वाशत्रुघ्नमपिमूर्च्छितम् श्रीरामचंद्रंदुःखार्तंदुःखितोवाक्यमब्रवीत् १९ किमेतद्दारुणराजन्दृश्यतेमूर्च्छनादिकम्
तदाशशंसमेसर्वंकारणंमुखव्यतोनघ २० एवंवदतनृपतिर्वृत्तांतंसर्वमादितः शशंसलक्ष्मणंक्षिप्रंदुःखपूरपरिप्लुतम् २१ भ्रात-
रंस्तब्धगात्रंचकंपमानंमुहुर्मुहुः नकिंचनवदंतंतंवीक्ष्यशोकार्दितोब्रवीत् २२ लक्ष्मणस्तद्वचःश्रुत्वासीतायास्त्यागसंभवम् निः
श्वसन्मुहुरुच्छ्वासंस्तब्धगात्रइवाभवत् २३ किंकरिष्याम्यहंभूमौस्थित्वादुर्यशसांकितः त्यजामीदंवपुःश्रीमल्लोकभीत्याच्चशोकतः
२४ सर्वदाभ्रातरोमह्यमदास्यकरणोत्सुकाः इदानींतेपिदैवेनप्रतिकूलव्रतचराः २५ कुत्रगच्छामिकंयामिहसिष्यंतिनृपाभुवि दु
र्यशोलांछितंमांवैकुष्ठिनंरूपवन्नराः २६ मनोर्वंशेपुराभूपाजाताजातागुणाधिकाः इदानींमयितत्सर्वंविपरीतंबभूवह २७ इति
संभाष्यमाणंतंरामचंद्रंसमीक्ष्यसः संस्तभ्याश्रूणिविपुलान्युवाचविपुलस्वरः २८ स्वामिन्विषादमाकार्षीःकथंतवमतिर्हता सीता

मनिंदितां कोनुत्यजति श्रुतवान् भयात् २९ आकारयामि रजकं परिपृच्छामि तं प्रति कथं त्वया निंदिता सा जानकी योषितां वरा ३०
न वदेशे बलात्कश्चिद्वाध्यते न जनोल्पकः तस्मात्तस्य यथा स्वप्न प्रतीतिः स्यात्तथाचर ३१ किमर्थं त्यजते भीरुः पतिव्रतपरायणा मनसा
वचसा नान्यं जानाति जनकात्मजा ३२ तस्मादेनां गृहाण त्वमेतां मा त्यज जानकीम् ममोपरि कृपां कृत्वा यदुक्तं संशृणुष्व तत् ३३
एवं वदंतं प्रत्यूचे रामः शोकेन कर्षितः लक्ष्मणं धर्मवाक्येन बोधयत्तं निजोपमः ३४ रामउवाच कथं त्वं मां ब्रवीषीति मा त्यजैनामनिंदिताम्
लोकापवादात्त्यक्ष्येहं जानन्नपि विपापिनीम् ३५ स्वयशः कारणेहं वै देहं त्यक्ष्यामि शोभनम् त्वामपि भ्रातरं त्यक्ष्ये-
लोकवादाद्विगर्हितम् ३६ किमुतान्ये गृहाः पुत्रा मित्राण्येव च शोभनम् स्वयशः कारणे सर्वं त्यजामि किमु मैथिलीम् ३७ न तथा
मे प्रियो भ्रातान् कलत्रं न बांधवाः यथा मे विमला कीर्तिर्वल्लभा लोकविश्रुता ३८ इदानीं रजको नैव प्रष्टव्यो भवति ध्रुवम् कालेन सर्वं
भविता लोकचित्तस्य रंजनम् ३९ आमयो यद्वदामस्तु न चिकित्स्यो भवेत्क्षितौ स कालेन परीपाकाद्भेषजादेव नश्यति ४० तया-
कालेन संभाविसांप्रतं मा विलंबय त्यजैनां विपिने साध्वीं मां वा खड्गेन घातय ४१ इत्युक्तं वाक्यमाकर्ण्य दुःखितो भूत्तदा महान्
चिंतयामास च स्वांते लक्ष्मणः शोककर्शितः ४२ पित्राज्ञप्तो जामदग्न्यो मातरं चाप्यघातयत् गुरोराज्ञा नैव लंघ्या युक्ता युक्तापि
सर्वथा ४३ तस्मादेनां त्यजाम्येव रामस्य प्रियकाम्यया इति संचिंत्य मनसि भ्रातरं प्रत्युवाच सः ४४ अकृत्यमपि कार्यं वै गुर्वा-
ज्ञां नैव लंघयेत् तस्मात्कुर्वे भवद्वाक्यं यत्त्वं वदसि चोत्तमम् ४५ इत्येवं भाषमाणं तं लक्ष्मणं प्रत्युवाच सः साधु साधु महाप्राज्ञ त्व-
यामे तोषितं मनः ४६ अद्यैव रात्रौ जानक्या दोहदस्तापसीक्षणे तन्मिषेण रथे स्थाप्य मोचयैनां महावने ४७ इत्थं भाषितमाकर्ण्य वि-
शुष्यद्वदनो भितः रुदन्बाष्पकलां मुंचन् जगाम स्वं निवेशनम् ४८ सुमंत्रं तु समाहूय वचनं तमथाब्रवीत् रथं मे कुरु सज्जं
वै सदश्ववरभूषितम् ४९ स तद्वाक्यं समाकर्ण्य रथमानीतवांस्तदा आनीतं तं रथं दृष्ट्वा लक्ष्मणः शोककर्शितः ५० परमं दुः-
खमापन्नः संरुद्धस्यंदनं वरम् निःश्वसन् जानकीगेहं प्रतस्थे भ्रातृसेवकः ५१ गत्वा चांतः पुरे भ्राता रामस्य मिथिला-

त्मजाम् प्रत्यूचेनिःश्वसन्वाक्यंदुःखपूरपरिप्लुतः ५२ मातर्जानकिरामेणप्रेषितोभवनेतव तापसीःप्रतियाहित्वंदोहदप्राप्तिहेतवे ५३
इतिवाक्यंसमाकर्ण्यलक्ष्मणस्यविदेहजा परमंहर्षमापन्नालक्ष्मणंप्रत्यभाषत ५४ धन्याहंमैथिलीराज्ञीरामस्यचरणस्मर यस्यादो-
हदपूर्त्यर्थंप्रेषयामासलक्ष्मणम् ५५ अद्याहंवैवनचरीस्तापसीःपतिदेवताः नमस्कुर्यांचवासोभिःपूजयामिमनोहराः ५६ इ-
त्युक्त्वारम्यवस्त्राणिमहार्हाभरणानिच मणीन्विमलमुक्ताश्चकर्पूरादिसुगंधिमत् ५७ चंदनादिकवस्तूनिविचित्राणिसहस्रधा
जग्राहरघुनाथस्यपत्नीस्वप्रियकाम्यया ५८ सीतागृहीत्वासर्वाणिदासीभ्यःकरयोर्मुहुः लक्ष्मणंप्रतिगच्छंतीदेहल्यांचास्खल
त्तदा ५९ अविचार्यतदौत्सुक्याल्लक्ष्मणंप्रियकाम्यया उवाचकुत्रसरयोयेनमांप्रापयिष्यसि ६० सनिःश्वसन्रथेहेमंजानक्या
सहनिर्विशत् सुमंत्रंप्रत्युवाचासौचालयाश्वान्मनोजवान् ६१ ततस्तद्वाक्यमाकर्ण्यलक्ष्मणस्याथचालयत् अश्रुपूर्णमुखंप-
श्यन्लक्ष्मणंसमुहुर्मुहुः ६२ आहतास्तेनकशयावाहास्तस्यापतन्पथि नचलंतियदावाहास्तदालक्ष्मणमब्रवीत् ६३ स्वामिंश्च
लंतिनोवाहायत्नेनपरिचालिताः किंकरोमिनजानेत्रकारणंवाहस्तंभने ६४ एवंब्रुवंतंप्रत्यूचेलक्ष्मणोगद्गदस्वरः सारथिंधैर्यमा
स्थाय ताडयैतान्कशादिभिः ६५ एतच्छ्रुत्वोदितंवाक्यंकृयंचित्समचालयत् तदास्फुरद्दक्षनेत्रंजानक्यादुःखशंसकम् ६६ तदैव
हृदयेशोकःसमभूद्दुःखशंसकः तदैवपक्षिणःपुण्याःकुर्वंतिपरिवर्तनम् ६७ एवंवीक्ष्यैववैदेहीप्रत्युवाचाथदेवरम् कथंमेतापसीक्षायैयातुमिच्छोरघूद्वह ६८ रामोभूयाद्धिकल्याणभरतेवानयानुजे तत्प्रजासुचसर्वत्रमाभवतुविपर्ययाः ६९ एवंब्रुवंतीं
संवीक्ष्यजानकींसचलक्ष्मणः नकिंचिदुक्तवान्रुद्धकंठोबाष्पप्रपूरितः ७० सागच्छतीमृगान्वामंपरिवर्तनकारकान् अपश्यद्दुः
खसंघानकारकान्समभाषत ७१ अद्ययन्मेमृगावाममवर्तयनितद्दिष्यते श्रीरामचरणौमुक्त्वागच्छंत्यायुक्तमेवतत् ७२ महि
लानांपरमोधर्मःस्वभर्तृचरणार्चनम् तन्मुक्त्वायत्रयास्यामियद्भवेद्युक्तमेवतत् ७३ एवंपथिविचारंतुकुर्वत्यापरमार्थतः दृष्टंत
टंसुजान्हव्यामुनिवृंदैकसेवितम् ७४ यस्याजलस्यकल्लोलादृश्यंतेदुग्धसन्निभाः तरंगादृश्यतेयत्रस्वर्गसोपानमूर्तिभूत्

७५ यस्यां वारिकणस्पर्शान्महापातकसंचयः पलायते च कुत्रापि स्थानमीक्षन्समंततः ७६ गंगां प्राप्याथ सौमित्रिर्जानकीस्यंदने स्थिताम् उवाच निर्गलद्बाष्प एहि सीते रथाद्भुवि ७७ सीता तद्वाक्यमाकर्ण्य क्षणादवततार सा लक्ष्मणेन धृता बाहौ स्खलंती पथि कंटकैः ७८ इति श्रीपद्मपुराणे पातालखंडे शेषवात्स्यायनसंवादे रामाश्वमेधे गंगादर्शनं नाम अष्टपंचाशत्तमोऽध्यायः ५८ शेष उवाच

अथ नावा समुत्तीर्य जान्हवीं लक्ष्मणस्तदा जानकीं परतस्तीरे हस्ते धृत्वा वनं ययौ १ सा चलंती पथि तदा शुष्यद्वदनलक्षिता कंटकक्षतसत्पादा स्खलंती च पदे पदे २ लक्ष्मणस्तां महाघोरे विपिने दुःखदायिनि प्रवेशयामास तदा राघवाज्ञाविधायकः ३ तत्र वृक्षा महाघोरा बुबुलाः खदिरा घनाः श्लेष्मातकाश्चिंचिणिकाः शुष्का दावेन वन्हिना ४ कोटरस्था महासर्पाः स्फूत्कुर्वंति सुकोपिताः उलूका घोरमहाक्रूरा लोकचित्तभयंकराः ५ व्याघ्राः सिंहाः सृगालाश्च द्वीपिनोतिभयंकराः दृश्यंते यत्र सरला मनुष्यादाः सुकोपनाः ६ महिषाः सूकरा दुष्टा दंष्ट्राद्वयविलक्षिताः कुर्वंति प्राणिनां तापं मानसस्य मदोत्कटाः ७ ईदृग्वनं प्रपश्यंती भयेनोपगतज्वरा कंटकैर्दष्टचरणा लक्ष्मणं वाक्यमब्रवीत् ८ वीरर्षिमुनिसेव्यानामाश्रमान्नेत्रसौख्यदान् नाहं पश्यामि नो तासां पत्नीश्च सुतपोधनाः पश्यामि केवलं घोरान्पक्षिणः शुष्कवृक्षकान् दावानलेन तत्सर्वं दह्यमानमिदं वनम् १० त्वां च पश्यामि दुःखार्तमश्रुपूर्णाकुलेक्षणम् शकुनेतरसाहस्रं भवेन्मम पदे पदे ११ तन्मे कथय वीराग्र्य कथमुक्तां महात्मना रामेणादुष्टहृदयां क्षिप्रं कथय मे हितम् १२ इति वाक्यं समाकर्ण्य लक्ष्मणः शोककर्शितः संरुद्धबाष्पवदनो न किंचित्प्रोक्तवांस्तदा १३ तदैव विपिनं घोरं गच्छंती लक्ष्मणान्विता पुनरप्याह तं वीरं दुःखार्ता पश्यती मुखम् १४ तदापि स न तां वक्ति किमपि प्रेक्षयन्स्थितः तदासा त्वं तं निर्बंधं चकार परिमूर्च्छिता १५ आग्रहेण यदा पृष्टो लक्ष्मणः सीतया तदा रुद्धकंठो मुहुः शोचन्नवदत्त्यागसंभवम् १६ तद्वाक्यं पविना तुल्यं निशम्य मुनिसत्तम सुलताक्रांतमूलेव बभूवाकल्यवर्जिता १७ तदैव पृथिवी तात जग्राह तनयामिमाम् रामो विपापिनीं सीतां न जह्यादिति शंकिनी १८ पतितां तां तु वैदेहीं दृष्ट्वा सौमित्रिरुत्सुकः पल्लवाग्रसमीरेण संज्ञितां तु चकार सः १९ संज्ञां प्राप्ता त्वुवाचेदं साहसं मा

कुरुष्वह कथंमांपापरहितांस्त्यजतेसरघूद्वहः २० एवंबहुविलप्यायलक्ष्मणंदुःखसंयुतम् संवीक्ष्यमूर्च्छिताभूमौपपातपरि
दुःखिता २१ मुहूर्तेनापिसंज्ञांसाप्राप्यदुःखपरिप्लुता जगादरामचरणौस्मरंतीशोकविक्षता २२ रघुनाथोमहाबुद्धिस्त्यक्ष्यते
मांकथंमहान् योमदर्थेपयोराशिंबद्धवान्वानरैर्युतः २३ सकथंमांमहावीरोनिष्पापांरजकोक्तितः त्यजिष्यतिममैवात्रदैवं
नुप्रतिकूलितम् २४ एवंवदन्पुनरपिमूर्च्छांप्राप्ताविदेहजा मूर्च्छितांतांसमीक्ष्याथरुरोदविकृतस्वरः २५ पुनःसंज्ञामवाप्यैवं
सौमित्रिंनिजगादसा दुःखांतरवीक्ष्यमाणारुद्धकंठसुदुःखिता २६ सौमित्रेगच्छरामंत्वंधर्मभूतियशोनिधिम् मद्वाक्यमेवत्वं
ब्रूयाःसमक्षंतपसांनिधेः २७ मांत्यजाजभवान्यद्वैजानन्नपिविपापिनीम् कुलस्यसदृशंकिंवाशास्त्रज्ञानस्यतत्फलम् २८
नित्यंनवपदेरक्तांत्वदुच्छिष्टभुजंहिमाम् भवांस्त्यजतत्सर्वंममदैवंतुकारणम् २९ कल्याणंतवसर्वत्रभूयाद्वीरवरोत्तम भूहं
तावद्वनेत्वांहिस्मरंतीप्राणधारणम् ३० मनसाकर्मणावाचाभवानेवममोत्तमः अन्येतुच्छीकृताःसर्वेमनसारघुवंशज ३१ भवेभ
वेभवानेवपतिर्भूयान्महेश्वरः त्वत्पदस्मरणानेकहृतपापसतीश्वर ३२ श्वश्रूजनंब्रूहिसर्वंमत्संदेशंरघूत्तम त्यक्तावनेमहाघोरेरा
मेणनिर्घासती ३३ स्मरामिचरणौयुष्मद्वनेमृगगणैर्युते अंतर्वत्नीवनेत्यक्तारामेणसुमहात्मना ३४ सौमित्रेशृणुमद्वाक्यंभद्रं
भूयाद्रघूत्तमे इदानींसंत्यजेप्राणान्रामवीर्यंसुरक्षति ३५ त्वंरामवचनंतथ्यंयत्करोषिशुभंतव परतंत्रेणतत्कार्यंरामपादाब्जसे
विना ३६ गच्छरामंत्वंसविधेशिवाःपंथानएवते ममोपरिकृपाकार्यास्मर्तव्याहंकदाचन ३७ इत्युक्त्वामूर्च्छिताभूमौपपातपुरतस्त
दा लक्ष्मणोदुःखमापेदेवीक्ष्यमूर्च्छितजानकीम् ३८ वीजयामासवासोग्रैःसंज्ञांप्राप्तांप्रणम्यच सौमित्रिःसांत्वयामासवचनैर्म
धुरैर्मुहुः ३९ एषगच्छामिरामंवैगत्वाशंसामिसर्वशः समीपेतेमुनेरस्तिवाल्मिकेराश्रमोमहान् ४० इत्युक्त्वातांपरिक्रम्यदुः-
खितोबाष्पपूरितः मुंचन्नश्रुकलादुःखाद्ययौराममहीपतिम् ४१ जानकीदेवरंयांतंवीक्ष्यविस्मितलोचना हसंत्ययंमहाभा
गोलक्ष्मणोदेवरोमम ४२ कथंमांप्राणतःप्रेष्ठांविपापांराघवोत्यजत् इतिसंचिंतयतिसाऐक्षतानिमिषेक्षणा ४३ जान्हवीं

सर्वथोत्तीर्णाज्ञात्वासर्वंस्वहापनम् पतिताप्राणसंदेहंप्राप्तामूर्च्छांमृतातदा ४४ तदाहंसाःस्वपक्षाभ्यांजलमानीयसर्वतः सिषि
चुर्मधरोवायुर्ववौपुष्पसुगंधिमान् ४५ करिणःपुष्करैःस्वीयैर्जलपूर्णैःसमंततः व्यासंशरीरंरजसाक्षालयंतइवागताः ४६
मृगास्तदंतिकंप्राप्यसंतस्थुर्विस्मितेक्षणाः नगाःपुष्पयुताआसंस्तत्कालमधुनाविना ४७ एतस्मिन्समयेवृत्तेसंज्ञांप्रापतदा
सती विललापसुदुःखार्तारामरामेतिजल्पती ४८ हानाथदीनबंधोहेकरुणापयसांनिधे अनपराधात्तेमांत्वंकथंत्यजसिवै
वने ४९ इत्येवमादिभाषंतीविलपंतीमुहुर्मुहुः इतस्ततःप्रपश्यंतीसंमूर्च्छंतीपुनःपुनः ५० तदास्वशिष्यैर्भगवान्वाल्मी
किःसंगतोवनम् शुश्रावरुदितंतत्रकरुणास्वरभाषितम् ५१ शिष्यान्प्रतिजगादाथपश्यंतुवनमध्यतः कोरोदितिमहाघो
रेविपिनेदुःखितस्वरः ५२ तेप्रयुक्ताश्चमुनिनासंजग्मुर्यत्रजानकी रामरामेतिभाषतीबाष्पपूरपरिप्लुता तांदृष्ट्वास्त्वियमी
त्सुक्याद्वाल्मीकिंप्रत्यगुर्मुनिम् श्रुत्वातदीरितंवाक्यंसजगामततोमुनिः ५४ दृष्ट्वासजानकींदुःखाद्रोदमानांमुहुर्मुहुः समी
पमगमच्छिष्यैर्वाल्मीकिस्तपसांनिधिः ५५ दृष्ट्वातंतपसाराशिंजानकीपतिदेवता नमोस्तुमुनयेवेदमूर्तयेव्रतधारिणे ५६
इत्युक्तवंतींतांसीतांआशीर्भिरभ्यनंदयत् भर्त्रासहचिरंजीवपुत्रौप्राप्नुहिशोभने ५७ कासित्वंकिंवनेघोरेसंगतासिकिमीदृ-
शी सर्वमेशंसजानीयांतवदुःखस्यकारणम् ५८ सातदाप्रत्युवाचेमरामस्यमहिलामुनिम् निःश्वसंतीकरुणयागिरा
संजातवेपथुः ५९ शृणुमेवाक्यमर्थोक्तंसर्वदुःखस्यकारणम् जानीहिमांभूमिपतेरघुनाथस्यसेवकीम् ६० अपराधंवि-
नात्यक्तानजानेतत्रकारणम् लक्ष्मणोमांविमुच्यात्रगतवान्राघवाज्ञया ६१ इत्युक्त्वाश्रुकलापूर्णंबिभ्रतीमुखपंकजम् वाल्मी-
किःसांत्वयन्नाहजानकींकमलेक्षणां ६२ वाल्मीकिंमांविजानीहिपितुस्तवगुरुंमुनिम् दुःखंमाकुरुवैदेहित्वंगच्छममचाश्र-
मम् ६३ भिन्नस्थानेपितुर्गेहंजानीहिपतिदेवते ईदृशेकर्मणिममरोषस्तवमहीपतौ ६४ एववचःसमाकर्ण्यजानकीपति-
देवता दुःखपूर्णाश्रुवदनाकिंचित्सुखमवापसा ६५ शेषउवाच वाल्मीकिःसांत्वयित्वेनांदुःखपूराकुलेक्षणाम् ६६ सागच्छं-

तीपृष्ठतोस्यवाल्मीकेस्तपसांनिधेः रराजेंदोःपृष्ठतोवैतारकेवमनोहरा ६७ वाल्मीकिःप्राप्यचस्वीयमाश्रमंमुनिपूरितम् तापसीः
प्रतिसंचख्यौजानकींस्वाश्रमागताम् ६८ वैदेहींतापसीःसर्वानमश्चक्रेमहामनाः परस्परंप्रहृषिताःपरिरंभसमाचरन् ६९ वा
ल्मीकिर्निजशिष्यान्सप्रत्युवाचतपोनिधिः रच्यतांबत्जानक्याःपर्णशालामनोरमा ७० इत्युक्तंवाक्यमाकर्ण्यवाल्मीकेःसुमनो
रमम् व्यरचन्पत्रकैःशालांदारुभिःसुमनोहराम् ७१ तत्रावसद्धिवैदेहीपतिव्रतपरायणा वाल्मीकेःपरिचर्यांचकुर्वती
फलभक्षका ७२ जपंतीराम रामेतिमनसावचसास्वयम् निनायदिवसास्तत्रजानकीपतिदेवता ७३ कालेसासूतपुत्रौद्वौमनो
हरवपुर्धरौ रामचंद्रप्रतिनिधीह्यश्विनाविवजानकी ७४ तच्छ्रुत्वातुमुनिर्हृष्टोजानक्याःपुत्रसंभवम् चकारजातककर्मा
दिसंस्कारान्मंत्रवित्तमः ७५ कुशैर्लवैश्चवाल्मीकिर्मुनिःकर्माणिचाचरत् तन्नाम्नापुत्रयोराख्याकुशोलवइतिस्फुटा ७६
वाल्मीकिर्यत्रविरजामंगलंतद्यथाचरत् अत्यंतहृष्टचित्तासाबभूवकमलेक्षणा ७७ तद्दिनेलवणंहत्वाशत्रुघ्नःस्वल्पसैनिकः
आगमच्चाश्रमेचास्यवाल्मीकेर्निशिशोभने ७८ तदावाल्मीकिनाशिष्यःशत्रुघ्नंरघुनायकम् माशंसजानकीपुत्रौकथशिष्याम्य
हंपुरः ७९ जानकीपुत्रकौतत्रववृधातेमनोरमौ कंदमूलफलैःपुष्टौविदधातुम्नदोवरौ ८० शुक्लप्रतिपदायाश्चशशीवसु-
मनोहरौ कालेनसंस्कृतौजातावुपनीतौमनोहरौ ८१ उपनीयमुनिर्वेदंसांगमध्यापयत्सुतौ सरहस्यधनुर्वेदरामायणमपाठ-
यत् ८२ वाल्मीकिनाचधनुषीदत्तेस्वर्णसुभूषिते अभेद्येसगुणेश्रेष्ठेवैरिवृंदविदारणे ८३ इषुधीबाणसंपूर्णेअक्षयेकर-
वालकौ चर्मण्यभेद्येसुदृढेददौसीताकुमारयोः ८४ धनुर्धरौधनुर्वेदपारगावाश्रमेमुदा चरंतौतत्ररेजातेअश्विनाविवशोभिनौ
८५ जानकीवीक्ष्यपुत्रौद्वौखड्गचर्मधरौवरौ परमंहर्षमापन्नाविरहोद्भवमत्यजत् ८६ एतत्तेकथितंविप्रजानक्याःपुत्रसंभवः
अतःशृणुष्वयद्वृत्तंवीरबाहुविकृंतनम् ८७ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेएकोनषष्टितमोऽध्यायः
५९ शेषउवाच शत्रुघ्नोनिजवीराणांछिन्नान्बाहून्निरीक्षयत् उवाचतान्सुकुपितोरोषसंदंशिताधरः १ केनवीरेणवोबाहु-

हृतनं समकारिभो नस्याहं बाहूकृतामिदे वगुप्तस्यैवेभटाः २ नजानाति महामूढो रामचंद्रबलं महत् इदानीं दर्शयिष्यामि-
पराक्रांस्ताबलस्वकम् ३ सकुत्र वर्ततेवीरोहयः कुत्र मनोरमः कोगृण्हात्सुदूरं वाह मूढोज्ञात्वापराक्रमम् ४ इत्युक्तास्तेनते
वीराबभूवुर्विस्मिताभृशम् रामचंद्रप्रतिनिधिं बालकं समशंसत ५ सश्रुत्वारोषताम्राक्षोबालकेनहयग्रहम् सेनानीं वै काल
जितं तमाज्ञापयदुत्सुकः ६ सेनानीः सकलंसेनां व्यूहयस्वममाज्ञया रिपुः संप्रतिगंतव्योमहाबलपराक्रमः ७ नायंबालो
हरिर्नूनं भविष्यतिहयधरः अथवात्रिपुरारिःस्यान्नान्यथामद्धयापहृत् ८ अवश्यंकदनंभाविसैन्यस्यबलिनोमहत् स्वच्छंद
चरितैःखेलन्भ्रास्तेनिर्भयधीःशिशुः ९ तत्रगंतव्यमस्माभिःसन्नद्धैरिपुदुर्जयैः एतन्निशम्यवचनंशत्रुघ्नस्सैन्यपः १० सज्जी
चकारसेनांतांचतुरंगसमन्विताम् सज्जांतांशत्रुजिद्दृष्ट्वाचतुरंगयुतंवरम् ११ आज्ञापयत्ततोगंतुंयत्रबालोहयंधरः साचचाल
तदासेनादुर्लंघ्याचतुरंगिणी १२ कंपयंतीमहीभागंत्रासयंतीरिपून्बलात् सेनानीस्तंददर्शाथबालकंकामरूपिणम् १३ विल-
क्ष्यरामप्रतिममब्रवीद्वचनंहितम् बालमुंचहयश्रेष्ठंरामस्यबलशालिनः १४ सेनानीः कालजिन्नामाब्रवीमित्वांहितंशुभम् त्वां
रामप्रतिमंदृष्ट्वाकृपामेहृदिजायते १५ अन्यथातवमेदोस्थ्यंजीवितंचभविष्यति एतद्वाक्यंसमाकर्ण्यशत्रुघ्नस्यभटस्यहि
१६ जहासकिंचिद्वाकोपादुक्तवान्वाक्यमद्भुतम् गच्छमुक्तोसितंरामंकथयस्वहयग्रहम् १७ त्वत्तोबिभेमिनोक्रूरवाक्येन
नयशालिना ममतेगणनानास्तित्वादृशाःकोटयोयदि १८ मातृपादप्रसादेनतूलीभूतानसंशयः कालजित्तवयन्नाममात्राकृ
तमनुत्तमम् १९ पक्वबिंबफलस्येववर्णतोनचवीर्यतः दर्शयस्वाधुनावीर्यंस्वनामबलचिन्हितः २० मांकालरूपंसंजित्य-
सत्यनामाभविष्यसि शेषउवाच सवाक्यैःपविनातुल्यैर्भिन्नःसुभटशेखरः २१ चुकोपहृदयेसंतंजगादचवचःपुनः त्वं
नामनाभिजानामिकुलंशीलंवयस्तथा २२ पादचारीरथस्थोहमधर्मेणकथंजये सतदातंप्रकुपितोजगादवचनंपुनः २३ कुले
नकिंचशीलेननाम्नावाकिंविधीयताम् लवोहंलवतःसर्वान्जेष्यामिरिपुसैनिकान् २४ इदानींत्वामपिभटंकरिष्येपादचारिणम्

इत्थमुक्त्वाधनुःसज्यंचकारबलतोबली २५ टंकारयामासतदावीराणांकंपयन्मनः वाल्मीकिंप्रथमंस्मृत्वाजानकीप्सातरंलवः मुमो
चबाणान्निशितान्सद्यःप्राणापहारिणः कालजित्स्वधनुःकृत्वासज्यंकोपसमन्वितः २७ ताडयामासयवनोलवंरणविशारदः त
द्बाणान्शतधाछित्वाक्षणाद्वेगात्कुशानुजः २८ सेनानींविरथंचक्रेवसुभिःस्वशरोत्तमैः विरथोगजमानीतमारुरोहभटैर्निजैः २९ मदो
न्मत्तंमहावेगंससधाप्रस्रवान्वितम् जगारूढंतुतंदृष्ट्वादशभिर्धनुषोज्झितैः ३० बाणैर्विव्याधविहसन्सर्वान्रिपुगणान्जयत् काल-
जित्तस्यवीर्यंतुदृष्ट्वाविस्मितमानसः ३१ गदामुमोचमहतीमहायसविनिर्मिताम् आपततींगदांवेगाद्धारायुतविनिर्मिताम् ३२
त्रिधाचिच्छेदतरसाक्षुरप्रैःसकुशानुजः परिघंनिशितंघोरंवैरिप्राणहरंतदा ३३ मुक्तंपुनस्तेनलवश्चिच्छेदतरसान्वितः छित्वातत्प-
रिघंघोरंकोपादारक्तलोचनः ३७ गजोपस्थेसमारूढंमन्यमानश्चकोपह तत्क्षणादच्छिनत्तस्यशुंडारवड्गेनदंतिनः ३५ दंतयोश्चरणौ
कृत्वारुरोहगजमस्तके मुकुटंशतधाकृत्वाकवचंतुसहस्रधा ३६ केशेष्वाकृष्यसेनानींपातयामासभूतले पातितःसगजोपस्थात्सेना
नीःकुपितःपुनः ३७ हृदयेताडयामासदृढेनवज्रमुष्टिना सआहतोमुष्टिनातुक्षुरप्रान्निशितान्शरान् ३८ मुमोचहृदये
क्षिप्रंकुंडलीकृतधन्ववान् सरराजरणोपांतेकुंडलीकृतचापवान् ३९ शिरस्त्रंकवचंबिभ्रदभेद्यंशरकोटिभिः सविद्धःसायकैस्तीक्ष्णै-
स्तंहंतुंरवड्गमाददे ४० दशन्रोषात्स्वदशनान्निश्वसन्भुजगोमुहुः रवड्गहस्तंसमायांतंशूरंसेनापतिंलवः ४१ भुजंचिच्छेदमध्येतु
सरवड्गःपाणिरापतत् छिन्नंरवड्गधरंहस्तंवीक्ष्यकोपाच्चभूपतिः ४२ वामेनगदयाहंतुंप्रचक्रामभूधंलवम् सोपिछिन्नोभुजस्तस्यसग
दस्तीक्ष्णसायकैः ४३ तदाप्रकुपितोवीरःपादाभ्यामहनल्लवम् पादौलवोहनत्तस्यनचचालरणांगणे ४४ स्वगाहतोद्विपइवचरण
च्छेदनंव्यधात् तदापितंमौलिनासोप्रहर्तुमुपचक्रमे ४५ तदालवश्चभूनायंमन्यमानोधिपौरुषम् करवालंसमादायकरेकालानलो
पमम् अच्छिनच्छिरएतस्यमहामुकुटशोभितम् हाहाकारोमहानासीच्चमूनायेनिपातिते ४७ सैनिकाःपरिसंक्रुद्धालवंहंतुंस
मागताः लवस्तान्स्वशराघातैःपलायनपरान्व्यधात् ४८ छिन्नाभिन्नागकाःकेचिद्गताःकेचिद्रणांगणात् सनिवार्यारिवलान्याधा

न्विजग्राहनृपं मुदा ४९ वाराह इव निश्वस्य प्रलये सुमहार्णवम् जगाभिन्नाद्विधाजाता मौक्तिकैः पूरिता मही ५० दुर्गमा भूद्धरा युध्या
णां पर्वतैर्व्याप्तृता यथा अश्वाः कनकपल्याणरत्नराजिविराजिताः ५१ अपतन्रुधिराप्लुष्टहृदया बलशोभिताः रथिनः करमध्यस्थध-
नुर्दंडसुशोभिनः ५२ रथोपरथाश्च पतिताः स्वर्गगा इव वै सुराः संदष्टोष्टपुटाः क्रुद्धाः त्रमल्लक्ष्या वलक्षिताः ५३ पतितास्तत्र दृश्यंते वी
रारणविशारदाः सुस्रावशोणितसरिद्वयमस्तककच्छपा ५४ महाप्रवाहलसिता वैरिणां भयकारिका केषांचिद्बाहवश्छिन्नाः केषांपा-
दावकर्तिताः ५५ केषां कर्णाश्च नासाश्च केषांकवचकुंडले एवं तु कदनं कृत्वा सेनानीः पतितो रणे ५६ सर्वे निपतिता वीरा न केचिज्जी
वितास्ततः लवो जयं रणे प्राप्य वैरिवृंदं विजित्य च अन्यागमनशंकायामनः कुर्वन्न्यवैक्षत ५७ केचिद्दुर्वरिता युद्धाद्भाग्येन न रणे मृ-
ता शत्रुघ्नं सविधे जग्मुः शंसितुं वृत्तमद्भुतम् ५८ गत्वा ते कथयामासुर्यथावृत्तं रणांगणे कालजिन्निधनं बालात्त्वासौ रणविशारद
५९ तच्छ्रुत्वा विस्मयं प्राप्तः शत्रुघ्नस्तानुवाच ह ६० हसन्रोषात् शब्दं तान्बालनीतं हयं स्मरम् रे वीराः किं मदोन्मत्ता यूयं किं
वा छलग्रहाः ६१ किं वा वैकल्पमायातं कालजिन्मरणं कथम् यः सर्वैर्वैरिवृंदानां दारणः समितिंजयः ६२ तं कथं बालकोजी
या द्यमस्यापि दुरासदम् शत्रुघ्नवाक्यं संश्रुत्य वीराः प्रोचुरसृक्प्लुताः ६३ नास्माकं मदमत्तत्वं न च्छलो न च देवनम् कालजिन्मर
णं सत्यं लवाज्जानीहि भूपते ६४ बलं च कृत्स्नं मथितं बालेनातुलशौंडिना अतः परं तु यत्कार्यं ये प्रेष्या नृवरोत्तमाः ६५ बालं ज्ञा
त्वा भवान्मात्र करोतु बलसाहसम् इति श्रुत्वा वचस्तेषां वीराणां शत्रुहा तदा ६६ सुमतिं च मतिश्रेष्ठमुवाच रणकारणे ६७ इति श्री
पद्मपुराणे पातालखंडे शेषवात्स्यायनसंवादे रामाश्वमेधे कुशलवयुद्धे सैन्यपराजयो नाम षष्टितमोऽध्यायः ६० शेष उवाच जानासि किं
महामंत्रिन्को बालो हयमाहरत् येन मे क्षपितं सर्वं बलं वारिधिसंनिभम् १ सुमतिरुवाच स्वामिन्नयं मुनिश्रेष्ठवाल्मीके राश्रमो
महान् क्षत्रियाणामत्र वासो नास्त्येव परतापन २ इंद्रो भविष्यति परममर्षी हयमाहरत् पुरारिर्वान्यथा वा हं तवकोत्र समाहरे
त् ३ कालजिद्येन नाशं च प्राप्तः परमदारुणः तं प्रति श्रीमहाराज गंता कः पुष्कलान्यतः ४ तं च सर्वैर्भटैर्वीरै राजभिः परिवारि

नः तत्रगच्छस्वसैन्येनमहताताशत्रुघ्नंतन ५ गत्वातंजीवितंवीरंबध्वातुकुतुकार्थिनः प्रदर्शयाद्यरामस्यमतंमेत्विदमादृतम् ६
इतिवाक्यंसमाकर्ण्यवीरान्सर्वान्समादिशत् ७ सैन्येनमहतायातयूथमायामिपृष्ठतः निर्दिष्टास्तेक्षणाद्वीराजग्मुर्यत्रलवोबली
८ धनुर्विस्फारयंतश्चस्फुद्दृढंगुणपूरितम् आयांतंतन्महद्दृष्ट्वाबलंवीरप्रपूरितम् ९ नकिंचिन्मनसाबिभ्यल्लवोयंबलशालिना
लवःसिंहइवोत्तस्थौमृगान्मत्वाऽखिलान्भटान् धनुर्विस्फारयन्रोषाच्छरान्मुंचन्सहस्रशः १० तैःशरैःपीड्यमानस्तुमहारोषेणपूरि
तः वीरंबालंमन्यमानाःसमुखंप्राद्रवंस्तदा ११ वीरान्सहस्रशोदृष्ट्वाचमूमिभिःपर्यवस्थितान् लवोजवेनसंधायशरान्रोषप्रपूरि
तः १२ चमूरथसहस्रेणद्वितीयायुतसंख्यया तृतीयायुतयुग्मेनतुरीयायुतपंचभिः १३ पंचमीलक्षयोधानांषष्ठीयोधायुता
धिकैः सप्तमीलक्षयुग्मेनसप्तभिश्चमूभिर्वृतः १४ मध्येलवोभ्रमन्संख्येसंज्वलन्वन्हिवत्तदा दारयामाससर्वान्संसैनिकान्रथि-
भिकारकान् १५ केचित्खड्गैःशरैःकेचित्केचित्प्रासैश्चकुंतलैः पट्टिशैःपरिघैःसर्वाश्चमूभिर्भग्नामहात्मना १६ सप्तभिश्चमूभि
र्मुक्तोरराजसकुशानुजः मेघवृंदविनिर्मुक्तःशशीवशरदागमे १७ प्राहरत्सर्वथायोधान्भिंदनाजकरान्बहून् छिंदन्शिरांसि
वीराणांचक्रेणातिमहंतिच १८ अनेकेपतितावीरालवबाणप्रपीडिताः मुमुहुश्चसमर्यायेनष्टाअन्येसुकातराः १९ पलायनप
रंसैन्यंलवबाणप्रपीडितम् वीक्ष्यवीरोरणेयोद्धुंप्रायात्पुष्कलसंज्ञकः २० तिष्ठतिष्ठेतिचवदन्रोषपूरितलोचनः रथेसुहय
शोभाढ्येतिष्ठंप्रायाल्लवंबली २१ सलवंप्रत्युवाचाथपुष्कलःपरमार्थवित् तिष्ठवत्समयादत्तेरथेसुहयशोभिते २२ पदा
तिनात्वयायुद्धंकरोमिकथमाहवे तस्मात्तिष्ठरथेपश्चाद्युद्ध्यामिभवतासह २३ एतद्वाक्यंनिशम्यासौलवःपुष्कलमब्रवी-
त् २३ त्वयादत्तेरथेस्थित्वायुद्धंकुर्यामहंरणे तदामेपापमेवस्याज्जयःसंदिग्धएवहि २४ नवयंब्राह्मणावीरप्रतिग्रह
परायणाः वयंतुक्षत्रियानित्यंदानकर्मक्रियारताः २५ इदानींत्वद्रथंकोपाद्भनज्मिप्रत्यहंभवान् पादचारीभवस्तेवप-
श्चाद्युद्धंकरिष्यति २६ पुष्कलोवाक्यमाकर्ण्यधर्मधैर्यसमन्वितम् विसस्मायचिरंचित्तेधनुःसज्यमथाकरोत् २७ तमात्तधनु

षं दृष्ट्वा लवः कोपसमन्वितः चापं चिच्छेद पाणिस्थं शरसंधानमाचरन् २८ स यावत्सगुणं चापं कुरुते तावदुद्धतः रथभंगं चकारा-
स्य समरे प्रहसन्बली २९ भग्नरथस्य वीरस्य धनुश्छिन्नं महात्मना महावीरं मन्यमानः पदातिं प्राद्रवद्रणे ३० उभौ धनुर्ध-
रौ वीरावुभावपि शूरोद्धतौ उभौ क्षतपरिप्लुष्टौ छिन्नसन्नाहितावुभौ ३१ परस्परं बाणघातविशीर्णकवचांकितौ जयकांक्षां प्र-
कुर्वंतौ परस्परवधैषिणौ ३२ जयूतकार्तिकेयौ वा पुरारिः पुरभिद्यथा एवं परस्परं युद्धं प्रकुर्वाणौ रणांगणे ३३ पुष्कलः प्र-
त्युवाचाथ बालशूरशिरोमणे त्वादृशो नो मया दृष्टः कश्चिद्वीरशिरोमणिः ३४ शिरस्ते पातयाम्यद्य बाणैः शितसुपर्वभिः माप-
लायस्व समरे प्राणान्रक्षस्व संयतः ३५ एवमुक्त्वा लवं वीरश्चकार शरपंजरम् पुष्कलस्य शराभूमौ नभसि व्याप्य संस्थिताः ३६
शरपंजरमध्यस्थो लवः पुष्कलमब्रवीत् महत्कर्म कृतं वीर यन्मां बाणैरपीडयत् ३७ इत्युक्त्वा बाणसंघातं प्रच्छिद्य वचनं पुनः
जगाद पुष्कलं वीरः शरसंधानकोविदः ३८ पालयात्मानमाजिस्थं मच्छराघातपीडितः पतिष्यसि महीपृष्ठे रुधिरेण परिप्लुतः
३९ एवमुक्तं समाकर्ण्य पुष्कलः कोपसंयुतः रणे संयोधयामास लवं शूरविचक्षणम् ४० लवः प्रकुपितो बाणं तीक्ष्णं वैरिवि-
दारणम् जग्राह लवतः कोपादाशीविषमिव क्रुधा ४१ जाज्वल्यमानः सशरश्चापमुक्तो लवस्य च हृदयं भेत्तुमुद्युक्तश्छि-
न्नो भारतिनाशुगः ४२ छिन्ने भारतिना संख्ये शरे च प्राणहारिणि अत्यंतकुपितो घोरं शरमन्यं समाददे ४३ आकर्णकृष्टचा-
पेन समुक्तो निशितः शरः बिभेद हृदयं तस्य पुष्कलस्य महारणे ४४ भिन्नवक्षसि वीरेण सायकेनाशुगामिना पपात धरणीपृ-
ष्ठे महाशूरशिरोमणिः ४६ पतितं तं समालोक्य पुष्कलं पवनात्मजः गृहीत्वा राघवभ्रात्रे ददौ मूर्च्छासमन्वितम् ४७ मूर्च्छितं
तं समालोक्य शोकविह्वलमानसः हनूमंतं लवं हंतुं निर्दिदेश क्रुधान्वितः ४८ हनूमान्क्रोधसंप्लुष्टो लवं संख्ये महाबलम् विजे-
तुं तरसा प्रागाद्वृक्षमुद्यम्य शाल्मलीम् ४९ वृक्षेण हतवान्मूर्ध्नि लवस्य हनुमान्बली तमापतंतं तरसा चिच्छेद शतधा लवः ५०
छिन्ने नगे पुनः कोपाद्वृक्षानुत्पाट्य मूलतः ताडयामास हृदये मस्तके च महाबलः ५१ यान्यान्वृक्षान्समाहत्याताडयत्पवनात्मजः

तान्तान्चिच्छेदतरसाबलवान्शितपर्वभिः ५२ तदाशिलाःसमुत्पाद्यगंडशैलोपमाःकपिः पातयामासशिरसिक्षिप्रवेगेनमारुतिः
५२ सआहतःशिलाःसंख्येकोदंडंचसमुन्नयन् बाणैस्ताश्चूर्णयामासयंत्रिकाभिर्यथाकणाः ५४ तदात्यंतप्रकुपितोमारुतिः
पुच्छवेष्टनम् चकारसमरोपांतेलवस्यबलिनःकृती ५५ सपुच्छेनसमाबद्धोवीक्ष्यचांतर्हृदिस्मरन् मुष्टिनाताडयामासलांगुलंमा
रुतेर्बली ५६ तन्मुष्टिघातव्यथितोमारुतिस्तममुंचत सम्मुक्तःपुच्छतोयुद्धेशरान्मुंचन्नभूद्बली ५७ दुर्वारशरघातेनसंपीडित
तनुःकपिः बाणवर्षमन्यमानोदुःसहंसमरेबहु ५८ किंकर्तव्यमितोस्माभिःपलाय्ययदिगम्यते तदानुचितमेवस्यात्ताडयेद्बालको
त्तमः ५९ ब्रह्मदत्तवरत्वात्तुमूर्च्छांहिमरणंनहि दुःसहाबाणपीडात्रकिंकर्तव्यंमयाधुना ६० शत्रुघ्नःसमरेगताजयंप्राप्नोतु-
बालकात् अहंतावज्जयाकांक्षीशयेकपटमूर्च्छया ६१ इत्येवमानसेकृत्वापपातरणमंडले पश्यतांसर्ववीराणांकपटेनविमू-
र्च्छितः ६२ तंमूर्च्छितंसमाज्ञायहनूमंतमहाबलम् जघानसर्वान्नृपतीन्शरमोक्षविचक्षणः ६३ इतिश्रीपद्मपुराणेपाता-
लखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेएकषष्टितमोऽध्यायः ६१ शेषउवाच मूर्च्छितंमारुतिंश्रुत्वाशत्रुघ्नःशोकमाययौ किंक-
र्तव्यंमयासंख्येबालकोयंमहाबलः १ स्वयंरथेहेममयेतिष्ठन्वीरवरैःसह योद्धुंप्रागाल्लवोयत्रविचित्ररणकोविदः २ लवंशिशुं
तंदृष्ट्वाचरामंप्रासमिवक्षितौ धनुर्बाणकरंवीरान्क्षिपंतंरणमूर्धनि ३ विचारयामासतदाकोयंरामस्वरूपधृक् नीलोत्पलदलश्या
मंवपुर्बिभ्रन्मनोहरम् ४ एषवैदेहतनुजासुतोभवतिनान्यथा अस्मान्विजित्यसमरेदृश्यतेमृगराडिव ५ अस्माकंनोजयोभ्रा
व्यःशक्त्याविरहितात्मनाम् अशक्ताःकिंकरिष्यामःसमरेरणकोविदाः ६ इत्येवंसविचार्याथबालकंतुवचोब्रवीत् रणेकर्मप्रकर्तारंस्मर-
कोटिनियामकम् ७ कस्त्वंबालरणेस्माकंवीरान्पातयसिक्षितौ नजानीषेबलंराज्ञोरामस्यदनुजार्दिनः ८ कातेमातापिताकस्तेसु-
भाग्योयस्त्वमासवान् नामकिंविश्रुतंलोकेज्ञातुमिच्छेमहाबल ९ ममवाहःकथंबद्धःशिशुत्वात्तत्क्षमामिते आयाहिरामंवीक्ष्यस्वदा-
स्यतेबहुलंतव १० इत्युक्तोबालकोवीक्ष्यवचःशत्रुघ्नमावदत् किंतेनाम्नायपित्रावाकुलेनवयसातथा ११ युध्यस्वसमरेवीरचेद्बलं

नवनोभवेत् लवंवीरंनमस्कृत्यपादयोर्याहिनान्यथा १२ यद्यस्तितववीरत्वंभुवितद्वलिनांवर वाहंविमोचयबलाच्छक्तिस्तेविद्यतेयदि
१३ इत्युक्त्वाशरसंधानंकृत्वाप्राहरदुद्भटः हृदयेमस्तकेचैवभुजयोरणमंडले १४ तदाप्रकुपितोराजाधनुःसज्यमथाकरोत् नादयं-
न्मेघगंभीरंत्रासयन्निवबालकम् १५ बाणानपरिसंख्याकान्मुमोचबलिनांवरः लवोलवेनचिच्छेदसर्वांस्तान्सायकव्रजान् १६ ल-
वस्यानेकधामुक्तैर्बाणैर्व्याप्तंमहीतलम् व्यतीपातेप्रदत्तस्यदानस्येवाक्षयंगताः १७ तेबाणाव्योमसकलंव्याप्नुवंल्लवसंधिताः सूर्यमंड-
लमाच्छाद्यप्रवर्तंतेसमंततः १८ मारुतोनाविशद्यत्रबाणपंजरगोचरे मनुष्याणांतुकावार्तादीनानांक्षणजीविनाम् १९ तद्बाणा-
न्विसृतान्दृष्ट्वाशत्रुघ्नोविस्मयंगतः अच्छिनच्छतसाहस्रंबाणमोचनकोविदः २० तान्छिन्नान्सायकान्स्वीयान्दृष्ट्वासचकुशानुजः ध-
नुश्चिच्छेदतरसाशत्रुघ्नस्यमहीपतेः २१ सोन्यद्धनुरुपादाययावन्मुंचतिसायकान् तावद्भंजसरथंसायकैःशितपर्वभिः २२ कर-
स्थमच्छिनच्चापंसुदृढगुणपूरितम् तत्कर्मपूजयन्वीरारणमंडलवर्तिनः २३ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः अन्यंरथंसमा-
स्थायययौयोद्धुंलवबलात् २४ अनेकबाणनिर्भिन्नःस्रवद्रक्तकलेवरः पुष्पितःकिंशुकइवशुशुभेरणमध्यगः २५ शत्रुघ्नबाण-
प्रहतःपरंकोपमुपागमत् बाणसंधानचतुरःकुंडलीकृतचापवान् २६ विशीर्णकवचंदेहंशिरोमुकुटवर्जितम् स्रवद्रक्तपरिप्लुष्टंश-
त्रुघ्नस्यचकारसः २७ तदारामानुजःक्रुद्धोदशबाणान्शिताग्रकान् मुमोचप्राणसंहारकारकान्कुपितोभृशम् २८ तान्बाणान्तिल-
शःकृत्वाबाणैर्निशितपर्वभिः ताडयामासहृदयेशत्रुघ्नस्याष्टभिःशरैः २९ अत्यंतंबाणपीडार्तोलवस्यबलमद्भुतम् दुःसहंमन्यमान-
स्तंशरान्मुंचन्नभूत्तदा ३० तदालवेनतीक्ष्णेनहृदिभिन्नोविशालके अर्धचंद्रसमानेनतीक्ष्णपर्वसुशोभिना ३१ सुविद्धोहृदि-
बाणेनपीडांप्राप्तःसुदारुणाम् पपातस्यंदनोपस्थेधनुःपाणिःसुशोभितः ३२ शत्रुघ्नंमूर्छितंदृष्ट्वानृपाश्वसुरथादयः प्रजग्मुर्ल-
वमुद्युक्ताजयप्राप्त्यैरणेतदा ३३ सुरथोविमलोवीरोराजावीरमणिस्तथा सुमदोरिपुतापाद्याबभ्रमुश्चैवसंयुगे ३४ केचित्सु-
रंधैर्मुसलैःकेचिद्बाणैःसुदारुणैः प्रासैःपरशुभिःकेचित्सर्वतःप्राहरन्नृपाः ३५ तानधर्मेणसंयत्तान्दृष्ट्वावीरशिरोमणिः दशभिर्द

शभिर्बाणैस्ताडयामास संयुगे ३६ तेबाणवर्षविहतारणमध्येसुकोपनाः केचित्पलायिताःकेचिन्मुमुहुर्युद्धमंडले ३७ तावत्स
राजाशत्रुघ्नोमूर्च्छांसंत्यज्यसंगरे लवंप्रायान्महावीरंयोद्धुंबलसमन्वितः ३८ आगत्यतंलवंप्राहधन्योसिशिशुसन्निभः नबाल-
स्त्वंसुरःकश्चिच्छलितुमासमागतः ३९ केनापिनहिवीरेणपातितोरणमंडले त्वयाहंगमितोमूर्च्छांसमक्षंममपश्यतः ४० इदानींप-
श्यमेवीर्यंत्वासंख्येपातयाम्यहम् सहस्वबाणमेकंत्वमापलायस्वबालक ४१ इत्युक्त्वासमरेबालंशरमेकंसमाददे यमवक्त्रसमं
घोरंलवणोयेनघातितः ४२ संधायबाणंजाज्वल्यंहृदिभेत्तुमनोदधत् लववीरसहस्त्राणांवन्हिवत्सप्रदाहकम् ४३ तंबाणंप्र-
ज्वलंतंसंघातयंतंदिशोदश दृष्ट्वासस्मारबलिनंकुशंवैरिनिपातिनम् ४४ यद्यस्मिन्समयेवीरोभ्रातास्याद्बलवान्मम तदाशत्रुघ्नतो
नस्याद्भयममतदुल्बणम् ४५ एवंतर्कयतस्तस्यलवस्यचमहात्मनः हृदिलग्नोमहाबाणोघोरःकालनलप्रभः ४६ मूर्छांप्राप-
तदावीरोभूपसायकसंहतः संगमेसर्ववीराणांशिरोभिःसमलंकृते ४७ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामा
श्वमेधशत्रुघ्नमूर्छानामद्विषष्टितमोऽध्यायः ६२ शेषउवाच लवंविमूर्च्छितंदृष्ट्वाबलिवैरिविदारणम् शत्रुघ्नोजयमापेदेरण
मूर्ध्निमहाबलः १ लवबालंरथेस्थाप्यशिरस्त्राणाद्यलंकृतम् रामप्रतिनिधिंपूर्त्वाततोगंतुमियेषसः २ स्वमित्रंशत्रुणाग्रस्तमतिदुःख
समन्विताः बालमावेस्यसीतायैत्वरिताःसन्यवेदयन् ३ बालाऊचुः मातर्जानकितेपुत्रोबलाद्ग्राहमपाहरत् कस्यचिद्भूपवर्यस्यब-
लयुक्तस्यमानिनः ४ ततोयुद्धमभूद्घोरंतस्यसैन्येनजानकि तदावीरेणपुत्रेणतवसर्वंनिपातितम् ५ पश्चादपिजयंप्रासःसु
तस्तवमनोहरः तंभूपंमूर्च्छितंकृत्वाजययापरणांगणे ६ ततोमूर्च्छांविहायैषराजापरमदारुणः संकुप्यपातयामासतवपुत्रंरणांग
णे ७ अस्माभिर्वारितःपूर्वंमागृहाणहयोत्तमम् अस्मान्सर्वाश्चधिःकृत्यब्राह्मणान्वेदपारगान् ८ इतिवाक्यंशिशूनांसासमा
कर्ण्यसुदारुणम् पपातभूतलेपस्येदुःखसुक्ताकुरोदह ९ सीतोवाच कथंनृपोदयाहीनोबालेनसहयुंक्ष्यति अधर्मकृत्सुदुर्बु-
द्धिर्योमद्बालंन्यपातयत् १० लववीरभवान्कुत्रवर्ततेतिबलान्वितः कथंत्वंनिष्कृपस्याहोराज्ञोहार्षीद्धयोत्तमम् ११ त्वंबाल-

रा०मे०
८४

अ०
६३

स्तेदुराक्रांताः सर्वशास्त्रविशारदाः रथस्थाविरथस्त्वंवैकथंयुद्धंसमंभवेत् १२ तातनाहंत्वयासार्द्धंरामत्यागासुखंजहौ इदानींर
हितायुष्मन् कथंजीवामिकानने १३ एहिमामुंचपञ्चात्वंगच्छत्वंमहीपतिः मद्दुःखंनाभिजानासिममदुःखप्रमार्जकः १४ कु
शोयद्यभविष्यत्संरणेवीरशिरोमणिः प्रमोचयिष्यदधुनाभवंतंभूपपार्श्वतः १५ नास्तिमेदैवयोगेनसमीपेकिंकरोम्यतः दैवमेवमप्राप्य
त्रकारणंदुःखसंभवे १६ एवमादिबहुश्रीमत्सेषावैविललापह पादांगुष्ठेनालिखंतीभूमींनेत्रजलाप्लुता १७ बालान्प्रतिजगादासौ
पृथुकाःसचभूपतिः कथंमत्सुतमापात्संरणेकुत्रगमिष्यति १८ इतिवाक्यंवदत्स्वेषाजानकीपतिदेवता तावत्कुशस्तुसंप्राप्तउज्जयि
न्यांमहर्षिभिः १९ माघासितचतुर्दश्यांमहाकालंसमर्च्यच प्राप्यभूरिवरांस्तस्मादागमन्मातृसन्निधौ २० जानकींविह्वलांदृष्ट्वानेत्रो
द्भूतास्रविक्लवान् शोकविह्वलदीनांगींबभाषेयावदुत्सुकः २१ तदातद्बाहुरवदस्फुरन्युद्धाभिशंसनः हृदयेचरणोत्साहोबभूवातिर-
थस्यहि २२ सप्रस्तुवानसुखितांदीनगद्गदभाषिणीम् कुशोदुःखमितःसद्योदुःखितांधीरमानसः २३ मातस्तवकथंदुःखमयि
पुत्रउपस्थिते मयिजीवतितेनेत्रादश्रूणिभुविनोपतन् २४ ममभ्रातालवःकुत्रवर्ततेवैरिमर्दनः नतदामागतंज्ञात्वाप्रहर्षन्सन्निधा
वियात् २५ नदृश्यतेकथंवीरःकुत्ररंतुंगतोबली केनवासहबालत्वाद्गतोमांवैनिरीक्षितुम् २६ किंनुरोदसिमेमातर्लवःकुत्रसवर्त-
ते तन्मेकथयसर्वंतत्तवदुःखस्यकारणम् २७ तच्छ्रुत्वापुत्रवाक्यंसादुःखिताकुशमब्रवीत् लवोधृतोनृपेणात्रकेनचिद्धयरक्षिणा
२८ बबंधबालकोमेत्रहयंयागक्रियोचितम् तद्रक्षकान्बहून्जिग्येएकएवरिपून्बली २९ राजानंमूर्च्छितंकृत्वाबबंधरणमूर्धनि
बालकाइतिमाम्बूचुःसंहृगंतारएवहि ३० ततोहंदुःखिताजातानिशम्यलवमाधृतम् तंमोचयबलात्तस्मात्कालेप्राप्तोनृपोत्तमात् ३१
निशम्यमातुर्वचनंकुशःकोपसमन्वितः जगादतांदशन्नोष्ठंदंतैर्दंतान्विनिष्पिषन् ३२ कुशउवाच मातर्जानीहितंमुक्तंलवंपाशस्यबंध
नात् इदानींहन्मितंबाणैःसमग्रबलवाहनम् ३३ यदिदेवोमरोवापियदिशर्वःसमागतः तथापिमोचयेतस्माद्बाणैर्निशितपर्वभिः
३४ मारोदिषीर्मातरिहवीराणांरणमूर्च्छितम् कीर्तयेत्रभवत्स्येवपलायनमकीर्तये ३५ देहिमेकवचंदिव्यंधनुर्गुणसमन्वितम् शिर

८४

स्त्राणंचमेमातः करवालंतयासितम् ३६ इदानींयामिसमरेपातयामिबलंमहत् मोचयामिभ्रातरंस्वंरणमध्याद्विमूर्च्छितम् ३७
नमोचयाम्यद्यपुत्रंतवमातर्महारणात् तदातोमेभवत्पादौसंस्पृष्टौभवतांक्षितौ ३८ शेषउवाच इतिवाक्येनसंतुष्टाजानकीशुभल-
क्षणा सर्वप्रादादस्त्रवृंदंजयाशीर्भिर्नियुज्यतम् ३९ प्रयाहिपुत्रसंग्रामंलवंमोचयमूर्च्छितम् ४० इत्याज्ञप्तःकुशःसंरब्धःकव
चीकुंडलीबली मुकुटीकरवालीचचर्मधारीधनुर्धरः ४१ अक्षय्यौविषुधीकृत्वास्कंधयोःसिंहवीर्यवान् जगाममतरसानत्वामातृपा
दौरयाग्रणीः ४२ वेगेनयावद्युद्धायगच्छतिक्षिप्रमाहवे तावद्ददर्शसलववैरिवृंदनिपातकम् ४३ आयांतंतंकुशंवीरादद्द-
शुःसुमहाभटाः कृतांतमिवसंहर्तुंसर्वविश्वमुपस्थितम् ४४ लवोमहाबलंदृष्ट्वाकुशंभ्रातरमागतम् अत्यंतंवन्हिवद्युद्धेदि
दीपवायुनासमम् ४५ रथादुन्मुच्यचात्मानयुद्धायसविनिर्गतः कुशःसर्वान्रणस्थान्वैवीरान्पूर्वदिशिक्षिपत् पश्चिमस्यां
दिशिलवःकोपात्सर्वान्समीरयत् ४६ कुशबाणव्यथाव्याप्तालवसायकपीडिताः सैन्येजनाःसुनसर्वेउत्कल्लोलांबुधिभ्रमाः
४७ कुशेनचलवेनाथशरव्रातैःप्रपीडितम् नशर्मलेभेसकलंसैन्यंवीरप्रपूरितम् ४८ इतस्ततःप्रभग्नंतुद्दलंसत्त्वंपुनःपुनः
नकुत्रचिद्रणेस्थित्वायुद्धमैच्छद्दलान्वितम् ४९ एतस्मिन्समयेराजाशत्रुघ्नःपरतापनः कुशंवीरंययौयोद्धुंददर्शलवसन्नि
भम् ५० कुशंदृष्ट्वाबालाकांतोराममूर्तिसमप्रभम् रथेतिष्ठन्हेममयेजगामपुरवीरहा ५१ शत्रुघ्नउवाच कोसित्वंसन्निभोभ्रात्राल
वेनसुमहाबलः किंनामासिमहावीरकुत्रतेतातश्चकाप्रसूः ५२ कथंवनेद्विजैर्जुष्टेतिष्ठसित्वंनरर्षभः सर्वंशंसयथायुद्धंत्वयासहमहाब
ल ५३ इतिवाक्यंसमाकर्ण्यकुशःप्रोवाचभूमिपम् मेघगंभीरयावाचानादयन्रणमंडलम् ५४ केवलंसुषुवेसीतापतिव्रतपराय-
णा वनेवसावोवाल्मीकेश्चरणार्चनतत्परौ ५५ मातृसेवासमुद्युक्तौसर्वविद्याविशारदौ कुशोलवइतिप्रख्यामागतौभूपतेनघ
५६ कस्त्वंवीरवरश्लाघिन्किमर्थंहयसत्तमः मुक्तोसिसमरेत्वद्यजेतासिबलसंयुतः ५७ युद्धस्वत्वंमयासार्धंयदिवीरोसिभू
मिप इदानींपातयिष्यामिभवंतंरणमूर्धनि ५८ शत्रुघ्नस्तंसुतंज्ञात्वासीतायारामसंभवम् विसिस्मायस्वयंचित्तेकोपाद्धनुरुपाद

दे ५९ तमात्तधनुषं दृष्ट्वा कुशः कोपसमन्वितः विस्फारयामासधनुः स्वीयं सुदृढमुत्तमम् ६० मुमोचबाणान्निशितान्शत्रुघ्नः सर्व-
शास्त्रवित् तांश्चिच्छेदकुशः सर्वान्लीलयाप्रहसन्रणे ६१ बाणाश्चशतसाहस्राः कुशस्यचनृपस्यच भुवनंव्याप्नुवत्सर्वंतच्चित्रमभ
वन्मुने ६२ अग्न्यास्त्रेणकुशः सर्वान्ददाहतरसाबली शमयामासतंभूपः पर्जन्यास्त्रेणवीर्यवान् ६३ शमयामासतंवह्निंवायव्ये-
नातिविक्रमः पर्वतास्त्रेणतंवायुंक्षोक्षयंतंसमावृणोत् वज्रास्त्रेणनृपः सर्वंचिच्छेदसनगोपलान् तदानारायणास्त्रंसमुमोचकुश
उद्धतः नारायणंतदाभूपंनाशकत्परिबाधितुम् ६५ तदाप्रकुपितोत्यंतंकुशः कोपपरायणः उवाचभूपंशत्रुघ्नंमहाबलपराक्रमम् ६६ जा
नामित्वांमहावीरंसंग्रामेजयकारिणम् यत्त्वंनारायणास्त्रंमेनबबाधेभयानकम् ६७ इदानींपातयाम्यद्यभूमौत्वांनृपतेशरैः त्रिभि
श्चेन्नकरोम्येतत्प्रतिज्ञांतर्हिमेशृणु ६८ योमनुष्यवपुः प्राप्यदुर्लभंपुण्यकोटिभिः तन्नाद्रियेनसंमोहात्तस्यमेस्त्वस्त्वपातकम् ६९
सावधानोभवानत्रभवतुप्रधनांगणे पातयामिक्षितौसद्यइत्युक्त्वास्वशरासने ७० शरंसंरोपयामासघोरंकालानलप्रभम् लक्ष्मीकृत्यरि
पोर्वक्षोविपुलंकठिनंमहत् ७१ तंसंधितंशरंदृष्ट्वाशत्रुघ्नः कोपमूर्च्छितः मुमोचबाणान्निशितान्कुशलग्भेदकारकान् ७२ सबा-
णोहृदयंतस्यभेत्तुंतत्पृच्चचालवै घोररूपोवह्निसमआशीविषवदुच्छ्वसन् ७३ सबाणोनृपवर्येणरामंस्मृत्वाधनुष्मता संछिन्नः कुश-
निर्मुक्तः सायकः सितपर्वकः ७४ तदात्यंतंप्रकुपितः कुशोबाणस्यकृंतनात् अपरंसायकंचापेदधारशितपर्वकम् ७५ सयावत्त-
दुरोभेत्तुंप्रयातिचबलोद्धतः तंतावदच्छिनत्तस्यशरंकालानलप्रभम् ७६ तदाकुशोमातृपादौस्मृत्वारोषसमन्वितः तृतीयंसायकंस्वीयेद
धारपरमाद्भुतम् ७७ शत्रुघ्नस्तमपिक्षिप्रंछेत्तुंबाणंसमाददे तावच्छिन्नः शरेणासौपपातधरणीतले ७८ हाहाकारोमहानासीच्छत्रु
घ्नेविनिपातिते जयमापकुशस्तत्रस्वबाहुबलदर्पितः ७९ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेत्रिषष्टित
मोऽध्यायः ६३ शेषउवाच शत्रुघ्नंपतितंवीक्ष्यसुरथः प्रवरोनृपः प्रययौमणिनासृष्टेरथेतिष्ठन्महाद्भुते १ पुष्कलस्तुरणेपूर्वंपा
तितः सविचारयन् लवंययौतदायोद्धुंमहावीरबलान्वितम् २ सुरथः कुशमासाद्यबाणान्मुंचन्ननेकधा व्यथयामाससमरेमहावीरशि

रोमणिः ३ सुरथंविरथंचक्रे बाणैर्दशभिरुच्छ्रितैः धनुश्चिच्छेद तरसासुदृढंगुणपूरितम् ४ अस्त्रप्रत्यस्त्रसंहारैः दोर्पणैः प्रतिक्षेप
णैः अभवत्तुमुलंयुद्धंवीराणांरोमहर्षणम् ५ अत्यंतंसमरोद्युक्तेसुरथेदुर्जयेनृपे कुशःसंचिंतयामासकिंकर्तव्यंरणेमया ६
विचार्यनिशितंघोरंसायकंसमुपाददे हननायनृपस्यास्यमहाबलसमन्वितः ७ तमागतंशरंदृष्ट्वाकालानलसमप्रभम् छेत्तुंमतिं
चकाराशुतावल्लघ्नोरणेशरः ८ मुमूर्च्छसमरेवीरोमहावीरबलस्ततः पपातस्यंदनोपस्थेसारथिस्तमुपाहरत् ९ सुरथंपतितंदृष्ट्वाकु
शंजयसमन्वितम् त्रासयंतंवीरगणान्नियायपवनात्मजः १० समीरसूनुंप्रबलमायांतंवीक्ष्यवानरम् जहासदर्शयन्दंतान्कोपयन्नि
वतंकुधा ११ उवाचचहनूमंतंमेहित्वंममसंमुखम् भेत्स्येबाणसहस्रेणमृतोयाम्यांप्रयास्यसि १२ इत्युक्तोहनुमान्ज्ञात्वारामसू
नुंमहाबलम् स्वामिकार्यंप्रकर्तव्यमितिकृत्वान्वयावत १३ शालमुत्पाट्यतरसाविशालंशतशाखिनम् कुशंप्रतिसमादाययययोयो-
द्धुंमहाबलः १४ शालहस्तंसमायांतंहनूमंतंमहाबलम् त्रिभिःक्षुरप्रैर्विव्याधहृदिचंद्रोपमैर्बली १५ सबाणविद्धस्तरसाकुशेनब
लेशालिना शालेनहृदिसंजघ्नेदंतान्निष्पिष्यमारुतिः १६ शालहतस्तदाबालःकिंचिन्नाकंपतस्मयात् तदावीराःप्रशंसांतुप्रचक्रुस्त
स्यबाल्यतः १७ सशालेनहतोवीरःसंहारास्त्रंसमाददे संहर्तुंवैरिणंकोपात्कुशःसपरमास्त्रवित् १८ संहारास्त्रंसमादायदुर्जयंकुशमो
चितम् दध्यौरामंस्वमनसाभक्तविघ्नविनाशकम् १९ तदामुक्तंकुशेनाशुतदस्त्रंहृदिमारुतेः लग्नंमहाव्ययाकरितेनमूर्च्छामितःपु
नः २० मूर्च्छांप्राप्तंतुतंदृष्ट्वाप्लवंगबलसंयुतः विव्याधसायकैस्तीक्ष्णैःसैन्यंतत्सकलंमहत् २१ तस्यबाणायुतैर्भग्नंबलंसर्व
रणांगणे पलायनपरंजातंचतुरंगबलंमहत् २२ तदाकपिपतिःकोपात्सुग्रीवोरक्षकोमहान् अभ्यधावन्नगानेकानुत्पाट्यकुशंसुदृढम्
२३ कुशःसर्वान्प्रचिच्छेदलीलयाप्रहसन्नगान् पुनरप्यागतान्वृक्षांश्चिच्छेदतरसाबली २४ अनेकबाणव्यथितःसुग्रीवःसमरांगणे
जग्राहपर्वतंघोरंकुशमभ्यपतद्द्रुतम् २५ कुशस्तंनगमायांतंवीक्ष्यबाणैरनेकधा पिपेषचचकाराशुमहारुद्रांगयोग्यताम् २६ सुग्री
वस्तन्महत्कर्मदृष्ट्वाबाणेननिर्मितम् जयाशांप्रतिनिर्वृत्तोबभूवसमरांगणे २७ रणमध्येदुराक्रांतंकुशंलांगूलताडकम् अत्समर्षीरुषा

क्रांतस्तं हंतुं नगमाददे २८ अस्मान्हंतुमुद्युक्तं वीक्ष्य सुग्रीवमाद्दशात् ताडयामास बहुभिः सायकैः सितपर्वभिः २९ स ताडितो ब
हुविधैः शरैः पीडासमन्वितः कुशं हंतुं समारब्धो यायौ शालसमाददन् ३० तदातिकुपितो वीरो वारुणास्त्रं समाददे बबंध तं च पाशेन
दृढेन सलवाग्रजः ३१ स बद्धः पाशकैः स्निग्धैः कुशेन बलशालिना पपात रणमध्ये वै महावीरैरलंकृते ३२ सुग्रीवं पतितं दृष्ट्वा
वीराः सर्वत्र दुद्रुवुः जयमाप लवभ्राता महावीरशिरोमणिः ३३ तावल्लवो भटाञ्जित्वा पुष्कलं चांगदं तथा प्रतापाग्र्यं वीरमणिं
तथान्यान्नृपभूभुजः ३४ जयं प्राप्य रणे वीरो लवो भ्रातरमागमत् संग्रामजयकर्तारं वैरिकोटिनिपातकम् ३५ परस्परं प्रहृष्टौ
तौ परिरंभं प्रकुर्वतौ जयं प्राप्तौ तदा वार्तां मुनेश्च क्रतुरुन्मुदौ ३६ लव उवाच भ्रातस्त्वत्प्रसादेन निस्तीर्णौ रणतो युधि इदानीं
वीरसुरणशोध्याव सुशोभितः ३७ इत्युक्त्वा त्वरितं वीरौ जग्मतुस्तौ कुशीलवौ राज्ञो मौलिमणिं चित्रं जग्राह कनकाचितम् ३८
पुष्कलस्य लवो वीरो जग्राह मुकुटं शुभम् अंगदं च महानर्घ्यं शत्रुघ्नस्यापरस्य च ३९ गृहीत्वा शस्त्रसंघातं हनुमंतं कपीश्वरम् सु
ग्रीवं स विधिगत्वा उभावपि बबंधतुः ४० पुच्छं वायुसुतस्यायं गृहीत्वा तु कुशानुजः भ्रातरं प्रत्युवाचेदं नेष्यामि स्वीयमंदिरम् ४१
आवयोर्जननी प्रीत्यै गृहीत्वा पुच्छके त्वहम् क्रीडार्थं मुनिपुत्राणां कौतुकार्थं ममैव च ४२ एतच्छ्रुत्वा ततो वाक्यमुवाच च कुशो लव-
म् अहमेनं गृहीष्यामि वानरं बलिनं दृढम् ४३ इत्येवं भाषमाणौ तौ बध्वा तौ बलिनां वरौ पुच्छयोर्बलिनौ धृत्वा जग्मतुः स्वाश्र-
मं प्रति ४४ स्वाश्रमाय प्रगच्छंतौ वीक्ष्य तौ कपिसत्तमौ कंपमानौ जगदतुरन्योन्यं भीतया गिरा ४५ हनूमान्कपिराजानं प्रत्युवाच भ-
यात्सुधीः एतौ रामसुतावस्मान्नेष्यतः स्वाश्रमं प्रति ४६ मया पूर्वं कृतं कर्म जानकीं प्रति गच्छता तत्र मे जानकी देवी संसुखा भू-
न्मनोहरा ४७ सा मां द्रक्ष्यति वैदेही बद्धं पाशेन वैरिणा तदा हसिष्यति वरा त्रपा मे प्रभविष्यति ४८ मया किमत्र कर्तव्यं प्राणत्यागो
भविष्यति महद्दुःखं च पतितं कथं शं मे भविष्यति ४९ सुग्रीवस्तद्वचः श्रुत्वा ममाप्येवं महाकपे नेष्यतेयदि मामेवं निधनं तु भवि
ष्यति ५० एवं कथयतोरेवं त्वन्योन्यं भयभीतयोः कुशीलवश्च भवनं मातुः प्रापतुरोजसा ५१ तावायातौ समीक्ष्यैव जहर्ष जन

नीतयोः अन्योन्यंपरमप्रीत्यापरिरेभेनिजौसुतौ ५२ ताभ्यांपुच्छागृहीतौतौवानरौवीक्ष्यजानकी हनूमंतंचसुग्रीवंसर्ववीरंकपीश्व-
रम् ५३ जहासपाशबद्धौतौवीक्ष्यमाणावरांगना उवाचचविमोक्षार्थंवदंतीवचनंवरम् ५४ पुत्रौप्रमुंचतांकीशौमहावीरौम-
हाबलौ ईक्षंतौमांयदिस्फीतौप्राणत्यागंकरिष्यतः ५५ अयंवैहनुमान्वीरोयोददाहदनोःपुरीम् अयमप्यृक्षराजोहिसर्ववान-
रयूथपः ५६ किमर्थंविधृतौकुत्रकिंवापकृतमादरात् पृच्छेयुवाभ्यांविधृतौसमहान्विस्मयोस्तिमे ५७ इतिमातुर्वचःश्लक्ष्णंश्रु-
ण्वतौपुत्रकौतदा ऊचतुर्विनयश्रेष्ठौमहाबलसमन्वितौ ५८ मातःकञ्चनभूपालोरामोदाशरथिर्बली तेनमुक्तोहयःस्वर्णभालप-
त्रःसुशोभितः ५९ तत्रैवलिखितंमातरेकवीराप्रसूर्मम येक्षत्रियास्तेगृण्हंतुनोचेत्पादतलार्चकाः ६० तदामयाविचारोवैकृतः
स्वांतेपतिव्रते भवतीक्षत्रियांकिंनवीरसूःकिंनवाभवेत् ६१ धार्ष्ट्यंतद्वीक्ष्यभूपस्यगृहीतोश्वोमयाबलात् जितंकुशेनवीरेणसैन्यं
तत्पातितंरणे ६२ स्वकुटोयंभूमिपतेर्जानीहिपतिदेवते अयमप्यन्यवीरस्यपुष्कलस्यमहात्मनः ६३ जानीहिमुकुटंत्वन्यंम-
णिमुक्ताविराजितम् अश्वोयंमेमनोहारीकामयानोस्यभूपतेः ६४ आरोहणायमद्भ्रातुर्जानीहिसुमनोहरः इमौकीशौमयारं-
तुमानीतौबलिनावरौ ६५ कौतुकार्थंतवैवैतौसंग्रामेयुद्धकारकौ इतिवाक्यंसमाकर्ण्यजानकीपतिदेवता ६६ जगादपु-
त्रौतौवीरौमोचयेतांपुनःपुनः सीतोवाच युवाभ्यांमनयःसृष्टाहृतोरामहयोवरः ६७ अनेकेपातितावीराइमौबद्धौकपीश्वरौ
पितुर्वांसुहयोवीरौयागार्थंमोचितोमुना ६८ तस्यापहृतवंतौकिंवाजिनंमखसत्तमम् मुंचतंप्लवगावेतौमुंचतंवाजिनांवरम् ६९
क्षम्यतांभूपतेर्भ्राताशत्रुघ्नःपरकोपनः जनन्यास्तद्वचःश्रुत्वामुचतुस्तौबलान्वितौ ७० क्षात्रधर्मेणतद्भूपंजितवंतौबलान्वितम्
नास्माकमनयोभावित्क्षात्रधर्मेणयुध्यताम् ७१ वाल्मीकिनापुराप्रोक्तमस्माकंपठतांपुरः दुष्यंतेनसमंयुद्धंभरतेनकृतंपुरा ७२
कण्वस्याश्रमकेवाहंधृत्वायागक्रियोचितम् तस्मात्सुतःस्वपित्राचयुद्धोद्धातापितृव्यानुजः ७३ गुरुणाचापिशिष्येणतस्मान्नोपाप
संभवः तदाज्ञातोधुनाचावांदास्यावोहयमुत्तमम् ७४ मोक्ष्यावःकीशावेतौतौकरिष्यावोवचस्तव इत्युक्त्वामातरंवीरौगतौ-

संग्राममूर्धनि ७५ अमुंचतांहयंनापिहयमेधक्रियोचितम् सीतादेवीस्वपुत्राभ्यांश्रुत्वासैन्यंनिपातितम् ७६ श्रीराममनसाध्यात्वा
भानुमेक्षतसाक्षिणम् यद्यहंमनसावाचाकर्मणारघुनायकम् ७७ भजामिनान्यंमनसातर्हिजीवेदयंनृपः सैन्यंचापिमहत्सर्वय-
न्नाशितमिदंबलात् ७८ पुत्राभ्यांतच्चजीवेतमत्सत्याज्जगतांपते इतियावद्वचोब्रूतेजानकीपतिदेवता ७९ तावद्बलंचतत्स
र्वमुत्थितंरणमूर्द्धनि ८० इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेचतुःषष्टितमोऽध्यायः ६४ शेषउ
वाच क्षणान्मूर्च्छांजहौवीरः शत्रुघ्नःसमरांगणे अन्येपिवीराबलिनोमूर्च्छांप्राप्ताःसजीविताः १ शत्रुघ्नोवाजिनंश्रेष्ठंददर्शपु
रतःस्थितम् आत्मानंचशिरस्त्राणरहितंसैन्यजीवितम् २ वीक्ष्यचित्रमिदंस्वांतेचकारचजगादह सुमतिंमंत्रिणांश्रेष्ठंमूर्च्छाविरहि
तंतदा ३ कृपांकृत्वाहयंप्रादाद्बालोयज्ञस्यपूर्तये गच्छामरामंतरसाहयागमनकांक्षिणम् ४ इत्युक्त्वासरथेस्थित्वाहयमादायवेग
तः ययौतदाश्रमाद्दूरंभेरीशरवविवर्जितः ५ तत्पृष्ठतोमहासैन्यंचतुरंगसमन्वितम् चचालकुर्वन्संभग्नंस्वभारेणफणीश्वरम् ६
जवेनजान्हवींतीर्त्वाकल्लोलजलशालिनीम् जगामविषयेस्वीयेस्वकीयजनशोभिते ७ पुष्कलेनयुतोराजासुरथेनसमन्वितः रथेम
णिमयेतिष्ठन्हस्तेकोदंडधारकः ८ हयंतंपुरतःकृत्वारत्नमालाविभूषितम् श्वेतातपत्रंतस्यैवमूर्ध्निचामरभूषितम् ९ अनेकरथ
साहस्रैःपरीतोबलिभिर्नृपैः उद्यत्कोदंडललितैर्वीरनादविभूषितैः १० क्रमेणनगरींप्राप्यसूर्यवंशजभूषिताम् अनेकैःकेतुभिः
श्रेष्ठैर्भूषितांदुर्गराजिताम् ११ रामःश्रुत्वाहयंप्राप्तंशत्रुघ्नेनसहामुना पुष्कलेनचवीरेणययौहर्षमनेकधा १२ कटकंनिर्दिदेशा-
सौचतुरंगमहाबलः लक्ष्मणंप्रेषयामासभ्रातरंबलिनांवरम् १३ लक्ष्मणःसैन्यसहितोगत्वाभ्रातरमागतम् परिरेभेमुदाक्रांतः
क्षतशोभितगात्रकम् १४ सर्वत्रकुशलंपृष्ट्वावार्ताचात्रचकारसः परमंहर्षमापन्नःशत्रुघ्नःसंगतोमुदा १५ सौमित्रिःस्वरथे-
स्थित्वाभ्रात्रासहमहामतिः सैन्येनमहतावीरोययौस्वनगरंप्रति १६ सरयूःपुण्यसलिलापवित्रितजगत्त्रया रामपादरजःपूता
शरच्चंद्रसमप्रभा १७ हंसकारंडवाकीर्णाचक्रवाकोपशोभिता विचित्रतरवर्णैश्चपक्षिभिर्नादिताभृशम् १८ मंडपास्तत्र-

बहुशोरामचंद्रेणकारिताः ब्राह्मणानांवेदविदांपृथक्पाठनिनादकाः १९ क्षत्रियास्तत्रबहवोधनुःपाणिसुशोभिताः ज्याटंका
रेणबहुनानादयंतोमहीतलम् २० भुंजंतेब्राह्मणायत्रविचित्रान्नैर्मनोहरैः परस्परंप्रपश्यंतोवार्तांचक्रुर्मनोहराम् २१ पा
यसान्नानिशुभ्राणिचंद्रकांतिसमानिच क्षीराणिमधुयुक्तानिशर्करामिश्रितानिच २२ अपूपास्तत्रबहुलाश्चंद्रबिंबसमाःश्रिया
कर्पूरादिसुगंधेनवासिताःसुमनोहराः २३ फेनिकावटकाःस्निग्धाशतच्छिद्राविरंध्रकाः शष्कुल्योमंडकामृष्टामधुरान्नसमन्वि-
ताः २४ भक्तंकुमुदसंकाशंमुद्गदालिविमिश्रितम् सुगंधेनसमायुक्तमत्यंतंप्रीतिदायकम् २५ ओदनोदधिनायुक्तोभीमपा-
कसमन्वितः स्वादुपाककरैःसृष्टःपात्रेमुक्तःप्रवेशकैः २६ तत्रकेचिद्विजाःपात्रेनिक्षिप्तंवीक्ष्यपायसम् परस्परंतेप्रत्यूचुःकिमि-
दंदृश्यतेद्भुतम् २७ किंचंद्रबिंबंनभसःपतितंतमसोभयात् अमृतंतुभवेत्येतन्मृत्युनाशकमद्भुतम् २८ तच्छ्रुत्वारोषताम्रा
क्षःप्रोवाचान्योद्विजोत्तमः नभवत्येवचंद्रस्यबिंबंत्वमृतविप्लुतम् २९ एकमिंदोर्वपुस्त्वेतद्दृश्यतेसदृशंकथम् ब्राह्मणानास
हस्रस्यपात्रेपात्रेपृथक्पृथक् ३० ततोजानीहिकुमुदकर्पूरंवाभविष्यति माजानीहिमृगांकस्यबिंबंशुभ्रश्रियान्वितम् ३१
तावदन्योरुषाक्रांतोधुन्वन्स्वमस्तकंतथा नजानंतिद्विजामूढाःस्वादुज्ञानविचक्षणाः ३२ इदंतुक्षीरकंदस्यरसेनपरिपाचित
म् जानीहिशतपत्रोत्थपुष्पाणिमधुराणिच ३३ एवंपरस्परंविप्राःकंदमूलफलाशिनः तर्कयंतिमुनेभीतारसज्ञानेतिलोलुपाः
३४ तावदन्योद्विजःप्राहक्षत्रियाणांवरंजनुः भोक्ष्यतेतादृशंत्वन्नंमहत्पुण्यैरुपस्कृतम् ३५ तदातंचाब्रवीद्विप्रोदानस्यफ
लमीदृशम् येददत्यग्रजन्मभ्यःप्राप्नुवंतितदीप्सितम् ३६ यैरर्चितोनवहरिर्नैवेद्यैर्विविधैर्मुहुः तेषामेतादृशंभोज्यंनभवे
द्दृक्षिगोचरम् ३७ यैर्नरैर्नाग्रजन्मानोभोजिताविविधैरसैः भुंजंतेतेस्वादुरसंकथंपापाःक्षुधार्दिताः ३८ एवंचातिरसैर्मिष्टै
र्भोजिताद्विजसत्तमाः मंडपेविपठंतस्तेशब्दब्रह्मविचक्षणाः ३९ नृत्यंत्येकेहसंत्येकेददत्येकेप्रहर्षिताः उत्सवश्चमहा
नासीच्छत्रुघ्नश्चागमत्तदा ४० रामःशत्रुघ्नमायातंपुष्कलेनसमन्वितम् निरीक्ष्यमुदमुद्भूतांरक्षितुंनाशकत्तदा ४१ याव-

दुत्तिष्ठते रामो भ्रातरं परिरंभितुम् तावद्रामपदे लग्नः शत्रुघ्नो भ्रातृवत्सलः ४२ पादयोः पतितं वीक्ष्य भ्रातरं विनयान्वितम्
परिरेभे दृढं प्रीतः क्षतसंशोभितांगकम् ४३ अश्रूणि बहुधा मुंचन्हर्षोच्छ्रिरसि राघवः सोत्यंतमुद्भमापन्नः स्नेहप्रसरसंप्लुतः
४४ पुष्कलस्त्वीयपदयोर्नम्रं विनयविह्वलम् सुहृदं भुजयोर्मध्ये विनीयापीड्यमद्भुतम् ४५ हनूमंतं तथा वीरं सुग्रीवं चांगदं
तथा लक्ष्मीनिधिं जनकजं प्रतापाग्र्यं रिपुंजयम् ४६ सुबाहुं सुमदं वीरं विमलं नीलरत्नकम् सत्यवंतं वीरमणिं सुरथं रा-
मसेवकम् ४७ अन्यानपि महाभागान् रघुनाथः स्वयं तदा परिरेभे दृढं स्निग्धान् पादयोः प्रणतान्नृपान् ४८ सुमतिं श्रीर-
घुपतिभक्तानुग्रहकारकम् परिरभ्य दृढं प्रीतः संमुखे तिष्ठदुन्नतः ४९ तदा रामो निजामात्यं वीक्ष्य सान्निध्यमागतम् उवा-
च परमप्रीत्या मंत्रिणं वदतां वरः ५० सुमते मंत्रिणां श्रेष्ठ शंस मे वाग्मिनां वर क एते भूमिपाः सर्वे कथमत्र समागताः ५१ कुत्र
कुत्र हयः प्राप्तः केन केन नियंत्रितः कथं वै मोचितो भ्रात्रा महाबलसुशालिना ५२ शेष उवाच इत्युक्तो मंत्रिणां श्रेष्ठः सुमतिः श्री-
हराघवम् प्रहसन्मेघगंभीरनादेन च सुबुद्धिमान् ५३ सुमतिरुवाच सर्वज्ञस्य पुरस्ते द्य मया कथमुदीर्यते पृच्छसि त्वं
लोकरीत्या सर्वं जानासि सर्वदृक् ५४ तथापि तव निर्देशं शिरस्याधाय सर्वदा ब्रवीमि तच्छृणुष्वाद्य सर्वराजशिरोमणे ५५
त्वत्प्रसादादहो स्वामिन् सर्वत्र जगतीतले परिबभ्राम ते वाहो भालपत्रे सुशोभितः ५६ न कश्चित्तं निजग्राह स्वनामबलदर्पि-
तः स्वं स्वं राज्यं समर्प्याथ प्रणेमुस्ते पदांबुजम् ५७ कोवा रावणदैत्येंद्रनिहंतुर्वाजिसत्तमम् गृण्हाति विजयाकांक्षी जरामर-
णवर्जितः ५८ अहिच्छत्रां गनूस्तावत्तव वाजी मनोरमः तद्राजा सुमदः श्रुत्वा हयं प्राप्तं तव प्रभो ५९ सपुत्रः सहितः
सर्वसैन्येन बलिनावृतः सर्वं समर्पयामास राज्यं निहितकंटकम् ६० यो राजा जगतां नेत्रीं मातरं जगदंबिकाम् प्रसाद्य चि-
रमायुष्यं लेभे राज्यमकंटकम् ६१ स एष त्वां प्रणमति सुमदः प्रभुसेवितम् तं गृह्णाण कृपादृष्ट्या चिराद्दर्शनकांक्षकम् ६२
ततः सुबाहुभूपस्य नगरे बलपूरिते दमनस्तस्य वै पुत्रः प्रजग्राह हयोत्तमम् ६३ तेन साकं महद्युद्धं बभूव दमनेन च पु

ष्कलोजयमापेदेसंमूर्च्छ्यसुभुजात्मजम् ६४ ततःसुबाहुःसंक्रुद्धोरणेपवनजंबलात् युयुधेतवपादाब्जसेवकंबलिनांवरम् ६५
तस्यपादाहतोज्ञानंप्राप्यशापतिरस्कृतम् तुभ्यसमर्प्यसकलवाजिनःपालकोभवत् ६६ एवंत्वांसुभुजोराजाप्रणमत्युन्नतांगकः
कृपादृष्ट्याभिसिंचत्वंसुबाहुनयकोविदम् ६७ ततोमुक्तोहयोरेवान्हृदेसनिममज्जह तत्रप्राप्तंमोहनास्त्रंशत्रुघ्नेनबलीयसा ६८
ततोदेवपुरेप्रागाच्छिववासविभूषिते तत्रस्यंतुविजानासियतस्त्वंतत्रचागतः ६९ विद्युन्मालीहतोदैत्यःसत्यवान्संगतस्ततः सु
रथेनसमंयुद्धंजानासित्वंमहामते ७० ततःकुंडलकान्मुक्तोहयोबभ्रामसर्वतः नकश्चित्तंनिजग्राहस्ववीर्यबलदर्पितः ७१
वाल्मीकेराश्रमेरम्येहयःप्राप्तोमनोरमः तत्रयत्कुतुकंजातंतच्छृणुष्वनरोत्तम ७२ तत्रार्भस्तवसारूप्यंबिभ्रत्षोडशवार्षिकः ज
ग्राहवाक्यपत्रांकंवाजिनंबलवत्तमः ७३ तत्रकालजितायुद्धंमहज्जातंनरोत्तम निहतस्तेनवीरेणाशितधारेणहेतिना ७४
अनेकेनिहताःसंख्येपुष्कलाद्यामहाबलाः मूर्च्छितंचापिशत्रुघ्नंचक्रेवीरशिरोमणिः ७५ तदाराजामहद्दुःखंविचार्यहृदिसंयुगे को
पेनमूर्च्छितंचक्रेवीरोहिबलिनांवरः ७६ सयावन्मूर्च्छितोराज्ञातावदन्यःसमागतः तेनैतेनचसर्वाहिनाशितंकटकंतव ७७ स-
र्वेषांमूर्च्छितानांतुशस्त्राण्याभरणानिच गृहीत्वावानरौबद्धौजग्मतुःस्वाश्रमंप्रति ७८ कृपांकृत्वापुनस्तेनदत्तोश्वोयज्ञियोमहान्
जीवनंप्रापितंसर्वंकटकंनष्टजीवितम् ७९ वयंगृहीत्वातंवाहंप्राप्तास्तवसमीपतः एतदेवमयाज्ञातंतदुक्तंतेपुरोवचः ८० इ-
तिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेसुमतिनिवेदनंनामपंचषष्टितमोऽध्यायः ६५ शेषउवाच कथि-
तौवैसुमतिनावाल्मीकेराश्रमेशिशू पुत्रौस्वीयाविति ज्ञात्वावाल्मीकिंप्रतिसंजगौ १ श्रीरामउवाच कौशिशूममसारूप्यधारकौब-
लिनांवरौ किमर्थंतिष्ठतस्तत्रधनुर्विद्याविशारदौ २ अमात्यकथितंश्रुत्वाविस्मयोममजायते यौशत्रुघ्नंहनूमंतंलीलयाबबंध-
तुः ३ तस्माच्छंसमुनेसर्वंबालयोश्चविचेष्टितम् यथामेपरमाप्रीतिर्भवत्येवमभीप्सिता ४ इतितत्कथितंश्रुत्वाराजराजस्य
धीमतः उवाचपरमंवाक्यंस्पष्टाक्षरसमन्वितम् ५ वाल्मीकिरुवाच तवांतर्यामिणोनॄणामज्ञातंनहिकिंचन तथापिकथयाम्यत्र

तवसंतोषहेतवे ६ राजन्यौबालकौमह्यमाश्रमेबलिनांवरौ त्वत्सारूप्यधरौतौच बालौभूखरौप्रभो ७ त्वयायदावनेत्यक्ताजान
कीर्वेनिरागसी अंतर्वत्नीवनेघोरेविलपंतीमुहुर्मुहुः ८ कुररीमिवदुःखार्तांवीक्ष्याहृतववल्लभाम् जनकस्यसुतांपुण्यामाश्रमेत्वन
यंतदा ९ तस्याःपर्णकुटीरम्यारचितामुनिपुत्रकैः तस्यामसूतपुत्रौद्वौभासयंतौदिशोदश १० तयोरकरवंनामकुशोलवइति-
स्फुटम् ववृधातेनिशंतत्रशुक्लपक्षेयथाशशी ११ कालेनोपनयाद्यानिकर्माणिकृतवानहम् वेदान्सांगानहंसर्वान्ग्राहयामास
भूपते १२ सर्वाणिसरहस्यानिशृणुष्वमुखतोमम आयुर्वेदधनुर्विद्यासरहस्यांतुथैवच १३ विद्यांजालंधरींचाथसंगीतकुशलौ
कृतौ गंगाकूलेगायमानौलताकुंजवनेषुच १४ चंचलौचलचित्तौतौसर्वविद्याविशारदौ तदाप्रभृतिसंतोषंप्रासश्चाहंरघूत्तम द-
त्त्वासर्वाणिनास्त्राणिमस्तकेनिहितःकरः १५ अतीवगानकुशलौदृष्ट्वालोकाविसिस्मिरे षड्जमध्यमगांधारस्वरभेदविशारदौ
१६ तथाविधौविलोक्याहंगापयामिमनोहरम् भविष्यज्ञानयोगाच्चकृतंरामायणंशुभम् १७ मृदंगपणवाद्यादियंत्रवीणावि-
शारदौ वनेवनेचगायंतौमृगपक्षिविमोहकौ १८ अद्भुतगीतमाधुर्यंतदारामकुमारयोः श्रोतुंतौवरुणोबालावानिनायविभावरी-
म् १९ मनोहरवयोरूपौगानविद्याब्धिपारगौ कुमारौजग्मतुस्तत्रलोकेशादेशतःकिल २० परमंमधुरंरम्यंपवित्रंचरितंतव शु-
श्राववरुणःसार्धंकुटुंबेनचगायकैः २१ शृण्वन्नैवागतस्तृप्तिंमित्रेणवरुणःसह सुधातोपिपरंस्वादुचरितंरघुनदन २२ गाना
नंदमहालोभहृतप्राणेंद्रियक्रियः प्रत्यागंतुंदिदेशासौकुमारौनहितावकौ २३ अहंचापिगतःपश्चाद्वरुणालयमुत्तमम् वरु
णःप्रेमसहितःपूजांचक्रेममप्रभो २४ पृच्छतेजन्मकर्मादिसर्वज्ञायापिबालयोः वरुणायाब्रुवंसर्वंजन्मविद्याद्युपागमम् २५
श्रुत्वासीतासुतौदेवःसचक्रेंबरभूषणैः देववन्महतींपूजांतयोर्मद्वाक्यगौरवात् २६ आहूतंराजपुत्राभ्यांयद्दत्तंवरुणेनतत् प्र
सन्नेनतयोर्वाद्यगानविद्यावयोगुणैः ततोमामब्रवीत्सीतामुद्दिश्यवरुणःकृती २७ सीतापतिव्रताधुर्यारूपशीलवयोन्विता
वीरपुत्रामहाभागात्यागंनार्हतिकर्हिचित् २८ महतीहानिरेतस्यास्त्यागेहिरघुनंदन सिद्धीनांपरमासिद्धिरेषातेह्यनपायि

नी २९ यामेरैर्महिमानास्या ज्ञायतेयदिदूषकैः काहानिस्तावतारामपुण्यश्रवणकीर्तनः ३० अस्मात्साक्षिकमेतस्याःपावनंचरितंस-
र्वे सद्यस्तेसिद्धिमायांतियेसीतापदचिंतकाः ३१ यस्याःसंकल्पमात्रेणजन्मस्थितिलयादिकाः भवंतिजगतांनित्यंतथालोकेश्वरा अ-
पी ३२ सीतामृत्युःक्षुधाचेयंतपस्येषाचवर्षति स्वर्गमोक्षस्तपोयोगोदानंचत्वजानकी ३३ ब्राह्मणंशिवमन्यांश्चलोकपालान्मदादि-
कान् करोत्येषाकरोत्येवनान्यासीतानृतवप्रिया ३४ त्वंपितासर्वलोकानांसीताचजननीस्मृतः कुदृष्टिरस्यांकर्तुंवैभवान्योग्योनकर्हि-
चित् ३५ वेत्तिसीतांसदाशुद्धांसर्वज्ञोभगवान्स्वयम् भवानपिसुतांभूमेःप्राणादपिगरीयसीम् ३६ आदृतव्यात्वयातस्मात्त्रि-
याशुद्धेतिजानकी नचशापपराभूतिःसीतायांत्वयिवाविभो ३७ इमानिममवाक्यानिबाह्यानिजगतांपतिम् रामंप्रतित्वयासा
क्षाद्वाल्मीकेमुनिसत्तम ३८ इत्युक्तोवरुणेनाहंसीतासंग्रहकारणात् एवमेवहिसर्वैश्चकौतुकाविष्टमानसैः ३९ श्रु-
तंरामायणोद्गानंपुत्राभ्यांतेसुरासुरैः गंधर्वैरपिसर्वैश्चलोकपालैरपिप्रभो ४० प्रसन्नाएवसर्वेपिप्रशशंसुःसुतौचते त्रैलोक्यंमो
हितंताभ्यांरूपगानवयोगणैः ४१ दत्तंयल्लोकपालैस्तुसुताभ्यांस्वीकृतंहितत् ऋषिभिश्चवराआभ्यामन्येभ्यःकीर्तिरेवच ४२
एकरामंजगत्सर्वंपूर्वंमुनिविलोकितम् त्रिरामधुनाजातंसुताभ्यांसर्वमीक्षितम् ४३ एकरामपरामूर्तिर्लोकेपूर्वमवेक्षिता
कामेश्वतुर्भिरद्येयंजीयतेचयतस्ततः ४४ सर्वत्रान्यत्रराजेंद्ररामपुत्रौकुशीलवौ गीयतेअत्रसंकोचःकिंकृतौविदुषित्वयि ४५
कृतेषुतवसर्वेषुश्रूयतेमहतीस्तुतिः त्यागादन्यत्रसीतायाःपुण्यश्लोकशिरोमणे ४६ त्वयात्रैलोक्यनाथेनगार्हस्थ्यमनुकुर्वता
अंगीकार्यौसुतौरामविद्याशीलगुणान्वितौ ४७ नतौस्वांमातरंहित्वास्थास्यतोभवदंतिके जनन्यासहितौतस्मादाकार्यौभवता
सुतौ दत्तएवतयेदानींसेनासंजीवनात्पुनः ४८ प्रत्ययःसर्वलोकानांपावनःपापिनामपि नाज्ञानंतेनचास्माकंनामराणांचमा-
नद ४९ शुद्धेतस्यास्तुलोकानांयन्नष्टंतदिहध्रुवम् ५० शेषउवाच इतिवाल्मीकिनारामःसर्वज्ञोप्यवबोधितः स्तु-
त्वानत्वाचवाल्मीकिंप्रस्तुवांचसलक्ष्मणम् ५१ गच्छताताधुनासीतामानेतुंधर्मचारिणीम् सपुत्रांरथमास्थायसुमित्रसाहि-

रा.मे.
१०

तःसर्वे ५२ श्रावयित्वाममैतानिमुनेश्चवचनान्यपि संबोध्यचपुरीमेतांसीतांप्रत्यानयाशुताम् ५३ यास्यामितवसंदेशात्सर्वे-
षांवःप्रियाद्विभो देव्यायास्यतिचेद्दूतयात्राभेसफलाततः ५४ सामासमध्यसूयांचपूर्वदोषवशात्सती अनागतायांतस्यांतुत्व-
मत्वागमनंमम ५५ इत्युक्त्वालक्ष्मणोरामंरथेस्थित्वानृपाज्ञया सुमित्रमुनिशिष्याभ्यांयुतोगाद्भूमिजाश्रमम् ५६ कथंप्रसादसी-
यास्यात्सीताभगवतीमया पूर्वदोषविजानंतीरामाधीनस्यमेसदा ५७ एवंसंचिंतयन्नंतर्हर्षसंकोचमध्यगः लक्ष्मणःप्राप्यसी-
तायाआश्रमंश्रमनाशनम् ५८ रथात्सोथावरुह्याराद्श्रुरुद्धविलोचनः आर्यपूज्येभवनिशुद्धेइत्यवदन्मुहुः पपातपादयो-
स्तस्यावेपमानाखिलांगकः उत्थापितस्तयादेव्याप्रीतिविह्वलयासच ६० किमर्थमागतःसौम्यनूनंमुनिजनप्रियम् आस्ते
सकुशलीदेवःकौसल्याशुक्तिमौक्तिकः ६१ अशेषामयिकश्चित्सत्कीर्त्याकेवलयादृतः कीर्त्यतेसर्वलोकेश्चकल्याणगुणसा-
गरः ६२ अकीर्तिभीतिमापन्नास्त्यक्तुंमांत्वांनियुक्तवान् यदातत्रश्चलोकेषुकीर्तिस्तस्यामलाभवेत् ६३ मृतायाःप-
तिसत्कीर्तिंकुर्वत्यामेहिसुस्थिराम् पतिसामीप्यमेवाशुभूयादेवहिदेवर ६४ त्यक्तयापिमयानेननासौत्यक्तोमनागपि फ-
लंहिसाधनायत्तंहेतुःफलवशोनतु ६५ कौशल्याशल्यशून्यासौकृपापूर्णासदामयि अस्तेकुशलिनीयस्याःपुत्रस्त्रैलोक्यपा-
लकः ६६ सर्वेकुशलिनःसंतिभरताद्याश्चबांधवाः सुमित्राचमहाभागायस्याःप्राणादहंप्रिया ६७ मद्धत्किंत्वंवनेत्यक्तःस-
र्वलोकेषुकीर्तये राज्ञःकिंदुस्त्यजंतस्ययस्यात्मापियशस्यनप्रियः ६८ इत्येवंबहुधापृष्टस्तयारामानुजःसताम् उवाचकु-
शलीदेवःकुशलंत्वयिपृच्छति ६९ कौसल्याचसुमित्राचयाश्चान्याराजयोषितः पप्रच्छुःकुशलंदेविप्रीत्यात्वामाशिषासह
७० कुशलप्रश्नपूर्वंहितवपादाभिवंदनम् निवेदयामिशत्रुघ्नभरताभ्यांकृतंशुभे ७१ गुरुभिर्गुरुपत्नीभिःसर्वाभिर-
पितेशुभे दत्ताशीःकुशलप्रश्नःकृतश्चत्वयिजानकि ७२ अकारयतिदेवस्त्वांनिर्व्यलीकेनचात्मवान् अलभ्यान्य-
रतिस्त्वत्तोन्यत्रसर्वत्रगामिनि ७३ शून्याएवदिशःसर्वास्त्वांविनाजनकात्मजे पश्यन्रोदितिनायोनोरोदयन्नितरानपि

अ.
६६

१०

७४ यत्रदेविस्थितासित्वंनित्यंस्मरतिराघवः अशून्यंतुतमेवासौमन्यमानोविदेहजे ७५ मन्येयमाश्रमोजातोवाल्मीकेर्यत्रजा
नकी कालंक्षपतिवार्ताभिर्मदीयाभिर्वदन्निति ७६ उक्तथान्यद्वदन्किंचित्स्वामीनस्त्वयितच्छृणु व्यक्तीभवतिवक्तुर्यद्दूतुतदसं
शयं ७७ लोकावदतिमामेवसर्वेषामीश्वरेश्वरम् अहंत्वदृष्टमेवेषांस्वतंत्रंकारणंध्रुवम् ७८ अदृष्टमेवकार्येषुसर्वेशोप्य
नुगच्छति ईशनीयाःकुतोनेनदन्वीयुःसुखदुःखयोः ७९ धनुर्भंगेमतिभ्रंशेकैकय्यामरणेपितुः अरण्यगमनेतत्रहरणेतववा
रिधेः ८० तरणेरक्षसांभर्तुर्मारणेपरिणेरणे सहायीभवनेमह्यमृक्षवानररक्षसां ८१ लाभेतवप्रतिज्ञायाःसत्यत्वेचपतिव्रते
पुनःस्वबंधुसंबंधेराज्यप्राप्तौचभामिनि पुनःप्रियावियोगेचकारणंयदवारणम् ८२ प्रसीदतितदेवाद्यसंयोगेपुनरावयोः वे
दान्यथाकृतोयेनलोकोत्पत्तिलयौयतः ८३ लोकाननुगतास्तस्मात्कारणंप्रथमंत्वहम् ८४ अदृष्टमनुवर्तंतेलोकाःसप्रतिबो
धकाः भोगेनजीर्यतेदृष्टंतूत्तुभुक्तंत्वयावने ८५ स्नेहशुद्धिरियंभद्रेकृतामेत्वयिनान्यथा ८६ मंतव्यंरक्षितोप्येषलोकः
शिष्टानुवर्तिना ८७ अवयोर्निद्रयादेविसर्वावस्थासुशुद्धयोः ८८ लोकोनश्येद्धिसंमूढश्चरितैर्महतामयम् ८९ आवयो
रुज्वलाकीर्तिरावयोरुज्वलोरसः आवयोरुज्वलोवंशावावयोरुज्वलक्रिया ९० भवेयुरावयोःकीर्तिगायकाउज्वलाभुवि आव
योर्भक्तिमंतोयेतेयांत्यंतंभवांबुधेः ९१ इत्युक्त्वाभवतीतेनप्रीयमाणेनतेगुणैः पत्युःपदांबुजेद्रष्टुंकरोतुसदयंमनः ९२ वासां
सिरमणीयानिभूषणानिमहांतिच अंगरागस्तथागंधामनोज्ञास्त्वयियोजिताः ९३ रथोदास्यश्चरामेणप्रेषिताउत्सवायते छ
त्रंचचामरेशुभ्रेगजाअश्वाश्चशोभने ९४ स्तूयमानाद्विजश्रेष्ठैःसूतमागधबंदिभिः वंद्यमानापुरस्त्रीभिःसेव्यमानाचयोद्धृभिः
९५ पुष्पैःसंछाद्यमानाचदेवीदेवांगनादिभिः धनानिददतीतेभ्योद्विजातिभ्यायथेप्सितम् ९६ गजारूढौकुमारौचपुरस्कृत्यस्व-
जनेश्वरि मयानुगम्यमानाचगच्छायोध्यांनिजांपुरीम् ९७ त्वयितत्रगतायांतुसंगतायांप्रियेणते सर्वासांराजनारीणामा
गतानांचसर्वशः ९८ सर्वासामृषिपत्नीनाकोसलानांतथैवच मंगलैर्वाद्यगीताद्यैर्भवत्वद्यमहोत्सवः ९९ शेषउवाच

इतिविज्ञापनांदेवीश्रुत्वासीतातमाहसा नाहंकीर्तिकरीराज्ञोत्वपकीर्तिःस्वयंत्वहम् १०० किंमयातस्यसाध्यंस्याद्धर्मकामार्थशू
न्यया सत्येवंभवतांभूपेकोविश्वासोनिरंकुशे १ प्रत्यक्षावापरोक्षावाभर्तुर्दोषामनःस्थिताः नवाच्याजातुमादृश्या कल्याण
कुलजातया २ पाणिग्रहणकालेमेयद्रूपोहृदयेस्थितः तद्रूपाहृदयान्नासौकदाचिदपसर्पति ३ लक्ष्मणेमौकुमारौमेत्वत्तेजां
शसमुद्भवौ वंशांकुरौमहाशूरौधनुर्विद्याविशारदौ ४ नीत्वापितुःसमीपंतुलालनीयौप्रयत्नतः तपसाराधयिष्यामिरामंकाममि
हस्थिता १०५ वाच्यंत्वयामहाभागपूज्यपादाभिवंदनम् सर्वेभ्यःकुशलंचापिगत्वेतोमदुपेक्षया ६ पुत्रौसमादिशत्सीतागच्छतं
पितुरंतिकम् शुश्रूषणीयएवासौभवद्भ्यांस्वपदप्रदः ७ आज्ञसावप्यनिच्छंतौतौकुमारौकुशीलवौ वाल्मीकिवचनात्तत्रज-
ग्मतुश्चसलक्ष्मणौ ८ वाल्मीकेरेवपादाब्जसमीपेतत्सुतौगतौ लक्ष्मणोपिववंदेतंगत्वाबालकसंयुतः ९ वाल्मीकिर्लक्ष्मणस्तौ
तुकुमारौमिलिताअमी सभायांसंस्थितंरामंज्ञात्वातेजग्मुरुत्सुकाः ११० लक्ष्मणःप्रणिपत्याथसीतावाक्यादिसर्वशः कथयामास-
रामायहर्षशोकयुतःसुधीः ११ सीतासंदेशवाक्येभ्योरामोमूर्च्छांसमन्वभूत् संज्ञामवाप्यचोवाचलक्ष्मणंनयकोविदम् १२
गच्छमित्रपुनस्तत्रयत्नेनमहताचताम् शीघ्रमानयभद्रंतेमद्वाक्यानिनिवेद्यच १३ अरण्येकिंतपस्यातेगतिरन्याविचिंतिता
श्रुत्वाहृष्टायवामत्तोयन्नागच्छसिजानकि १४ त्वदिच्छयात्वमेवेतोगतारण्यंमुनिप्रियम् पूजितामुनिपत्न्यास्त्वाहृष्टामुनिगणा
स्तथा ११५ पूर्णोमनोरथस्तेद्यकिन्नागच्छसिभामिनि नदोषोमयिपश्येस्त्वंस्वात्मेच्छायाविलोकनात् १६ गत्वागत्वाथ-
वामोरुपतिरेवगतिःस्त्रियः निर्गुणोपिगुणांभोधिःकिंपुनर्मनसेप्सितः १७ याधाक्रियाकुलस्त्रीणांसासापत्युःप्रतुष्टये पूर्वमेव
प्रतुष्टोहमिदानींसुतरांत्वयि १८ योयाजपस्तपोदानंव्रतंतीर्थंदयादिकम् देवाश्चमयिसंतुष्टेतुष्टमेतदसंशयम् १९ शेषउ
वाच इतिसंदेशमाश्राव्यंसीतांप्रतिजगत्पतेः आहलक्ष्मणआत्मेशमाननतःप्रणयोद्धतः १२० सीतानयनमुद्दिश्यप्रसन्नस्त्वं
यदूद्विवान् कथयिष्यामितद्वाक्यंविनयेनसमन्वितम् २१ इत्युक्त्वापादयोर्नत्वारघुनाथस्यलक्ष्मणः जगामत्वरितःसीतां

स्थेतिष्ठन्महाजवे २२ वाल्मीकिःश्रीयुतौवीक्ष्यराजपुत्रौमहौजसौ उवाचस्मितमाधायसुस्वरंकृत्वामनोहरम् २३ युवांप्रागाय
तांपुत्रौरामचारित्रमद्भुतम् वीणांप्रवादयंतौचकलगानेनशोभितम् २४ इत्युक्तौतौसुतौरामचारित्रंबहुपुण्यदम् अगायतांम-
हाभागौसुवाक्यपदचित्रितम् १२५ यस्मिन्धर्मविधिःसाक्षात्यातिव्रत्यंतुयस्थितम् भ्रातृस्नेहोमहान्यत्रगुरुभक्तिस्तथैवच २६
स्वामिनःसेवनेयत्रनीतिमूर्तिर्मतिःकिल अधर्मकरशास्तावैयत्रंसाक्षाद्रघूद्वहः २७ तद्गानेनजगद्व्याप्तंदिविदेवाअपिस्थिताः किं
न्नराअपियद्गानंश्रुत्वामूर्च्छामिताःक्षणात् २८ वीणायारणितंश्रुत्वातालमानेनशोभितम् निखिलापरिषत्तत्रशालभंजीवचित्रिता
२९ हर्षादश्रूणिमुंचंतौरामाद्याभूमिपास्तथा तद्गानपंचमोवेदोविहितश्चित्रितैःपदैः १३० तत्रहृष्टासुतौरामौमहागानविमोहकौ
आदात्ताभ्यांसुवर्णस्यलक्षंलक्षंपृथक्पृथक् ३१ तदादानपरंदृष्ट्वावाल्मीकिंमुनिसत्तमम् अब्रूतांप्रहसंतौतौकिंचिद्रूक्षस्वरौततः
३२ मुनेमहान्प्रक्रियतेअन्यायोभूमिपेनवै यदावाभ्यांसुवर्णानिदातुमिच्छतिलोभयन् ३३ प्रतिग्रहोब्राह्मणानांशस्यतेभूमि-
पेनवै प्रतिग्रहपरोराजानरकायैवकल्पते ३४ आवयोःकृपयायुक्तःराज्यंभुंक्तेमहीपतिः कथंदातुंसुवर्णानिवांछतिश्रेयसोवि-
तः १३५ इत्युक्तवंतौतौदृष्ट्वावाल्मीकिःकृपयायुतः अशंसत्पितरंयुष्मज्जानीतंनीतिवित्तमौ ३६ इतिश्रुत्वामुनेर्वाक्यंबाल
कौनृपपादयोः लग्नौविनयसंयुक्तौमातृभक्त्यातिनिर्मलौ ३८ रामौबालौदृढंस्वांगेपरिरभ्यमुदान्वितः मेनेस्वीयौतदाधर्ममूर्ति
मंतावुपस्थितौ ३९ सभापिरामःसुतयोर्वीक्ष्यवक्त्रेमनोरमे जानकीपतिभक्तित्वंसत्यंमेनेमुनीश्वर ४० इतिशेषमुखप्रोक्तंश्रु
त्वात्स्यायनोब्रवीत् रामायणंश्रोतुमनाःसर्वधर्मसमन्वितम् १४१ वात्स्यायनउवाच कस्मिन्कालेकृतंस्वामिन्रामायणमि
दंमहत् कस्माच्चकारकिंतत्रवर्णनंतद्वदस्वमे ४२ शेषउवाच एकदागतवान्विप्रोवाल्मीकिर्विपिनंमहत् यत्रतालास्तमाला
श्चकिंशुकायत्रपुष्पिताः ४३ केतकीपत्ररजसिरवंकुर्वंतिभैरवम् शशिप्रभेवमहतीदृश्यतेशुभ्रवर्णभृत् चंपकोबकुलश्चापि
कोविदारःकुरंटकः ४४ अनेकेपुष्पितायत्रपादपाःशोभनेवने कोकिलानांचशब्देननिर्झराणांचशब्दितैः १४५ संघुष्टंसर्वतो-

रम्यंमनोहरवयोन्वितम् तत्रक्रौंचयुगंरम्यंकामबाणप्रपीडितम् ४६ परस्परंप्रहर्षितंरमेस्निग्धतयास्थितम् तदाव्याधःसमाग
त्यतयोरेकंमनोहरम् ४७ अवधीन्निर्दयःकश्चिन्मांसास्वादनलोलुपः तदाक्रौंचीव्याधहतंस्वपतिंवीक्ष्यदुःखिता ४८ विललाप
भृशंदुःखान्मुंचंतीरावमुच्चकैः तदामुनिःप्रकुपितोनिषादंक्रौंचघातकम् ४९ शशापचाप्युपस्पृश्यसरितःपावनंजलम् मानिषादप्र
तिष्ठांत्वमगमःशाश्वतीःसमाः १५० यत्क्रौंचपक्षिणोरेकमवधीःकाममोहितम् तदाप्रबंधःश्लोकस्यजातंमत्वाद्भुतंद्विजाः ५१ ऊचुर्मु
निंप्रहृष्टास्तेशंसंतःसाधुसाध्विति स्वामिन्शापोदितेवाक्येभारतीश्लोकमातनोत् ५२ अत्यंतमोहनोजातःश्लोकोयंमुनिसत्तम त
दामुनिःप्रहृष्टात्माबभूववाडवर्षभ तस्मिन्कालेसमागत्यस्रष्टापुत्रैःसमन्वितः ५३ वचोजगादवाल्मीकिंधन्योसित्वंमुनीश्वर भार
तीत्वन्मुखेस्थिताश्लोकत्वंसमपद्यत ५४ तस्माद्रामायणंपुण्यंकुरुष्वमधुराक्षरम् येनतेविमलाकीर्तिराकल्पांतंभविष्यति ५५
धन्यासिवमुखेवाणीरामनाम्नासमन्विता अन्याकामंकथानॄणांजनयत्येवपातकम् १५६ तस्मात्कुरुष्वरामस्यचरितंलोकविश्रुतम्
येनस्यात्पापिनांपापहानिरेवपदेपदे ५७ इत्युक्त्वांतर्दधेस्रष्टासर्वदेवैःसमन्वितः ततःसंचिंतयामासकथंरामायणंभवेत् ५८
तदाध्यानपरोजातोनदीतीरेमनोरमे तस्यचेतस्ययोरामःप्रादुर्भूतोमनोहरः ५९ नीलोत्पलदलश्यामंलक्ष्मीवासंमनोरमम् निरी
क्ष्यतस्यचरित्रंभूतंभव्यंभवच्चयत् १६० तदात्यंतंमुदंप्राप्तोरामायणमसीसृजत् मनोरमपदैर्युक्तमर्थैर्बहुविधैरपि ६१ षट्-
कांडानिसुरम्याणियत्ररामायणेऽनघ बालमारण्यकंचान्यत्किष्किंधासुंदरंतथा ६२ युद्धमुत्तरमन्यच्चषडेतानिमहामते शृणु
याद्योनरःपुण्यात्सर्वपापैःप्रमुच्यते ६३ तत्रबालेमुनिकृतपुत्रेष्ट्याचतुरःसुतान् प्रापपंक्तिरथःसाक्षाद्धरिंब्रह्मसनातनम् ६४
सकौशिकमखंगत्वासीतामुद्वाह्यभार्गवम् आगत्यपुरमुत्कृष्टयौवराज्यप्रगल्भकः ६५ मातृवाक्याद्वनंप्रागाद्गंगामुत्तीर्यपर्वत-
म् चित्रकूटंमहिलयालक्ष्मणेनसमन्वितः १६६ भरतस्तुवनेश्रुत्वाजगामभ्रातरंनयी तमप्राप्यस्वयंनंदिग्रामेवासमचीकरत्
६७ बालमेतच्छृणुष्वान्यदारण्यकमयाखिलम् मुनीनामाश्रमेवासस्तत्रतत्रोपवर्णनम् ६८ नासाच्छेदःशूर्पणख्याखरदूष-

णनाशनम् मायामारीचहननंसीताहरणमेवच ६९ वनेविरहिणाप्राप्तंतमन्युष्यचरितंभृतम् कबंधप्रेक्षणंतत्रपंपायांगमनं
तथा १७० हनूमंतासंगमोभूदित्येतद्वनसंज्ञितम् अपरंचशृणुष्वान्यत्संक्षेपात्कथयाम्यहम ७१ सप्ततालप्रभेदश्चवालिमो
रणमद्भुतम् सुग्रीवेराज्यदानंचनगवर्णनमित्युत ७२ लक्ष्मणात्कर्मसंदेशःसुग्रीवस्यविवासनम् तथासैन्यसमुद्देशःसीता
न्वेषणमित्युत ७३ संपातिप्रेक्षणंतत्रवारिधिलंघनंतथा परतीरेकपिप्राप्तिःकिष्किंधाकांडमुत्तमम् ७४ सुंदरंशृणुकांडवे
यत्रराम कथाद्भुता प्रतिगेहपरिभ्रांतिःकपेश्चित्रस्यदर्शनम् १७५ सीतासंदर्शनंतत्रजानक्याभाषणंतथा वनभंगःप्रकु
पितादृधनंवानरस्यच ७६ ततोलंकाप्रज्ज्वलनंजानक्यासंगतिस्ततः रामाभिज्ञानदानंचसैन्यप्रस्थानमेवच ७७ समुद्र
सेतुकरणंशुकसारणसंगतिः इतिसुंदरमाख्यातंयुद्धेसीतासमागमः ७८ उत्तरेश्चऋषिसंवादोयत्रप्रारंभएवच तत्रानेकारामक
थाःशृण्वतापापनाशकाः इतिषट्कांडमाख्यातंब्रह्महत्यापनाशनम् ७९ संक्षेपतोमयातुभ्यमाख्यातंसुमनोहरम् चतु
र्विंशतिसाहस्रंषट्कांडपरिकल्पितम् ८० तद्धिरामायणंप्रोक्तंमहापातकनाशनम् तच्छ्रुत्वाराघवःप्रीतःपुत्रावाधायचासने
द्दृढंतौपरिरभ्याथसीतासंस्मारवल्लभाम् ८१ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेषट्षष्टितमो
ऽध्यायः ६६ शेषउवाच अथसौमित्रिरागत्यजानकींनतवान्मुहुः प्रेमगद्गदयाशंसन्रामचंद्रप्रणोदितम् १ सीता
यमागतंदृष्ट्वालक्ष्मणंविनयान्वितम् तन्मुखाद्रामसंदेशंश्रुत्वोवाचविलज्जिता २ सौमित्रेकथमागच्छेद्रामस्त्यक्तामहाव
ने तिष्ठामिसंस्मरन्रामंवाल्मीकेराश्रमेन्वहम् ३ तस्यामुखोदितंवाक्यंश्रुत्वासौमित्रिरब्रवीत् मातःपतिव्रतेरामस्त्वा
माकारयतेमुहुः ४ पतिव्रतापतेश्चैवदोषंनानुयुतेयदि तस्मादागच्छहिमयास्थित्वास्यंदनउत्तमे ५ इत्यादिवचनंश्रु
त्वाजानकीपतिदेवता मनोरोषंपरित्यज्यतस्थौसौमित्रिणारथे तापसीःसकलानत्वामुनींश्चनिगमोज्वलान् ६ रामस्म
रंती[illegible]रयेस्थित्वागमत्पुरम् क्रमेणनगरींप्राप्तामहाहर्षभरान्विता ७ रामस्यपादयोर्लग्नापतिव्रतपरायणा

स्यैणं [illegible]लैयांपतिंद्रनंपरांयणां रामस्तामागतां दृष्ट्वाजनकींप्रेमविह्वलाम् ८ साध्वित्वयासदेहानांकुर्वैर्यज्ञःसमापनम् वा
ल्मीकिंसानमस्कृत्यतथान्यान्विप्रसत्तमान् ९ जगाममातृपदयोःसंनतिंकर्तुमुत्सुका १० कौसल्यातामथायातांवीरसूंजानकींप्रियाम्
आशीर्भिरभिसंयुज्ययोहर्षमनेकधा ११ कैकयीपदयोनम्रांवीक्ष्यवैदेहिपुत्रिकाम् भर्त्रासहचिरंजीवसपुत्रेत्याशिषंव्यधात् १२
सुमित्रास्वपदेनम्रांवीक्ष्यवैदेहिपुत्रिकाम् आशिषंव्यदधात्तस्याःपुत्रपौत्रप्रदायिनीम् १३ सीताताःसर्वतोनत्वारामचंद्रप्रियासती
परमंहर्षमापन्नाबभूवकिलवाडव १४ समागतांवीक्ष्यपत्नींरामचंद्रस्यकुंभजः स्ववर्णपत्नींधिःकृत्वातामधाद्धर्मचारिणीम् १५
रामस्तदायज्ञमध्येशुशुभेसीतयासह ताराधानुगतोयद्वच्छशीविशरदागमे १६ प्रयोगमकरोत्तत्रकालेप्रासेमनोरमे वैदेह्याधर्मचा
रिण्यासर्वपापापनोदनम् १७ सीतयासहितोरामंप्रयुक्तंयज्ञकर्मणि निरीक्ष्यजहृषुस्तत्रकौतुकेनसमन्विताः १८ वसिष्ठंप्राह
सुमतिंरामस्तत्रक्रतौवरे किंकर्तव्यंमयास्वामिन्नतःपरंक्रतूत्तमे १९ रामस्यवचनंश्रुत्वागुरुःप्राहमहामतिः ब्राह्मणानांप्रकृ
तव्यापूजासंतोषकारका २० मरुत्तेनक्रतुःपूर्वंकृतःसंभारसंभृतः ब्राह्मणास्तत्रवित्ताद्यैस्तोषिताअभवंस्तदा २१ अत्यंत-
वित्तसंभारंनेतुंविप्राशकंनहि प्राक्षिपन्हिमरुद्देशेवित्तभारहराद्विजाः २२ तस्मात्त्वमपिराज्याग्र्योलक्ष्मीवान्नृपसत्तम देहिदानादि
विप्रेभ्योयथास्यात्प्रीतिरुत्तमा २३ तच्छ्रुत्वाराजराजाग्र्यःपूज्यंमत्वाघटोद्भवम् प्रथमंपूजयामासब्रह्मपुत्रंतपोधनम् २४ अ
नेकरत्नसंभारैःस्वर्णभारैरनेकधा देशैर्जनैःपरिव्याप्तैरत्यंतप्रीतिदायकैः २५ अगस्त्यंपूजयामाससपत्नीकंमनोरमम् तथैवरत्नैः
स्वर्णैश्चदेशैश्चविविधैरपि २६ व्याससत्यवतीपुत्रंतंचैवसमपूजयत् च्यवनंभार्ययासार्द्धंस्वरत्नैःसमपूजयत् २७ अन्या
नपिमुनीन्सर्वानृत्विजांश्चतपोनिधीन् पूजयामासरत्नौघैःस्वर्णभारैरनेकधा २८ अदात्तदाक्रतौरामोविप्रेभ्योबहुदक्षि
णाम् लक्षंलक्षंसुवर्णस्यप्रत्येकंत्वग्रजन्मने २९ दीनांधकृपणेभ्यश्चददौदानमनेकधा यथासंतोषविहितैर्वित्तैरत्नैर्मनोह
रैः ३० वासांसिचविचित्राणिभोजनानिमृदूनिच तत्रप्रादाद्यथास्वांतंसर्वेषांप्रीतिदायकम् ३१ हृष्टपुष्टजनाकीर्णसर्वस-

त्वोपबृंहितम् अत्यंतमभवद्धृष्टंपुरंपुंस्त्रीसमावृतम् ३२ दानंतदंतंसर्वेषांवीक्ष्यकुंभोद्भवोमुनिः अत्यंतंपरमांप्रीतिंचयो-
क्तुवरोद्विजः ३३ तदाभिषेकस्नानार्थंपानीयममृतोपमम् आनेतुंचचतुःषष्टिनृपान्सस्त्रीन्समादिशत् ३४ रामस्तुसीत-
यासार्द्धमानेतुमुदकंययौ घटेनस्वर्णवर्णेनसर्वालंकारशोभया ३५ सौमित्रिरप्यूर्मिलयामाण्डव्याभरतोनृपः शत्रुघ्नःश्रुतकी-
र्त्याचकामवत्याचपुष्कलः ३६ सुबाहुःसत्यवत्याचसत्यवान्वीरशोभया सुमदस्तत्रकीर्त्याचराज्ञाचविमलोनृपः ३७ राजा-
वीरमणिस्तत्रश्रुतवत्यामनोज्ञया लक्ष्मीनिधिःकोमलयारिपुतापोगसेवया ३८ विभीषणोमहामूर्त्याप्रतापाग्र्यःप्रतीपया
उग्राश्वःकामगमयानीलरत्नोधिगम्यया ३९ सुरथःसुमनोहार्यातथाचरुमयाकपिः इत्यादीन्नृपतीन्विप्रोवसिष्ठःप्राहि-
णोन्मुनिः ४० वसिष्ठःशरयूंगत्वाशिवपूतजलाप्लुतम् उदकंमन्त्रयामासमंत्रेणमंत्रवित्तमः ४१ यज्ञार्थंरामचंद्र-
स्यसर्वलोकैकरक्षितुः ४२ उदकंतन्मुनिस्पृष्टंसर्वेरामादयोनृपाः आजन्हुर्मंडपतलेविप्रवर्यैरुपस्कृते ४३ पयोभिर्निर्म-
लैःस्नाप्यवाजिनंक्षीरसन्निभम् मंत्रेणमंत्रयामासरामहस्तेनकुंभजः ४४ पुनीहिमांमहाबाहअस्मिन्ब्रह्मसमाकुले त-
न्मध्येनिखिलादेवाःप्रीणंतुपरितोषिताः ४५ इत्युक्त्वासनृपोरामःसीतयासममस्पृशत् तदासर्वेद्विजाश्चित्रममन्यतकुतु-
हलात् ४६ परस्परमवोचंस्तेयन्नामस्मरणान्नराः महापापात्प्रमुच्यंतेसरामःकिंवदत्यहो ४७ इत्युक्तवतिभूमीशेरामे
कुंभोद्भवोमुनिः करवालंचाभिमंत्र्यददौरामकरेमुनिः ४८ करवालेधृतेपृष्ठेरामेणसहयःकृतौ पशुत्वंतुविहायाशुदि-
व्यरूपमविंदत ४९ विमानवरमारूढ्यअप्सरोभिःसमंततः चामरैर्वीज्यमानश्चवैजयंत्याविभूषितः ५० तदातंवाजि-
नंत्यक्त्वादिव्यरूपधरंवरम् वीक्ष्यलोकाःकृतासर्वेविस्मयंप्राप्नुवंस्तदा ५१ तदारामःस्वयंजानन्ज्ञापयन्सर्वतोनृपान्
पप्रच्छदिव्यरूपंतंसुरपरमधार्मिकम् ५२ कस्त्वंदिव्यवपुःप्राप्तःकस्मात्त्वंवाजितांगतः कथंस्फुरत्स्त्रीसहितःकिंचिकीर्षसितत्-
त्वद ... रामस्यवचनंश्रुत्वादेवःप्रोवाचभूमिपम् हसन्मेघरवांवाणीमवदत्सुमनोहराम् ५४ तवाज्ञातेनसर्वत्रबा-

रा०मे०
९४

त्वाम्... चारिणः तथापि पृच्छते तुभ्यं कथयामि यथातथम् ५५ अहं तु राभवं राम द्विजः परमधार्मिकः अचरं प्रतिकूलं
वेदस्यारिसुतापन ५६ कदाचिद्भूतपापा यात्तीरिह गतवान्पुरा अनेकवृक्षललिते सर्वत्र सुमनोरमे ५७ तत्र स्नात्वा
पितॄन् तृप्त्वा दानं दत्वा यथाविधि ध्यानं तव महावादान्वेदवादसमन्वितान् ५८ तदा जनाः समायाता बहवस्तत्र भूपते ते-
षां प्ररोचनार्थाय दंभकर्माचरं तदा ५९ अनेकक्रतुसंभारैः पूर्णं मे जिरमुत्तमम् वासोभिश्छादितं रम्यं चषालादियुतं महत्
६० अग्निहोत्रोद्भवो धूमः सर्वतो नभसोंगणम् चकार रम्यमतुलं चित्रकारी वपुर्धरः ६१ अनेकतिलकैरवशोभितांगो म-
हनपः दर्भशोभः समित्पाणिर्दंभो मूर्तिधरः किमु ६२ दुर्वासास्तत्र स्वच्छंदं पर्यटन् जगतीतलम् प्रापतत्र महातेजा धूतपा-
पः सरित्तटे ६३ ददर्श मां दंभकरं मौनधारिणमग्रतः अनर्घ्यकरमुन्मत्तमस्वागतवचःकरम् ६४ दृष्ट्वा तीव्रक्रुधाक्रांतः
समुद्र इव पर्वणि शशापासौ मुनिस्तीव्रं दंभिनं मां महामतिः ६५ दंभकरोषि चेत्तीरे सरितस्त्वं सुदुर्मते तर्हि प्राप्नुहि हि नि-
वाच्य पशुत्वं तापसाधम ६६ शपं प्रदत्तं संश्रुत्य दुःखितोहं तदाभवम् अथाहि प्रपदे तस्य मुनेर्दुर्वाससः किल ६७ त-
दा मे कृतवान् राम द्विजोनुग्रहमुत्तमम् तदहं तस्य चरणौ स्पृशन्नाप्तमनोरमम् ६८ यद्भवन्नाम देवादिदुर्लभं बहुजन्मभिः
तत्ते करजसंस्पर्शं प्राप्तवानिह दुर्लभम् ६९ आज्ञापय महाराज त्वत्प्रसादादहं महत् गच्छामि शाश्वतस्थानं तव दुःखादिव-
र्जितम् ७० न यत्र शोको न जरा न मृत्युः कालविभ्रमः तत्स्थानं देव गच्छामि त्वत्प्रसादान्नराधिप ७१ इत्युक्त्वा तं परिक्र-
म्य विमानवरमारुहत् अनेकरत्नखचितं सर्वदेवाधिवंदितम् ७२ गतोसौ शाश्वतस्थानं रामपादप्रसादतः पुनरावृ-
त्तिरहितं शोकमोहविवर्जितम् ७३ तेन तत्कथितं श्रुत्वा रामज्ञात्वेतरे जनाः विस्मयं प्रापिरे सर्वे परस्परमुदीक्षया ७४
शृणु द्विज महाबुद्धे दंभेनापि स्मृतो हरिः ददाति मोक्षं सुतरां किं पुनर्दंभवर्जनात् ७५ यथाकथंचिद्रामस्य कर्तव्यं स्मरणं प-
रम् येन प्राप्नोति परमं पदं देवादिदुर्लभम् ७६ तच्चित्रं वीक्ष्य मुनयः कृतार्थं मेनिरे निजम् यद्रामचरणप्रेक्षापुरुषं क

अ०
६७

४९

र्मयंत्रितम् ७७ गतेतस्मिन्सुरेस्वर्गंहयरूपधरेपुरा उवाचरामस्तपसांनिधीन्वेदविशारदान् ७८ किंकर्तव्यं[illegible]हयान्
ष्टोगतःसुखम् होमःकथंपुरोभाविसर्वदेवततर्पकः ७९ यथास्यात्करसंतृप्तिर्यथामेमखउत्तमः तथाकुर्वंतुमुनयोयथामे
स्याद्विधिश्रितम् ८० इतिवाक्यंसमाश्रुत्यजगादमुनिसत्तमः वसिष्ठःसर्वदेवानांचित्ताभिज्ञानकोविदः ८१ कर्पूरमाहर-
क्षिप्रंयेनदेवाःस्वयंपुरा प्राप्यहव्यंगृहीष्यंतिमद्वाक्यप्रेरितासुराः ८२ इतिवाक्यंसमाकर्ण्यरामःक्षिप्रमुपाहरत् कर्पूरब-
हुदेवानांप्रीत्यर्थंबहुशोभनम् ८३ तदामुनिःप्रहृष्टात्मादेवानाह्वयदद्भुतम् तेसर्वेतत्क्षणात्प्राप्ताःस्वपरीवारसंवृताः ८४
इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेसप्तषष्टितमोऽध्यायः ६७ शेषउवाच इदंतत्रहविर्मृष्टं
रामचंद्रेणवीक्षितम् परिस्वादनकृतौतृप्तिंनप्राप्ताःसुरसंयुताः १ नारायणोमहादेवोब्रह्मातत्रचतुर्मुखः वरुणश्चकुबेर-
श्चतथान्येलोकपालकाः २ तत्रास्वाद्यहविःस्निग्धंवसिष्ठेनपरिष्कृतम् ततःपुनर्हविःप्रेद्धक्षुधार्ताइवभोजनात् ३ स-
र्वान्देवांश्चसंतर्प्यहविषाकरुणानिधिः वसिष्ठःप्रेरितःसर्वमितिकर्तव्यमाचरत् ४ ब्राह्मणादानसंतुष्टाहविस्तुष्टाःसुरावराः
तृप्ताःसर्वेस्वकंभागंगृहीत्वास्वालयंययुः ५ ऋषिभ्योहोतृमुख्येभ्यःप्राद्रात्राज्यंचतुर्दिशम् संतुष्टास्तेद्विजारामंमाशीर्भिर-
ददुःशुभम् ६ पूर्णाहुतिंततःकृत्वावसिष्ठःप्राहसुस्मितः वर्धापयंतुभूमीशंयागपूर्तिकरंपरम् ७ तद्वाक्यंताःस्त्रियःश्रु
त्वालाजैरवकिरन्मुदा लावण्यजितकंदर्पंमहामणिविभूषितम् ८ ततोवभृथस्नानार्थंप्रेरयामासभूमिपम् ययौरामः
[illegible]सर्वीयैःसरयूतीरमुत्तमम् ९ अनेकराजकोटीभिःपरितःपरिवारिभिः जगामससरिच्छ्रेष्ठांपक्षिवृंदसमाकुलाम् १०
[illegible]विरिवस्वाभिर्भार्याभिर्वृतउत्प्रभः विरोचतेयथातद्वद्रामोराजगणैर्वृतः ११ तदुत्सवंसमाज्ञायययुर्लोकास्त्वरायुताः
[illegible]बालैःकनिष्ठलीभूतलोचनाः १२ राजेंद्रंसीतयासाकंगच्छंतंसरितंप्रति विलोक्यमुदितालोकाश्चिरदर्शनः
अनेकनटगंधर्वागायंतोयशउज्ज्वलम् अनुजग्मुर्मुनीशानंसर्वलोकनमस्कृतम् १४ नर्तक्यस्तत्रनृत्य

...र्मिनः जलयंत्रैश्च सिंचंत्योययुः श्रीरामसेवनम् १५ महाराजं विलोकंत्यो हरिद्राकुंकुमं स्त्रियः परस्परं प्रलिप-
...नूहत्तराम् १६ कुचयुग्मे परिन्यस्तमुक्ताहारसुशोभिताः श्रवणद्वंद्वसंमृष्टस्वर्णकुंडललसिताः १७ अनेकनरना-
...कीर्णं मार्गमाचरन् यथावत्सरितं प्राप शिवपुण्यजलाप्लुताम् १८ तत्र गत्वा स वैदेह्या रामः कमललोचनः प्रविवे
...शजलं पुण्यं वसिष्ठादिभिरन्वितः १९ अनुप्रविविशुः सर्वे राजानो जनतातया तत्पादरजसा पूतं जलं लोके कवंदितम्
२० परस्परं प्रसिंचंतो जलयंत्रैर्मनोरमैः सुशोणनयनाः सर्वे हर्षं प्रापुर्मनोधिकम् २१ स रामः सीतया सार्द्धं चिरं पुण्यज-
लप्लुवे क्रीडित्वा जलकल्लोलैर्निरगाद्धर्मसंयुतः २२ दुकूलवासाः सकिरीटकुंडलः केयूरशोभावरकंकणान्वितः कंदर्पको
टिश्रियमुद्वहन्नृपो राजा च सर्वैरुपसंस्तुतो बभौ २३ स याग वर्यं वरवर्णशोभितं कृत्वा सरित्तीरवरे महामनाः त्रैलोक्य
लोकश्रियमाप मद्भुतामन्यैर्दुरापां नृपतिर्भुजैर्निजैः २४ एवं जनकसत्पुत्र्या ह्ययमेधत्रयं चरत् त्रैलोक्ये कीर्तिरतुला प्रा-
मा देवैः सुदुर्लभा २५ एवं ते वर्णितं तात यत्पृष्टो रामसत्कथाम् विस्तृतः कथितो मेद्य भूयः किं पृच्छसे द्विज २६
यः शृणोति हरेर्भक्त्या रामचंद्रस्य सन्मुखम् ब्रह्महत्याक्षणात्तीर्त्वा ब्रह्म शाश्वतमाप्नुयात् २७ अपुत्रो लभते पुत्रान्निर्धनो
धनमाप्नुयात् रोगान्मुच्यते रोगार्तो बद्धो मुच्येत बंधनात् २८ यत्कथाश्रवणाद्दुष्टः सोपि याति परां गतिम् भ्राम्रो-
ति किमु विप्राग्र्य रामभक्तिपरायणः २९ रामस्मृत्वा महाभागपापिनः परमं पदम् प्राप्नुयुः परमं स्वर्गं शक्रदेवादिदुर्लभ-
म् ३० ते धन्या मानवा लोके ये स्मरंति रघूत्तमम् ते क्षणात्संसृतिं तीर्त्वा गच्छंति सुखमव्ययम् ३१ प्रत्येकमक्षरं ब्र-
ह्महत्यावंशदवानलः तयः श्रावयते धीमांस्तं गुरुं प्रतिपूजयेत् ३२ श्रुत्वा कथां वाचकाय गवां द्वंद्वं प्रदापयेत् सप
त्नीकाय संपूज्य वस्त्रालंकारभोजनैः ३३ कुंडलाभ्यां विराजंतं मुद्रिकाभिरलंकृतम् रामसीते स्वर्णमय्यौ प्रतिमे शो
भने वरे ३४ कृत्वानु वाचकायैव दीयते भो द्विजोत्तम तस्य देवाश्च पितरस्तुष्टा यच्छंति वांछितम् ... त्वया प्रष्ट

